# माध्यमिककक्षा - संस्कृतव्याकरणम् (२४६)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**प्रो. डॉ. अर्कनाथ-चौधरी (समितेः अध्यक्षः)**
उप-कुलपतिः
श्रीसोमनाथ-संस्कृत-विश्वविद्यालयः
वेरावल -३६२२६६ (गुर्जरप्रदेशः)

**डॉ. नीरजकुमारभार्गवः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. हरि-राम-मिश्रः**
सहायकप्राध्यापकः (संस्कृतविभागः)
जवाहरलाल-नेहरू-विश्वविद्यालयः
नवदेहली

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. विजेन्द्र-सिंहः**
वरिष्ठ-प्राध्यापकः (संस्कृतम्)
शिक्षानिदेशालयः, केन्द्रसर्वकारः, देहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्


**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## पाठलेखकाः


**(पाठः १-९)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १०-१४)**
**श्रीमान् जयदेवदिण्डा**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १५-१८)**
**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**(पाठः १९-२५)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २६-२९)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)


## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च


**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।

पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतव्याकरणस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतव्याकरणस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि –

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।<br>
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥<br>
दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।<br>
शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्॥<br>
स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।<br>
मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी॥

श्री संजय-कुमार-सिन्हा<br>
निदेशकः (शैक्षिकम्)<br>
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

संस्कृतव्याकरणस्य अध्ययनं सोपानक्रमेण भवति। अतः सोपानस्य प्रति पर्व आरोहणं क्रमेणैव कर्तव्यमिति इत्यतः पाणिनीयाम् अष्टाध्यायीं विद्वांसः भिन्नक्रमेणापि व्याख्यातवन्तः। सोऽयं प्रक्रियाक्रमः। तं क्रमम् अवलम्ब्य निर्मिता इयं सामग्री सोपनपर्वक्रमेणैव आयोजिता अस्ति। माध्यमिककक्षायां एकः भागः उच्चमाध्यमिककक्षायां च अवशिष्टः भागः वर्तते। एतेन पाणिनीयतन्त्रे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री पाणिनीयतन्त्रस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति। अस्य अध्ययनेन व्याकरणस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। सूत्राणि सूत्रव्याख्या, उदाहरणानि, उदाहरणेषु सूत्रस्य प्रवृत्तिः, रूपनिष्पत्तिश्च इति लक्ष्यलक्षणात्मकोऽयं व्याकरणप्रपञ्चः अत्र वर्तते।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥

भवत्कल्याणकामी

राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### सञ्ज्ञापरिभाषम्



### सन्धिप्रकरणम्



## पुस्तकम्- २

### सुबन्तप्रकरणम्



## पुस्तकम्- ३

### कारकविभक्त्यर्थप्रकरणम्



### उपपदविभक्त्यर्थप्रकरणम्



### कृदन्तप्रकरणम्

# संस्कृतव्याकरणम्

# माध्यमिककक्षा

## द्वितीयं स्वाध्यायसोपानम्

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|

### सुबन्तप्रकरणम्

# १०

# अजन्तपुंलिङ्गे अदन्तशब्दरूपाणि

## प्रस्तावना -

वयं मनोभावानां प्रकटनाय वाक्यानां प्रयोगं कुर्मः। वाक्यं च पदानां समूहो भवति। संस्कृतभाषायां पदस्य द्वौ भेदौ स्तः - १.सुबन्तपदं, २.तिङन्तपदं च। येषां शब्दानाम् अन्ते सुपः भवन्ति ते शब्दाः सुबन्ताः कथ्यन्ते। येषां च अन्ते तिङः भवन्ति ते तिङन्ताः कथ्यन्ते इति पूर्वमपि सुप्तिङन्तं पदमिति सूत्रे आलोचितमेव। तत्र सुपः प्रातिपदिकाद् भवन्ति। प्रातिपदिकशब्दाः च द्विविधाः १.अजन्तशब्दाः २.हलन्तशब्दाः इति भेदात्। येषां शब्दानाम् अन्ते अच् भवति ते अजन्ताः शब्दाः। येषां शब्दानाम् अन्ते हल् भवति ते हलन्ताः। तत्र लिङ्गभेदेन अजन्तशब्दाः हलन्तशब्दाश्च त्रिविधाः भवन्ति। तथाहि अजन्तपुंलिङ्गशब्दाः, अजन्तस्त्रीलिङ्गशब्दाः, अजन्तनपुंसकलिङ्गशब्दाः, हलन्तपुंलिङ्गशब्दाः, हलन्तस्त्रीलिङ्गशब्दाः, हलन्तनपुंसकलिङ्गशब्दाश्चेति। अस्मिन् पाठे अजन्तपुंलिङ्गशब्दानां रूपसाधनप्रक्रियाम् आलोचयामः।

सुप्-प्रत्ययाः प्रातिपदिकाद् भवन्ति। अतः प्रातिपदिकं किम् इति जिज्ञासा भवति। अतः भगवान् पाणिनिः प्रातिपदिकसंज्ञाविधायकं सूत्रद्वयं रचितवान्। प्रातिपदिकं व्युत्पन्नम् अव्युत्पन्नं च भवति। तत्र येषां शब्दानां व्याकरणप्रक्रियया प्रकृतिप्रत्ययादिविभागः कर्तुं शक्यते ते शब्दाः व्युत्पन्नाः। यथा पाचक इत्यादिशब्दाः। येषां शब्दानां व्याकरणप्रक्रियया प्रकृतिप्रत्ययादिविभागं कर्तुं न शक्यते ते शब्दाः अव्युत्पन्नाः। यथा चैत्र मैत्र इत्यादिशब्दाः। केचन च शब्दाः व्युत्पन्नाः अव्युत्पन्नाः च भवन्ति। यथा राम इत्यादयः।

## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- प्रातिपदिकस्य समीचीनं परिचयं प्राप्स्यति।
- सुबन्तशब्दानां स्वरूपं ज्ञास्यति।
- विभक्तेः परिचयं ज्ञात्वा पाणिनीयव्याकरणम् प्रवेष्टुम् पारयेत्।
- अकारान्तपुंलिङ्गशब्दानां रूपाणि ज्ञास्यति।
- रामशब्दस्य रूपसिद्धिं कर्तुं शक्ष्यति।
- सूत्रस्य व्याख्या कथं भवती इति ज्ञातुं शक्नुयात्।



- स्वयमपि सूत्रस्य व्याख्यां कर्तुं शक्नुयात्।
- लघुसूत्रस्य अर्थः कथं महान् भवति इति जानीयात्।

## [ १०.१] अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥ (१.२.४५)

**सूत्रार्थः** - धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवत् शब्दस्वरूपं प्रातिपदिकसंज्ञं भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण प्रातिपदिकसंज्ञा विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अर्थवत् अधातुः अप्रत्ययः प्रातिपदिकम् इति पदच्छेदः। प्रातिपदिकम् इति प्रथमैकवचनान्तं पदम्। अर्थवद् इति प्रथमैकवचनान्तं पदम्। अधातुः इति प्रथमैकवचनान्तं पदम्। अप्रत्ययः इत्यपि प्रथमैकवचनान्तं पदम्। शब्दस्वरूपम् इति विशेष्यपदस्य अध्याहारः भवति। अर्थोऽस्य अस्तीति अर्थवत्। न धातुः अधातुः इति नञ्तत्पुरुषसमासः। अस्य च धातुभिन्नम् इत्यर्थः। न प्रत्ययः इति अप्रत्ययः इति नञ्तत्पुरुषसमासः। अस्य च पदस्य आवृत्तिः क्रियते। तेन अप्रत्ययः अप्रत्ययः इति भवति। तत्र प्रथमस्य प्रत्ययभिन्नमित्यर्थः। द्वितीयस्य च प्रत्ययान्तभिन्नमित्यर्थः। एवम् सूत्रार्थो भवति - धातुभिन्नं प्रत्ययभिन्नं प्रत्ययान्तभिन्नं च यद् अर्थवत् शब्दस्वरूपं तत् प्रातिपदिकसंज्ञं भवति। अव्युत्पन्नशब्दानां प्रातिपदिकसंज्ञाविधायकं सूत्रमिदम्।

**उदाहरणम्** - अनेन सूत्रेण अव्युत्पन्नपक्षे दशरथपुत्रवाचकस्य रामशब्दस्य प्रातिपदकसंज्ञा भवति। रामशब्दः न धातुः नापि प्रत्ययः नापि प्रत्ययान्तः। परन्तु रामशब्दस्य अर्थः अस्ति। तस्मात् अर्थवत्त्वात् प्रत्ययभिन्नत्वात् प्रत्ययान्तभिन्नत्वात् धातुभिन्नत्वाच्च अनेन सूत्रेण प्रातिपदिकसंज्ञा भवति। तदा प्रातिपदिकसंज्ञकात् रामशब्दात् प्रथमादिविवक्षायां स्वादयः प्रत्ययाः भविष्यन्ति।

यदा च राम इत्यत्र रमुधातोः घञ्प्रत्यये कृते सति राम शब्दः सिध्यति। तदा अयं व्युत्पन्नः शब्दः। अस्मिन् पक्षे राम इति शब्दस्य घञ्-प्रत्ययान्तत्वात् पूर्वसूत्रेण प्रातिपदिकसंज्ञा भवितुं नार्हति। तदा द्वितीयं सूत्रं कृतं पाणिनिना।

## [ १०.२] कृत्तद्धितसमासाश्च॥ (१.२.४६)

**सूत्रार्थः** - कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अनेन सूत्रेण प्रातिपदिकसंज्ञा विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। कृत्तद्धितसमासाः च इति सूत्रगतपदच्छेदः। चेति अव्ययपदम्। अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यस्मात् सूत्रात् प्रातिपदिकम् इति प्रथमान्तं पदम् अनुवर्तते। तस्य प्रातिपदिकानि इति बहुवचनान्ततया विपरिणामः भवति। शब्दस्वरूपाणि इति बहुवचनान्तस्य अध्याहारः भवति। कृत्तद्धितसमासाः इति प्रथमाबहुवचनान्तं समस्तं पदम्। कृत् च तद्धितश्च समासश्च इति कृत्तद्धितसमासाः इति इतरेतरद्वन्द्वसमासः। कृत्तद्धितसमासाः शब्दस्वरूपाणि प्रातिपदिकसंज्ञकानि इति पदयोजना। सूत्रे कृत्तद्धितौ प्रत्ययौः भवतः। तस्मात् प्रत्ययग्रहणपरिभाषया तदन्तविधिः भवति। तेन कृदन्तः तद्धितान्तः इत्यर्थः लभ्यते। अतः कृदन्तं तद्धितान्तं समासः च यत् शब्दस्वरूपं तत् प्रातिपदिकसंज्ञकं भवति इत्यर्थलाभः। अर्थात् कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः इति।

**उदाहरणम् -** व्युत्पन्नपक्षे कृदन्तस्य उदारहणं तावत् राम इति। रमुधातोः घञ्प्रत्यये रामशब्दः निष्पद्यते। घञ्प्रत्ययः तिङ्भिन्नः कृदतिङ् इत्यनेन कृत्संज्ञकः। तस्मात् कृदन्तत्वात् रामशब्दस्य अनेन सूत्रेण प्रातिपदिकसंज्ञा भवति।

तद्धितान्तस्य उदारहणं तावत् दाशरथिः इति। दशरथशब्दात् इञ्-प्रत्ययः विहितः अस्ति। स च तद्धितसंज्ञकः अस्ति। तस्मात् दाशरथि इति शब्दः तद्धितान्तः। अतः दाशरथिशब्दस्य अनेन सूत्रेण प्रातिपदिकसंज्ञा भवति।

समासस्य उदारहणं तावत् राजपुरुष इति। राज्ञः पुरुषः इति विग्रहे समासे सति राजपुरुष इति निष्पद्यते। राजपुरुष इति समुदायः समासः। अतः राजपुरुषशब्दस्य अनेन सूत्रेण प्रातिपदिकसंज्ञा।

## [ १०.३] प्रत्ययः॥ (३.१.१)

**सूत्रार्थः -** आ पञ्चमाध्यायपरिसमाप्तेरधिकारोऽयम्।

**सूत्रव्याख्या -** इदम् अधिकारसूत्रम्। अस्मिन् एकं पदम् अस्ति। प्रत्ययः इति प्रथमान्तपदम्। तृतीयाध्यायस्य इदम् आदिमं सूत्रम्। पञ्चमाध्यायस्य समाप्तिं यावत् अस्य सूत्रस्य अधिकारः अस्ति। तेन अस्मात् सूत्रात् आरभ्य पञ्चमाध्यायस्य अन्तं यावत् ये विहिताः तेषां प्रत्ययसंज्ञा भवति इति अस्य सूत्रस्य अधिकारलभ्यः अर्थः। अर्थात् अस्य सूत्रस्य अधिकारे पठितेषु सूत्रेषु प्रत्ययः इति पदम् अधिक्रियते।

## [ १०.४] परश्च॥ (३.१.२)

**सूत्रार्थः -** आ पञ्चमाध्यायपरिसमाप्तेरधिकारोऽयम्।

**सूत्रव्याख्या -** इदम् अधिकारसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। परः च इति छेदः। परः इति प्रथमैकवचनान्तं पदम्। चेति अव्ययपदम्। तृतीयाध्यायस्य इदं द्वितीयं सूत्रम्। आपञ्चमाध्यायपरिसमाप्तेः अस्य सूत्रस्य अधिकारः विद्यते। तेन अस्य सूत्रस्य अधिकारे पठितेषु सूत्रेषु परः इति पदम् अधिक्रियते। अतः अस्मिन् अधिकारे पठितैः सूत्रैः यस्मात् प्रत्ययस्य विधानं भवति तस्मात् परमेव प्रत्ययाः भवन्ति इति सूत्रस्य तात्पर्यार्थः।

## [ १०.५] ङ्याप्प्रातिपदिकात्॥ (४.१.१)

**सूत्रार्थः -** आ पञ्चमाध्यायपरिसमाप्तेः इदम् अधिक्रियते। आ पञ्चमाध्यायपरिसमाप्तेः ये प्रत्ययाः विधीयन्ते ते ङ्यन्तात् आबन्तात् प्रातिपदिकात् परे एव स्युरिति सारः।

**सूत्रव्याख्या -** इदम् अधिकारसूत्रम्। अस्य सूत्रस्य पञ्चमाध्यायपरिसमाप्तिं यावत् अधिकारः विद्यते। अस्मिन् सूत्रे ङ्याप्प्रातिपदिकात् इति पञ्चम्यन्तम् एकं पदं वर्तते। ङी च आप् च प्रातिपदिकञ्च इति ङ्याप्प्रातिपदिकम् इति समाहारद्वन्द्वसमासः, तस्मात् ङ्याप्प्रातिपदिकात् इति। अनुबन्धरहितस्य ङी इत्यस्य ग्रहणात् ङी इत्यनेन ङीप्, ङीष्, ङीन् इति त्रयाणां स्त्रीप्रत्ययानां ग्रहणं भवति। अनुबन्धरहितस्य आप् इत्यस्य ग्रहणात् आप् इत्यनेन टाप्, डाप्, चाप् इत्येतेषां त्रयाणां स्त्रीप्रत्ययानां

ग्रहणं भवति। प्रत्ययग्रहणपरिभाषया तदन्तविधिना ङी इत्यनेन ङ्यन्तं किञ्च आप् इति अनेन आबन्तम् इत्यर्थः लभ्यते। अतः पञ्चमाध्यायपरिसमाप्तिं यावत् प्रतिसूत्रं ङ्यन्तात् आबन्तात् प्रातिपदिकात् इति पदत्रयम् अधिक्रियते इत्यर्थः।

## पाठगतप्रश्नाः-१

१. प्रातिपदिकसंज्ञाविधायकं सूत्रं किम् अस्ति।

२. कृतादिप्रत्ययान्तानां प्रातिपदिकसंज्ञाविधायकं सूत्रं किम्।

३. प्रत्ययः इति कीदृशं सूत्रम्।

४. प्रत्ययः इत्यस्य अधिकारः कियान् अस्ति।

५. ङ्याब्प्रातिपदिकात् इति कीदृशं सूत्रम्।

६. राम इत्यत्र प्रातिपदिकसंज्ञाविधायकं सूत्रं किम्।

## [ १०.६] स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्॥ (४.१.२)

**सूत्रार्थः** - ङ्यन्तादाबन्तात् प्रातिपतिकात् च पराः स्वादयः प्रत्ययाः भवन्ति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। एकपदात्मके अस्मिन् सूत्रे स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति प्रथमैकवचनान्तं पदम्। ङ्याप्प्रातिपदिकात् प्रत्ययः परश्च इति सूत्राणि अधिक्रियन्ते। तेन ङ्याप्प्रातिपदिकात् प्रत्ययः परश्च स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति पदयोजना। सुश्च औश्च जः च अम् च औट् च शश्च टा च भ्याञ्च भिश्च ङेश्च भ्याञ्च भ्यश्च ङसिश्च भ्याञ्च भ्यश्च ङश्च ओश्च आञ्च ङिश्च ओश्च सुप् च इति स्वौजसमौट्-छष्टाभ्यम्भिस्-ङेभ्याम्भ्यस्-ङसिभ्याम्भ्यस्-ङसोसाम्-ङ्योस्सुप् समाहारद्वन्द्वसमासः। ङ्याप्प्रातिपदिकात् इत्यत्र ङ्यापौ प्रत्ययौ। अतः प्रत्ययग्रहणपरिभाषया तदन्तविधिना ङ्यन्तात् आबन्तात् इति लभ्यते। सूत्रार्थो भवति - ङ्यन्तात् आबन्तात् प्रातिपदिकात् च स्वौजसमौट्-छष्टाभ्यम्भिस्-ङेभ्याम्भ्यस्-ङसिभ्याम्भ्यस्-ङसोसाम्-ङ्योस्सुप् प्रत्ययः परः भवति। अर्थात् यत् शब्दस्वरूपं ङीप्रत्ययान्तम् अस्ति, आप्-प्रत्ययान्तम् अस्ति, प्रातिपदिकमस्ति। तस्मात् प्रातिपदिकात् सु औ जस् अम् औट् शस् टा भ्याम् भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस् ङस् ओस् आम् ङि ओस् सुप् इति एते पराः भवन्ति। तेषां प्रत्ययसंज्ञा च भवति। सुः आदिः येषां ते स्वादयः। एते एकविंशतिः प्रत्ययाः स्वादयः इति उच्यन्ते।



सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी। अत्र प्रथमा इत्यादिसंज्ञाः पाणिनिना स्वयं विहिताः। तथापि पूर्वाचार्याणां व्यवहारात् तथा स्वीक्रियन्ते।

**उदाहरणम् -** अव्युत्पन्नपक्षे रामशब्दः अर्थवान्। अतः अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदकसंज्ञा भवति। व्युत्पन्नपक्षे तु रामशब्दः घञन्तः। अतः कृदन्तः। अतः कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञकः भवति। अतः प्रत्ययः परश्च ङ्याप्प्रातिपदिकात् इति सूत्रत्रयमधिकृत्य स्वौजसमौट्-छष्टाभ्याम्भिस्-ङेभ्याम्भ्यस्-ङसिभ्याम्भ्यस्-ङसोसाम्-ङ्योस्सुप् इति एकविंशतिः प्रत्ययाः प्राप्ताः।

अत्र रामशब्दात् परम् एकविंशतिः प्रत्ययाः प्रकृतसूत्रेण विधीयन्ते। ते च रामशब्दात् अव्यवहितपरम् एव निवेशनीयाः। रामशब्दात् परम् एकदा एक एव प्रत्ययः निवेशयितुं शक्यः। एककालम् एकविंशतिः प्रत्ययाः किञ्च अव्यवहितपराः इति नैव सम्भवति। अतः युगपत् एकविंशतिः प्रत्ययाः प्रयोक्तुं न शक्यन्ते, परन्तु एकैकः पर्ययेण प्रयोक्तुं शक्यते। तदा कः प्रत्ययः कस्मै प्रयोजनाय प्रयोक्तव्यः इति विवेकाय अग्रिमाणि सूत्राणि आयान्ति।

## [ १०.७] सुपः॥ (१.४.१०२)

**सूत्रार्थः -** सुपस्त्रीणि त्रीणि वचनानि एकशः एकवचनद्विवचनबहुवचनसंज्ञानि स्युः।

**सूत्रव्याख्या -** इदं संज्ञासूत्रम्। अस्मिन् सूत्रे एकं पदं विद्यते। सुपः इति षष्ठ्येकवचनान्तं पदम्। अस्मिन् सूत्रे तान्येकवचनद्विवचनबहुवचनान्येकशः इत्यस्मात् सूत्रात् एकवचनद्विवचनबहुवचनानि (१/३), एकशः (अव्ययम्) इति द्वे पदे अनुवर्तेते। तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इत्यस्मात् सूत्रात् त्रीणि (१/३) त्रीणि (१/३) इति पदे अनुवर्तेते। एकवचनं, द्विवचनं, बहुवचनञ्चेति एकवचनद्विवचनबहुवचनानि इति इतरेतरयोगद्वन्द्वसमासः। सुपः त्रीणि त्रीणि एकशः एकवचनद्विवचनबहुवचनसंज्ञानि इति पदयोजना। एकशः इत्यस्य प्रत्येकमित्यर्थः। सुपः इत्यत्र सुप् इति प्रत्याहारः स्वौजसमौट् इत्यादिसूत्रे सु इत्यतः आरभ्य सुपः पकारपर्यन्तम्। सूत्रार्थो भवति - एकविंशतेः सुपां प्रत्यायानां प्रथमादिसप्तम्यन्तत्रिकाणां क्रमात् एकवचनद्विचनबहुवचनसंज्ञा भवति। अर्थात् सु औ जस् त्रयः। तेषु सु इति प्रथमस्य एकवचनम्, औ इति द्वितीयस्य द्विवचनम्, जस् इति तृतीयस्य बहुवचनम् इति संज्ञा भवति। एवम् अग्रेऽपि।

अधुना प्रातिपदिकसंज्ञकात् रामशब्दात् स्वादित्रिके प्राप्ते-

## [ १०.८] द्व्येकयोर्द्विचनैकवचने॥ (१.४.२२)

**सूत्रार्थः -** द्वित्वैकत्वयोः एते द्विवचनैकवचने स्तः।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण एकवचनद्विचवने विधीयेते। द्विपदात्मकेस्मिन् सूत्रे द्व्येकयोः द्विवचनैकवचने इति छेदः। द्व्येकयोः इति सप्तमीद्विवचनान्तं पदम्। द्वौ च एकश्च इति द्व्येकौ तयोः द्व्येकयोः इति इतरेतरयोगद्वन्द्वसमासः। द्वित्वे एकत्वे इति तदर्थः। द्विवचनैकवचने इति प्रथमाद्विवचनान्तं पदम्। द्विवचनं च एकवचनं च द्विवचनैकवचने इतीतरेतरयोगद्वन्द्वसमासः। तेन द्वित्वे

 

एकत्वे द्विवचनम् एकवचनम् इति संग्रहः। अनेन अस्य सूत्रस्य अर्थः भवति द्वित्वे विवक्षिते द्विवचनम् एकत्वविवक्षिते एकवचनम् च स्तः इति। अर्थात् यदा द्वित्वसंख्यायाः विवक्षा भवति तदा द्विवचनं भवति। यदा च एकत्वसंख्यायाः विवक्षा भवति तदा एकवचनं भवति।

**उदाहरणम्-** एकत्वे एकवचनस्य उदारहणं तावत् रामः इति। प्रातिपदिकसंज्ञकात् रामशब्दात् प्रथमैकवचनविवक्षायां प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात् इत्यधिकारे पठितेन स्वौजसमौट्छष्टाभ्यम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इत्यनेन सुप्रत्यये सुप्रत्ययावयवस्य उकारस्य पाणिनीयैः प्रतिज्ञातस्य उपदेशे विद्यमानस्य अनुनासिकस्य उपदेशेजनुनासिक इत् सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन लोपे रामस् इत्यस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन पदसंज्ञायां ससजुषो रुः इत्यनेन पदान्तस्य सस्य रुत्वे रोरुकारस्य पाणिनीयैः प्रतिज्ञातस्य उपदेशे विद्यमानस्य अनुनासिकस्य उपदेशेजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन अदर्शनाभिन्ने लोपे रामर् इति जाते रेफोच्चारणात् परं वर्णोच्चारणाभावेन तदभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञा भवति। तदा तस्मिन् अवसाने परे खरवसानयोर्विसर्जनीयः इत्यनेन रेफस्य विसर्गे रामः इति रूपम्।

प्रातिपदिकसंज्ञकात् रामशब्दात् प्रथमाद्विवचनविवक्षा भवति। परन्तु सकृदुच्चारितशब्दः सकृदेवार्थं गमयति इति नियमः अस्ति। अपि च प्रत्येकं शब्दाभिनिवेशः इति भाष्ये उक्तम्। अर्थात् एकः उच्चारितः शब्दः एकमेव अर्थम् अवगमयति। प्रत्येकस्य अर्थस्य कृते पृथक् पृथक् शब्दः देयः। तस्मात् रामशब्दात् प्रथमाद्विवचनविवक्षायां रामशब्दः वारद्वयम् उच्चारणीयः। अतः रामशब्दे द्विः प्रयुक्ते स्वौजसमौट्-छष्टाभ्यम्भिस्-ङेभ्याम्भ्यस्-ङसिभ्याम्भ्यस्-ङसोसाम्-ङ्योस्सुप् इति सूत्रेण औप्रत्यये राम राम औ इति स्थिते-

## [ १०.९] सरूपाणामेकशेष एकविभक्तौ (१.२.६४)

**सूत्रार्थः -** एकविभक्तौ यानि स्वरूपाण्येव दृष्टानि तेषामेक एव शिष्यते।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। सरूपाणाम् एकशेषः एकविभक्तौ इति सूत्रगतपदच्छेदः। सरूपाणाम् इति षष्ठ्येकवचनान्तं पदम्। समानं रूपं येषां ते स्वरूपाः, तेषां सरूपाणाम् इति बहुव्रीहिसमासः। एकशेषः इति प्रथमायाः एकवचनम्। एकश्चासौ शेषश्च इति एकशेषः इति कर्मधारयसमासः। एकविभक्तौ इति सप्तम्येकवचनान्तं पदम्। एका चासौ विभक्तिश्च एकविभक्तिः तस्याम् इति एकविभक्तौ इति कर्मधारयसमासः, समानविभक्तौ इत्यर्थः। 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' इत्यस्मात् सूत्रात् एव इति अव्ययपदम् अनुवर्तते। एकविभक्तौ सरूपाणाम् एकः एव शेषः इति पदयोजना। तेन एकस्मिन् विभक्तौ समानरूपाणां शब्दानाम् एकः एव अवशिष्यते अन्ये लुप्यन्ते इत्यर्थो लभ्यते।

**उदारहणम्-** रामौ।



**सूत्रार्थसमन्वयः-** प्रातिपदिकसंज्ञकात् रामशब्दात् प्रथमाद्विवचनविवक्षायां प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात् इत्यधिकारे पठितेन ङ्यन्तात् आबन्तात् प्रातिपदिकात् च स्वौजसमौट्-छष्टाभ्यम्भिस्-ङेभ्याम्भ्यस्-ङसिभ्याम्भ्यस्-ङसोसाम्-ङ्योस्सुप् इत्यनेन सूत्रेण एकविंशतिः प्रत्ययाः प्राप्नुवन्ति। ततः सुपः इत्यनेन सूत्रेण सप्तानाम् अपि त्रिकाणां क्रमात् एकचवन-द्विवचन-बहुवचनसंज्ञा भवति। ततः प्रथमायाः द्विवचनविवक्षायां द्व्येकयोर्द्विवचनैकवचने इत्यनेन द्विवचनसंज्ञके औप्रत्यये राम राम औ इति भवति। ततः सरूपाणामेकशेष एकविभक्तौ इत्यनेन सूत्रेण समानविभक्तौ सरूपाणाम् एकशेषे राम औ इति स्थितिः जायते। अकारात् परम् एच् औकारः अस्ति। तेन आद् एचि परे वृद्धिरेचि इत्यनेन सूत्रेण अकारौकारयोः वृद्धिः प्राप्ता। तां प्रबाध्य प्रथमयोः पूर्वसवर्णः इत्यनेन सूत्रेण अकः प्रत्याहारात् प्रथमाद्वितीययोः अचि परे पूर्वपरयोः स्थाने पूर्ववर्णस्य अकारस्य सवर्णदीर्घे आकरः प्राप्तः। तस्य नादिचि इत्यनेन सूत्रेण अवर्णाद् इचि प्रत्याहारे परे पूर्ववर्णस्य अकारस्य दीर्घनिषेधः भवति। ततः पुनः वृद्धिरेचि इत्यनेन पूर्वपरयोः वृद्धौ एकादेशे औकारे रामौ सिद्ध्यति।

**विशेषव्याख्या-** समानविभक्तिषु यदि समानानि रूपाणि भवन्ति तदैव अस्य सूत्रस्य प्रवृत्तिः भवति, अन्यथा न भवति। यथा मातृशब्दौ द्वौ स्तः। एकश्च मातृशब्दः जननीवाचकः। यस्य रूपाणि भवन्ति माता, मातरौ, मातरः, मातरं, मातरौ मातॄ इत्यादीनि। अपरश्च परिमाणवाचकः मातृशब्दः अस्ति। यस्य रूपाणि भवन्ति माता, मातारौ, मातारः, मातारं, मातारौ, मातॄन् इत्यादीनि। एतयोः द्वयोरपि मातृशब्दयोः द्वन्द्वसमासे तु एकशेषः न भवति। कारणं हि जननीवाचकस्य मातृशब्दस्य औविभक्त्यां मातरौ इति भवति। किञ्च परिमाणवाचकस्य मातृशब्दस्य औविभक्त्यां मातारौ इति भवति। एतयोः शब्दयोः समानविभक्तिषु औ-इत्यादिषु समानरूपाणि न भवन्ति। अतः एतयोः एकशेषः न भवति।

## पाठगतप्रश्नाः-२

७. स्वौजस... इति सूत्रं व्याख्यात।

८. स्वादिप्रत्ययविधायकं सूत्रं किम्।

९. विभक्तिसंज्ञाविधायकं सूत्रं किम्।

१०. एकवचनसंज्ञाविधायकं सूत्रं किम्।

११. सरूपाणामेकशेष एकविभक्तौ इति सूत्रस्य अर्थं लिखत।

१२. सुपः इति सूत्रस्य अर्थं लिखत।

## [ १०.१० ] बहुषु बहुवचनम्॥ (१.४.२१)

**सूत्रार्थः** - बहुत्वविवक्षायाम् बहुवचनं भवति।



**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। बहुषु इति सप्तमीबहुवचनान्तं पदम्। अस्य च बहुत्वविवक्षायाम् इत्यर्थः। बहुवचनम् इति प्रथमैकवचनान्तं पदम्। अतः सूत्रार्थः भवति- बहुत्वसंख्यायाः विवक्षायां बहुवचनं भवति इति। बहु नाम द्वाभ्याम् अधिकम्।

**उदाहरणम्-** रामाः।

रामशब्दात् प्रथमाबहुवचनविवक्षायां बहुषु बहुवचनम् इति सूत्रसहायेन स्वौजसमौट्-छष्टाभ्यम्भिस्-ङेभ्याम्भ्यस्-ङसिभ्याम्भ्यस्-ङसोसाम्-ङ्योस्सुप् इत्यनेन सूत्रेण जस्प्रत्ययः भवति। तेन राम राम राम जस् इति तिष्ठति। ततः 'सरूपाणामेकशेषः एकविभक्तौ' इत्यनेन सूत्रेण एकविभक्तौ सरूपाणाम् एकशेषे राम जस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते-

## [ १०.११] चुटू॥ (१.३.७)

**सूत्रार्थः -** प्रत्ययाद्यौ चुटू इतौ स्तः।

**सूत्रव्याख्या-** इदं संज्ञासूत्रम्। अस्मिन् सूत्रे एकं पदं विद्यते। चुटू इति प्रथमाद्विवचनान्तं पदम्। 'षः प्रत्ययस्य' इत्यस्मात् सूत्रात् प्रत्ययस्य इति षष्ठ्यन्तं पदम् अनुवर्तते। 'आदिर्ञिटुडवः' इत्यस्मात् सूत्रात् आदिः इति प्रथमान्तं पदम् अनुवर्तते। 'उपदेशेऽजनुनासिक इत्' इत्यस्मात् सूत्रात् इत् इति प्रथमान्तं पदम् अनुवर्तते। प्रत्ययस्य आदिः चुटू इत् इति पदयोजना। चुश्च टुश्च इति चुटू इति इतरेतरद्वन्द्वयोगसमासः। चुः इत्यनेन चवर्गीयः टुः इत्यनेन टवर्गीयः विवक्षितः। आदिः इति चुटू इत्यत्र द्विवचनान्ततया अन्वेति। इत् इत्यपि द्विवचनान्ततया चुटू इत्यनेन अन्वेति। अतः सूत्रस्यार्थः भवति- प्रत्ययस्य आदी चुटू इतौ भवतः इति। अर्थात् प्रत्ययस्य आदौ यदि चवर्गः टवर्गः वा भवति तर्हि तेषाम् इत्संज्ञा भवति इति।

**उदाहरणम्-** रामशब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये राम जस् इति स्थितिः जायते। जस् इति प्रत्ययः अस्ति तस्य जकारः आदिः अस्ति। किञ्च चवर्गस्थः वर्णः अस्ति। तेन अनेन सूत्रेण तस्य इत्संज्ञा भवति। ततः 'तस्य लोपः' इत्यनेन लोपे राम अस् इति तिष्ठति। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १०.१२] विभक्तिश्च॥ (१.४.१०३)

**सूत्रार्थः -** सुप्तिङौ विभक्तिसंज्ञौ स्तः।

**सूत्रव्याख्या-** इदं संज्ञासूत्रम्। द्विपदात्मकमिदं सूत्रम्। विभक्तिः च इति सूत्रगदपदच्छेदः। विभक्तिः इति प्रथमैकवचनान्तं पदम्। चेति अव्ययपदम्। सुपः इति सम्पूर्णं षष्ठ्यन्तं सूत्रम् अनुवर्तते। तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इत्यस्मात् सूत्रात् तिङः इति षष्ठ्यन्तम् अनुवर्तते। सुपः तिङः विभक्तिसंज्ञा इति सूत्रार्थः जायते। एवञ्च सूत्रेण अनेन एकविंशतेः सुपां अष्टादशानां तिङां च विभक्तिसंज्ञा भवति इत्यर्थो लभ्यते।

**विशेषविचारः-** तत्र सु औ जस् इत्यादीनां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञाः। पाणिनेः पूर्ववर्तिनः आचार्याः व्याकरणे व्यवहाराय एतेषां प्रथमादिसंज्ञां कृतवन्तः। तानि एव नामानि एत्र

व्यवह्रियन्ते। अर्थात् सु-औ-जस् इत्येतेषां प्रथमाविभक्तिः अम्-औट्-शस् इत्येतेषां द्वितीयाविभक्तिः, टा-भ्याम्-भिस् इत्येतेषां तृतीयाविभक्तिः, ङे-भ्याम्-भ्यस् इत्येतेषां चतुर्थीविभक्तिः, ङसि-भ्याम्-भ्यस् इत्येतेषां पञ्चमीविभक्तिः, ङस्-ओस्-आम् इत्येतेषां षष्ठीविभक्तिः, ङि-ओस्-सुप् इत्येतेषां सप्तमीविभक्तिः इत्यादीनि नामानि भवन्ति।

**उदाहरणम्-** रामशब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे राम अस् इति स्थितिः जायते। राम अस् इत्यत्र जस् इति सुप्प्रत्ययः अस्ति। अतः प्रकृतसूत्रेण तस्य विभक्तिसंज्ञा भवति। अधुना जस्प्रत्ययस्य अन्त्यस्य सकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा प्राप्ता। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १०.१३] न विभक्तौ तुस्माः॥ (१.३.४)

**सूत्रार्थः** - विभक्तिस्थाः तवर्गसकारमकाराः इत्संज्ञकाः न भवन्ति।

**सूत्रव्याख्या-** इदं निषेधविधायकं सूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। नेति अव्ययपदम्। विभक्तौ इति सप्तम्येकवचनान्तं पदम्। तुस्माः इति प्रथमबहुवचनान्तं पदम्। उपदेशेऽजनुनासिक इत् इत्यस्मात् सूत्रात् इत् इति प्रथमान्तं पदम् अनुवर्तते। विभक्तौ तुस्माः न इत् इति पदयोजना। तुश्च स् च म् च इति तुस्माः इतरेतरयोगद्वन्द्वसमासः। तुः इत्यनेन तवर्गीयः विवक्षीतः। इत् इति पदं बहुवचनान्ततया तुस्माः इत्यनेन अन्वेति। विभक्तौ इत्यस्य च विभक्तिस्थाः इत्यर्थः। तेन अस्य सूत्रस्य अर्थः भवति- विभक्तिषु विद्यमानानां तवर्गस्थवर्णानां, सकारस्य मकारस्य च इत्संज्ञा न भवति इति। अनेन सूत्रेण विभक्तिसंज्ञकानां जस्, अम्, शस्, भ्याम्, भ्यस्, ङस्, ओस्, आम् इत्येतेषां सकारमकारयोः या इत्संज्ञा हलन्त्यम् इत्यनेन प्राप्ता तस्याः निषेधः भवति।

**उदाहरणम्-** रामाः।

**सूत्रार्थसमन्वयः-** राम अस् इत्यत्र 'हलन्त्यम्' इत्यनेन मकारस्य इत्संज्ञा प्राप्नोति। तस्याः अनेन सूत्रेण निषेधः भवति। तेन राम अस् इति तिष्ठति। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १०.१४] अतो गुणे॥ (६.१.९७)

**सूत्रार्थः** - अपदान्ताद् अकाराद् गुणे परे पररूपम् एकादेशः भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं विद्यते। अतः गुणः इति सूत्रगतपदच्छेदः। अतः इति पञ्चम्येकचवनान्तं पदम्। गुणे इति सप्तम्येकवचनान्तं पदम्। 'एङि पररूपम्' इत्यस्मात् पररूपम् इति प्रथमान्तं पदम् अनुवर्तते। 'उस्यपदान्तात्' इत्यस्मात् सूत्रात् पदान्तात् इति पञ्चम्यन्तं पदम् अनुर्वतते। 'एकः पूर्वपरयोः' इति अधिक्रियते। अपदान्तात् अतः गुणे पूर्वपरयोः पररूपमेकादेशः इति सूत्रान्वयः। गुणशब्दः अत्र पारिभाषिकः। तेन अदेङ् गुणः इति सूत्रे अकारैकारौकाराणां च संज्ञा। तेन अस्य सूत्रस्य पदान्तभिन्नाद् अकारात् परे यदि गुणः तिष्ठति तर्हि पूर्वपरयोः पररूपम् एकादेशः भवति इति अर्थः समायाति।

**उदाहरणम्-** रामाः।

**सूत्रार्थसमन्वयः**- रामशब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे राम अस् इति स्थितिः जायते। अत्र रामशब्दस्य अन्ते अकारः अस्ति। तस्मात् रामशब्दः अदन्तः अस्ति। ततः परं गुणः अकारः अस्ति। अतः अदन्तात् रामशब्दात् गुणे परे अतो गुणे इत्यनेन पूर्वपरयोः पररूपैकादेशः प्राप्नोति। परन्तु अतो गुणे इत्यस्य अपवादत्वेन प्रथमयोः पूर्वसवर्णः इत्यनेन एकादेशं प्रबाध्य पूर्वसवर्णदीर्घे रामास् इति स्थितिः भवति। ततः समुदायस्य सुबन्तत्वेन पदसंज्ञा भवति। ततः ससजुषो रुः इत्यनेन सकारस्य रुत्वे रोः उकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञा भवति। ततः तस्य लोपः इत्यनेन लोपे रामार् इति जाते रेफोच्चारणात् परं वर्णोच्चारणाभावेन तदभावस्य विरामोवसानम् इत्यनेन अवसानसंज्ञायां तस्मिन् परे खरवसानयोर्विसर्जनीयः इत्यनेन रेफस्य विसर्गे रामाः इति रूपम्।

## [ १०.१५] एकवचनं सम्बुद्धिः॥ (२.३.४९)

**सूत्रार्थः** - सम्बोधने प्रथमायाः एकवचनं सम्बुद्धिसंज्ञं भवति।

**सूत्रव्याख्या**- इदं संज्ञासूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। एकवचनम् इति प्रथमैकवचनान्तं पदम्। सम्बुद्धिः इत्यपि प्रथमायाः एकवचनम्। सम्बोधने च इत्यस्मात् सूत्रात् सम्बोधने इति सप्तम्यन्तं पदम् अनुवर्तते। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इत्यस्मात् सूत्रात् प्रथमा इति प्रथमान्तं पदम् अनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणम्यते। सम्बोधने प्रथमायाः एकवचनम् सम्बुद्धिः इति पदयोजना। तेन सम्बोधने प्रथमयाः एकवचनस्य सम्बुद्धिसंज्ञा भवति इत्यर्थो लभ्यते।

**उदारहणम्**- रामशब्दस्य सम्बोधने प्रथमायाः एकवचनविवक्षायां सुब्विभक्तौ अनुबन्धलोपे हे राम स् इति जाते सुविभक्तेः अनेन सूत्रेण सम्बुद्धिसंज्ञा भवति। ततः सकारोत्तरस्य उकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञायां, तस्य लोपः इत्यनेन तस्य लोपे हे राम स् इति भवति। अत्र सुप्रत्ययः रामशब्दात् विहितः, तस्मात् सुप्रत्यये परे तदादिशब्दस्वरूपस्य राम इत्यस्य यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति सूत्रेण अङ्गसंज्ञा भवति। अङ्गसंज्ञायाः उपयोगिता तु अग्रिमे सूत्रे प्रदर्श्यते।

## पाठगतप्रश्नाः-३

१३. बहुवचनसंज्ञाविधायकं सूत्रं किम्।

१४. चुटू इति सूत्रस्य अर्थं लिखत।

१५. न विभक्तौ तुस्माः इति सूत्रार्थं लिखत।

१६. अतो गुणे इति सूत्रार्थं लिखत।

१७. सम्बुद्धिसंज्ञाविधायकं सूत्रं लिखत।

१८. अङ्गसंज्ञाविधायकसूत्रं किम्।

टिप्पणी



## [ १०.१६] एङ्ह्रस्वात्सम्बुद्धेः॥ (६.१.६७)

**सूत्रार्थः** - एङन्ताद् ह्रस्वान्तात् च अङ्गाद् हल् लुप्यते सम्बुद्धेश्चेद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं विद्यते। एङ्ह्रस्वात् सम्बुद्धेः इति सूत्रगतपदच्छेदः। एङ्ह्रस्वात् इति पञ्चम्येकवचनान्तम्। सम्बुद्धेः इति षष्ठ्यैकवचनान्तम्। हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल् इत्यस्मात् सूत्रात् हल् इति प्रथमान्तं पदम् अनुवर्तते। लोपो व्योर्वलि इत्यस्मात् सूत्रात् लोपः इति प्रथमान्तं पदम् अनुवर्तते। अङ्गस्य इति अधिक्रियते। तेन एङ्ह्रस्वात् अङ्गस्य सम्बुद्धेः हल् लोपः इति पदयोजना। एङ् च ह्रस्वश्च इति एङ्ह्रस्वम्, तस्मात् एङ्ह्रस्वात् इति इतरेतरयोगद्वन्द्वसमासः। अङ्गस्य इति पदं पञ्चम्यन्ततया विपरिणम्यते। एङ्ह्रस्वात् इति अङ्गस्य विशेषणम्। अतः 'येन विधिस्तदन्तस्य' इत्यनेन तदन्तविधिना एङन्तात् ह्रस्वान्तात् इत्यर्थलाभः। एवञ्च अस्य सूत्रस्य अर्थो भवति एङन्तात् ह्रस्वान्तात् च अङ्गाद् हल् लुप्यते संबुद्धेश्चेत् इति। अर्थात् एङन्तप्रातिपदिकात् ह्रस्वान्तप्रातिपदिकात् च परे यः सम्बुद्धिसंज्ञकः हल् विद्यते तस्य अनेन सूत्रेण लोपः भवति।

**उदाहरणम्-** हे राम।

**सूत्रार्थसमन्वयः-** रामशब्दात् सम्बोधनैकवचनस्य विवक्षायां सुप्रत्यये अनुबन्धलोपे राम स् इति स्थितिः। अत्र सुपः सकारः सम्बुद्धिसंज्ञकः हल् किञ्च ह्रस्वान्तात् अङ्गात् परम् अस्ति। तस्मात् अनेन सूत्रेण सकारस्य लोपे हे राम इति रूपम्। सम्बोधनस्य द्विवचनबहुवचने सम्बुद्धिसंज्ञके न स्तः। तस्मात् अनयोः सुप्रत्यययोः लोपः न भवति। तेन पूर्ववत् हे रामौ, हे रामाः इति भवतः।

## [ १०.१७] अमि पूर्वः॥ (६.१.१०३)

**सूत्रार्थः.-** अकः अमि अचि परे पूर्वरूपम् एकादेशः स्यात्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। अमि इति सप्तम्याः एकवचनम्। पूर्वः इति प्रथमैकवचनान्तं पदम्। अकः सवर्णे दीर्घः इत्यस्मात् सूत्रात् अकः इति पञ्चम्यन्तं पदम् अनुवर्तते। इको यणचि इत्यस्मात् सूत्रात् अचि इति सप्तम्यन्तं पदम् अनुवर्तते। एकः पूर्वपरयोः इति सूत्रम् अधिक्रियते। अकः अमि अचि पूर्वपरयो पूर्वः इति पदयोजना। अत्र अकः अम् इति द्वौ प्रत्याहारौ। अम् इति विभक्तिः। तेन अस्य सूत्रस्य अर्थो भवति अक्प्रत्याहारात् परं यदि अम्प्रत्ययस्य अच् तिष्ठति तर्हि पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशः भवति।

**उदाहरणम्-** रामम्।

**सूत्रार्थसमन्वयः-** रामशब्दात् द्वितीयैकवचनस्य विवक्षायां अमप्रत्यये अनुबन्धलोपे राम अम् इति जातम्। राम अम् इत्यत्र अम्प्रत्ययस्य विभक्तिश्च इत्यनेन विभक्तिसंज्ञा भवति। ततः मकारस्य हलन्त्यमिति सूत्रेण इत्संज्ञा प्राप्नोति। तस्याः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। ततः राम् अम् इति स्थितिः। रामशब्दस्य अन्तिमवर्णः अकारः। स च अक्प्रत्याहारे विद्यते। किञ्च अकारात् परं अमः अच् अकारः अस्ति। तस्मात् अनेन सूत्रेण पूर्वपरयोः स्थाने पूर्वरूपैकादेशे अकारे रामम् इति रूपं भवति।



रामशब्दस्य द्वितीयायाः द्विवचनविवक्षायाम् औट्प्रत्यये टकारस्य हलन्त्यम् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे, आद् एचि परे वृद्धिरेचि इत्यनेन सूत्रेण अकारौकारयोः वृद्धौ प्राप्तायां प्रथमयोः पूर्वसवर्णः इत्यनेन सूत्रेण सवर्णदीर्घे आकारे प्राप्ते नादिचि इत्यनेन सूत्रेण अस्य अकारस्य दीर्घनिषेधे पुनः वृद्धिरेचि इत्यनेन पूर्वपरयोः वृद्धौ एकादेशे औकारे रामौ सिद्ध्यति।

## [ १०.१८] लशक्वतद्धिते॥ (१.३.८)

**सूत्रार्थः** - तद्धितवर्जप्रत्ययाद्याः लशकवर्गा इतः भवन्ति।

**सूत्रव्याख्या-** इदं संज्ञासूत्रम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। लशकु अतद्धिते इति सूत्रगतपदच्छेदः। लशकु इति प्रथमायाः एकवचनम्। अतद्धिते इति सप्तम्येकवचनान्तं पदम्। आदिर्ञिटुडवः इत्यस्मात् सूत्रात् आदिः इति प्रथमान्तं पदम् अनुवर्तते। षः प्रत्ययस्य इत्यस्मात् सूत्रात् प्रत्ययस्य इति षष्ठ्यन्तं पदम् अनुवर्तते। उपदेशेऽजनुनासिक इत् इत्यस्मात् सूत्रात् इत् इति प्रथमान्तं पदम् अनुवर्तते। तेन प्रत्ययस्य आदिः लशकु इत् इति पदयोजना। लश्च शश्च कुश्च इति लशकु समाहारद्वन्द्वसमासः। अतद्धिते इति सप्तम्याः एकवचनम्। न तद्धितः अतद्धितः, तस्मिन् अतद्धिते इति नञ्तत्पुरुषसमासः। तस्य च तद्धितभिन्नस्थाः इत्यर्थः। इत् इति पदं बहुवचनान्ततया विपरिणम्यते। तेन तद्धितभिन्नप्रत्ययाद्याः लशकर्गा इतः भवन्ति इति सूत्रार्थः समायाति।

**उदाहरणम्-** राम् शस् इत्यत्र शस्प्रत्ययः तद्धितसंज्ञकः न भवति। किञ्च प्रत्ययाद्यः शकारः अस्ति। तस्मात् लशक्वतद्धिते इत्यनेन सूत्रेण प्रत्ययादेः शकारस्य इत्संज्ञायायां तस्य लोपः इत्यनेन तस्य लोपे राम अस् इति स्थिते प्रथमयोः पूर्वसवर्णः इत्यनेन सूत्रेण पूर्वसर्वर्णदीर्घे आकारे रामास् इति भवति। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १०.१९] तस्माच्छसो नः पुंसि॥ (६.१.९९)

**सूत्रार्थः** - कृतपूर्वसवर्णदीर्घात् परो यः शसः सकारः तस्य नकारः भवति पुंलिङ्गे।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे चत्वारि पदानि विद्यन्ते। तस्मात् शसः नः पुंसि इति सूत्रगतपदच्छेदः। तस्मात् इति पञ्चम्याः एकवचनम्। शसः इति षष्ठ्याः एकवचनम्। नः इति प्रथमायाः एकवचनम्। पुंसि इति सप्तम्येकवचनम्। तस्य च पुंलिङ्गविषये इत्यर्थः। तस्मात् इत्यत्र तच्छब्दः पूर्वकार्यस्य बोधकः भवति। अतः अस्मात् सूत्रात् पूर्वं प्रथमयोः पूर्वसवर्णः इति सूत्रम् अस्ति। तेन सूत्रेण पूर्वपरयोः पूर्वसर्वर्णदीर्घरूपं कार्यं भवति। प्रकृतसूत्रे तच्छब्देन पूर्वसर्वर्णदीर्घरूपं कार्यमेव विवक्षितम्। शसः इति पदं षष्ठ्यन्तम् अल्समुदायबोधकम्। अर्थात् शसः इति पदस्य अर्थः केवलम् एक एव वर्णः इति न, अपि तु वर्णसमुदायः इति। अनुयोगिविरहात् तत्र या षष्ठी सा स्थानषष्ठी अस्ति। अपि च यः आदेशः सः नकारः अस्ति। अतः अलोन्त्यस्य इति परिभाषायाः सञ्चारेण सूत्रस्य अस्य अर्थो भवति- पूर्वसवर्णदीर्घात् परः यः शसः अन्त्यः अल् सकारः तस्य नकारः भवति पुंलिङ्गविषये इति।

**उदाहरणम्-** रामशब्दः पुंलिङ्गे अस्ति। रामशब्दस्य द्वितीयाबहुवचने राम अस् इत्यत्र अकारस्य पूर्वसवर्णदीर्घः जातः। तस्मात् अनेन सूत्रेण सकारस्य नकारादेशे रामान् इति जातम्। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १०.२० ] अट्कुप्वाङ्नुम्व्यवायेऽपि॥ (८.४.२)

**सूत्रार्थः** - अट् कवर्गः पवर्गः आङ् नुम् च एतैः व्यस्तैः यथासम्भवं मिलितैश्च व्यवधाने अपि रषाभ्यां परस्य नस्य णः भवति समानपदे।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। अट्कुप्वाङ्नुम्व्यवाये अपि इति सूत्रगतपदच्छेदः। रषाभ्यां नो णः समानपदे इति सूत्रम् अनुवर्तते। अट्कुप्वाङ्नुम्व्यवाये इति सप्तम्येकवचनान्तं समस्तं पदम्। अट् च कुश्च पुश्च आङ् च नुम् च इति अट्कुप्वाङ्नुमः, इतरेतरयोगद्वन्द्वसमासः, तैः व्यवायः व्यवधानम् इति अट्कुप्वाङ्नुम्व्यवायः इति तृतीयातत्पुरुषसमासः, तस्मिन् अट्कुप्वाङ्नुम्व्यवाये इति सती सप्तमी। अपि इति अव्ययपदम्। रषाभ्यामिति पञ्चमीद्विवचनान्तं पदम्। नः इति षष्ठ्यन्तं पदम्। णः इति प्रथमैकवचनान्तं पदम्। समानपदे इति सप्तम्येकवचनान्तं पदम्। तस्य च एकपदे इत्यर्थः। रषाभ्यां णो नः समानपदे अट्कुप्वाङ्नुम्व्यवाये अपि इति पदयोजना। अट् इत्यनेन अट्प्रत्याहारस्य कु-इत्यनेन कवर्गस्य ग्रहणं भवति। पु-इत्यनेन पवर्गस्य ग्रहणं भवति। आङ्-इत्यनेन आङ् इति उपसर्गस्य ग्रहणं भवति। नुम् इत्यनेन अनुस्वारस्य च ग्रहणं भवति। एवञ्च अट्-कवर्ग-पवर्ग-आङ्-एतैः व्यवधाने सत्यपि रषाभ्यां नस्य णः भवति एकपदे इति सूत्रार्थः भवति। अट्-कवर्ग-पवर्ग-आङ्-एतैः एकैकशः व्यवधाने, सम्पूर्णैः मिलितैः व्यवधाने अपि रषाभ्यां परस्य नस्य णकारः भवति समानपदे।

**उदाहरणम्-** रामान् इत्यत्र रेफनकारयोः मध्ये आ-अट्प्रत्याहारस्य, म-पवर्गस्य, आ-अट्प्रत्याहारस्य च व्यवधानम् अस्ति। अतः अनेन सूत्रेण नकारस्य णकारादेशः प्राप्तः। तदा-

## [ १०.२१ ] पदान्तस्य॥ (८.४.३६)

**सूत्रार्थः** - रषाभ्यां परस्य पदान्तस्य नकारस्य णकारः न भवति।

**सूत्रव्याख्या-** विधिसूत्रम् इदम्। अस्मिन् सूत्रे एकं पदं विद्यते। रषाभ्यां नो णः समानपदे इत्यस्मात् सूत्रात् नः इति णः इति द्वे पदे अनुवर्तेते। न भाभूपूकमिगमिप्यायीवेपाम् इत्यस्मात् सूत्रात् न इति अव्ययपदम् अनुवर्तते। रषाभ्यामिति पञ्चमीद्विवचनान्तं पदम्। रषाभ्याम् इत्यत्र पञ्चमीनिर्देशात् तस्मादित्युत्तरस्य इति परिभाषया उत्तरस्य इति पदलाभः। तस्य च परस्य इत्यर्थः। नः इति षष्ठ्यन्तं पदम्। णः इति प्रथमैकवचनान्तं पदम्। समानपदे इति सप्तम्येकवचनान्तं पदम्। तस्य च एकपदे इत्यर्थः। रषाभ्यां परस्य पदान्तस्य नः णः न इति पदयोजना। पदान्तस्य इति नः इति च पदद्वयं षष्ठ्येकवचनान्तम्। अनेन सूत्रस्यास्य अर्थः भवति - पदान्तस्य नकारस्य णकारः न भवति इति।

**उदाहरणम्-** रामान्।

**सूत्रार्थसमन्वयः**:- रामान् इत्यस्य अन्ते सुप्प्रत्ययः अस्ति। तेन सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञा भवति। एतस्य च पदस्य अन्तिमवर्णः नकारः। अट्कुप्वाङ्नुम् इत्यादिसूत्रेण नकारस्य णत्वे प्राप्ते नकारस्य पदान्तत्वात् प्रकृतसूत्रेण णत्वादेशः न भवति। तेन रामान् इत्येव रूपम्।

## पाठगतप्रश्नाः-४

१९. सम्बुद्धिसंज्ञकस्य अपृक्तस्य सकारस्य लोपः केन भवति।

२०. एङ्ह्रस्वात्सम्बुद्धेः इति सूत्रस्य अर्थं लिखत।

२१. राम + अम् इत्यत्र केन सूत्रेण पूर्वरूपम्।

२२. शसः शकारस्य इत्संज्ञा केन सूत्रेण भवति।

२३. शसः सकारस्य नकारादेशः कथम्।

२४. णत्वविधायकं सूत्रं किम् अस्ति।

## पाठसारः

अस्मिन् पाठे आदौ प्रातिपदिकसंज्ञा कस्य भवति इति आलोचितम्। प्रातिपदिकसंज्ञाविधायकं सूत्रद्वयम् प्रतिपादितम्। आद्येन सूत्रेण धातुभिन्नस्य प्रत्ययभिन्नस्य प्रत्ययान्तभिन्नस्य च अर्थवतः शब्दस्वरूपस्य प्रातिपदिकसंज्ञा विधीयते। द्वितीयेन सूत्रेण कृदन्तस्य तद्धितान्तस्य समासानां च प्रातिपदिकसंज्ञा भवति। एकविंशतेः अपि सुब्विभक्तेः वर्णना विस्तारेण उपस्थापिता। ततः प्रादिपदिकात् कथं सुबुत्पत्तिः भवति इति तु अस्मिन् पाठे विस्तरेण वर्णितम्। रामशब्दस्य प्रथमायां द्वितीयायां रूपाणि कथं भवन्ति इति सविस्तरम् अस्मिन् पाठे वर्णितम्। रामशब्दस्य प्रातिपदिकसंज्ञायां सुबुत्पत्तौ प्रथमैकचवने सुप्रत्यये अनुबन्धलोपे राम् स् इत्यत्र सकारस्य रुत्वे विसर्गे रामः इति रूपं भवति। ततः अग्रे एवं रूपेण अन्यानि अपि रूपाणि कथं भवन्ति इति अस्मिन् पाठे वर्णितम्।

## पाठान्तप्रश्नाः

१. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यस्य सूत्रं व्याख्यात।

२. कृत्तद्धितसमासाश्च इति सूत्रं व्याख्यात।

३. ङ्याब्प्रातिपदिकात् इति सूत्रं व्याख्यात।

४. स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रं व्याख्यात।

५. द्व्येकयोर्द्विवचनैकवचने इति सूत्रं व्याख्यात।

६. सरूपाणामेकशेष एकविभक्तौ इति सूत्रं व्याख्यात।

७. एङ्ह्रस्वात्सम्बुद्धेः इति सूत्रं व्याख्यात।

८. अट्कुप्वाङ्नुमव्यवायेऽपि इति सूत्रं व्याख्यात।

९. अमि पूर्वः इति सूत्रं व्याख्यात।

१०. प्रदत्तानि रूपाणि ससूत्रं साधयत – रामः रामौ रामाः रामम् रामान्

## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।

२. कृत्तद्धितसमासाश्च।

३. अधिकारसूत्रम्।

४. आपञ्चमाध्यायपरिसमाप्तेः अधिकारः।

५. अधिकारसूत्रम्।

६. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।

**उत्तराणि-२**

७. स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्।

८. स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्।

९. विभक्तिश्च।

१०. द्व्येकयोर्द्विवचनैकवचने।

११. एकविभक्तौ यानि स्वरूपाण्येव दृष्टानि तेषामक एव शिष्यते।

१२. सुपस्त्रीणि त्रीणि वचनानि एकशः एकवचनद्विवचनबहुवचनसंज्ञानि स्युः इति।

**उत्तराणि-३**

१३. बहुषु बहुवचनम्।

१४. प्रत्ययाद्यौ चुटू इतौ स्तः इति।

१५. विभक्तिस्थास्तवर्गसकारमकाराः न इतः स्युः।

१६. अपदान्ताद् अकाराद् गुणे परतः पररूपम् एकादेशः स्यात्।

१७. एकवचनं सम्बुद्धिः।

१८. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्।

**उत्तराणि-४**

१९. एङ्ह्रस्वात्सम्बुद्धेः।

२०. एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेद्।

२१. अमि पूर्वः।

२२. लशक्वतद्धिते

२३. तस्माच्छसो नः पुंसि इति सूत्रेण।

२४. अट्कुप्वाङ्नुम्व्यवायेऽपि

## ।।इति दशमः पाठः।।

# ११

# अजन्तपुंलिङ्गे अदन्तशब्दानां सर्वनाम्नां च रूपाणि

## प्रस्तावना

पूर्वस्मिन् पाठे भवन्तः प्रातिपदिकसंज्ञा केषां भवति इति ज्ञातवन्तः। एकविंशतेः विभक्तीनां परिचयम् अपि भवन्तः प्राप्तवन्तः। ततः एकत्व-द्वित्व-बहुत्वसंख्यानां क्रमात् एकवचन-द्विवचवन-बहुवचनसंज्ञा भवन्ति इति ज्ञातवन्तः। प्रातिपदिकात् सुबुत्पत्तिः कथं भवति इत्यपि ज्ञातवन्तः। नकारस्य स्थाने णकारः कदा भवति इति विषये अपि सम्यक् ज्ञानं लब्धवन्तः। ततः रामशब्दस्य द्वितीयाविभक्तिं यावत् रूपसाधनप्रक्रियां ज्ञातवन्तः। ततः अस्मिन् प्रकरणे रामशब्दस्य तृतीयादिषु विभक्तिषु रूपाणि कथं भवन्ति इति विषये आलोचयामः। अपि च सर्वादिगणे सर्वनामसंज्ञकाः सर्वादिशब्दाः पठिताः। सर्वासु भाषासु एव सर्वनामशब्दानां व्यवहारः भवति। तेन भाषायाः माहात्म्यम् अपि वर्धते। संस्कृतवाङ्मये अपि नैके सर्वनामशब्दाः सन्ति। एते शब्दाः अपि अजन्तहलन्तरूपेण द्विविधाः। अजन्तशब्दाः हलन्तशब्दाः च पुंलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गभेदेन त्रिविधाः भवन्ति। अस्मिन् पाठे अजन्तपुंलिङ्गसर्वनामशब्दानां विषये चर्चा प्रस्तुता। किञ्च तेषां रूपसाधनप्रक्रिया अपि आलोचिता।

## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- रामशब्दस्य तृतीयादिविभक्तिषु रूपसाधनानि कथं भवति इति ज्ञातुं शक्नुयात्।
- स्थानिवद्भावः कुत्र भवति इति बोद्धुं शक्तः भविष्यति।
- स्थानिवद्भावस्य कुत्र निषेधो भवति इति अपि ज्ञातुं पारयेत्।
- सकारस्य षकारादेशः कुत्र भवति इति बोद्धुं शक्तः भविष्यति।
- सर्वनामसंज्ञा केषां शब्दानां भवति इति ज्ञातुं पारयेत्।
- सर्वादिगणे के शब्दाः पठिताः इति ज्ञातुं शक्नुयात्।
- सर्वनामशब्दानां रूपसाधनप्रक्रियां सम्यक् ज्ञातुं शक्नुयात्।



## [ ११.१] टाङसिङसामिनात्स्याः॥ (७.१.१२)

**सूत्रार्थः** - अकारान्तात् अङ्गात् परेषां टादीनां क्रमात् इनादयः आदेशाः भवन्ति।

**सूत्रव्याखा-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। टाङसिङसाम् इनात्स्याः इति सूत्रगतपदच्छेदः। टाङसिङसाम् (६/३), इनात्स्याः (१/३)। अतो भिस ऐस् इत्यस्मात् सूत्रात् अतः (५/१) इति पदम् अनुवर्तते। अङ्गस्य इति सूत्रम् अधिक्रियते। तस्य अङ्गात् इति पञ्चम्यन्ततया विभक्तिविपरिणामः भवति। टाङसिङसाम् इति षष्ठीबहुवचनान्तं पदम्। टा च ङसिः च ङस् च इति टाङसिङसः तेषां, टाङसिङसाम् इति इतरेतरयोगद्वन्द्वसमासः। इनात्स्याः इति प्रथमाबहुवचनान्तं पदम्। इनश्च आच्च स्यश्च इति इनात्स्याः इतरेतरयोगद्वन्द्वसमासः। अतः अङ्गात् टाङसिङसाम् इनात्स्याः इति पदयोजना। अतः इति अङ्गात् इत्यस्य विशेषणम्। तेन तदन्तविधिना अदन्तात् अङ्गात् इत्यर्थः आगच्छति। अत्र स्थानिनः त्रयः, आदेशाः अपि त्रयः। तेन यथासंख्यविधिः भवति। अतः सूत्रस्यास्य अर्थो भवति - अदन्तात् अङ्गात् परेषां टाङसिङसाम् क्रमात् इनात्स्याः भवन्ति इति। अर्थात् अकारान्तात् अङ्गात् परस्य टाप्रत्ययस्य स्थाने इन-आदेशः, ङसिप्रत्ययस्य स्थाने आत्-आदेशः, ङस्प्रत्ययस्य स्थाने स्य-आदेशश्च भवति।

**उदाहरणम्** - रामेण।

**सूत्रार्थसमन्वयः** - रामशब्दात् तृतीयैकवचनविवक्षायां टाप्रत्यये चुटू इति सूत्रेण प्रत्ययाद्यस्य टकारस्य इत्संज्ञायां तस्य लोपः इति टलोपे राम आ इति स्थितिः भवति। रामशब्दः अदन्तः अस्ति। टाप्रत्ययः परमस्ति। अतः यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इत्यनेन रामशब्दस्य अङ्गसंज्ञा भवति। तस्मात् अदन्ताद् अङ्गात् परस्य टाप्रत्ययस्य टाङसिङसामिनात्स्याः इत्यनेन अनेकाल्त्वात् इन इति सर्वादेशे राम इन इति स्थितिः। ततः आद्गुणः इत्यनेन गुणे एकादेशे रामेन इति स्थितिः जायते। ततः अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य णकारादेशे रामेण इति रूपं सिद्धं भवति।

## [ ११.२] सुपि च॥ (७.३.१०२)

**सूत्रार्थः** - यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। सुपि (७/१), च इत्यव्ययम्। अतो दीर्घो यञि इति सम्पूर्णं सूत्रम् अनुवर्तते। अङ्गस्य इति षष्ठ्यन्तं पदमधिक्रियते। अतः इति षष्ठ्यन्तं पदम्। दीर्घः इति प्रथमैकवचनान्तं पदम्। यञि इति सप्तम्येकवचनान्तं पदम्। अतः अङ्गस्य दीर्घः यञि सुपि इति पदयोजना। यञि इति सुपि इत्यस्य विशेषणम्। यञ् इति प्रत्यहारः। तेन तदादिविधिना यञादौ सुपि इति लभ्यते। अतः इति अङ्गविशेषणम्। तेन तदन्तविधिना अदन्तस्य अङ्गस्य इत्यर्थो लभ्यते। अदन्ताङ्गस्य इति स्थानषष्ठी। अतः अलोऽन्त्यस्य इति परिभाषया अदन्ताङ्गस्य अन्त्यस्य अलः स्थाने आदेशो भवति। तेन अस्य सूत्रस्य अर्थः भवति - यञादौ सुपि परे अदन्तस्य अङ्गस्य अन्त्यस्य अलः दीर्घः स्याद् इति। अर्थात् यञादिसुप्प्रत्ययः यदि परे स्यात् तर्हि अदन्तस्य अङ्गस्य अन्त्यस्य अतः दीर्घः भवति।



**उदाहरणम् -** रामाभ्याम्।

**सूत्रार्थसमन्वयः -** प्रातिपदिकसंज्ञकात् रामशब्दात् तृतीयाद्विवचनविवक्षायां भ्याम्प्रत्यये राम भ्याम् इति स्थितिः जायते। भ्याम् इत्यत्र मकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा प्राप्नोति। तस्याः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। रामशब्दः अदन्तः अस्ति। तस्य च भ्याम् इति प्रत्यये परे यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इत्यनेन अङ्गसंज्ञा भवति। भ्याम् यञादिः सुप्। तस्मात् यञादौ सुपि भ्यामि परे सुपि च इत्यनेन सूत्रेण अदन्तस्य अङ्गस्य अन्त्यस्य अतः दीर्घः भवति। तेन अकारस्य आकारे रामा भ्याम् इति स्थितिः भवति। ततः वर्णसम्मेलने रामाभ्याम् इति रूपं निष्पद्यते।

## [ ११.३] अतो भिस ऐस्॥ (७.१.९)

**सूत्रार्थः -** अकारान्ताद् अङ्गात् भिस ऐस् इत्यादेशः भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। अतः भिसः ऐस् इति सूत्रगतपदच्छेदः। अतः इति पञ्चम्येकवचनान्तं पदम्। भिसः इति षष्ठ्येकवचनान्तं पदम्। ऐस् इति प्रथमैकवचनान्तं पदम्। अङ्गस्य इत्यधिक्रियते। अङ्गस्य इति पदस्य पञ्चम्यन्ततया विपरिणामः भवति। अतः अङ्गस्य भिसः ऐस् इति पदयोजना। अतः इति अङ्गविशेषणम्। तस्मात् तदन्तविधिना अदन्तस्य अङ्गस्य इत्यर्थो लभ्यते। भिस् इति अल्समुदायबोधकं पदम् अस्ति। अर्थात् भिस् इति पदं केवलम् एकः वर्णः इति न अपि तु वर्णसमुदायः। किञ्च भिस् इत्यतः षष्ठीविभक्तिः श्रूयते। ऐसादेशः तु अनेकाल् अस्ति। अतः अनेकाल्शित् सर्वस्य इति परिभाषया भिसः सम्पूर्णस्य स्थाने भवति। तेन अस्य सूत्रस्य अर्थो- अकारान्ताद् अङ्गात् परस्य सम्पूर्णस्य भिसः स्थाने ऐसादेशः भवति इति।

**उदाहरणम्-** रामैः।

**सूत्रार्थसमन्वयः-** रामशब्दात् तृतीयाबहुवचनविवक्षायां भिस्प्रत्यये राम भिस् इति स्थितिः भवति। भिस् इति सुप्प्रत्ययः। अतः विभक्तिसंज्ञकः। तेन भिसः सकारस्य हलन्त्यम् इति सूत्रेण प्राप्तायाः इत्संज्ञायाः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। रामशब्दः अदन्तः अस्ति। किञ्च रामशब्दस्य अङ्गसंज्ञा भवति। ततः परं भिस्प्रत्ययः अस्ति। तस्मात् अनेन सूत्रेण अदन्ताद् अङ्गात् परस्य सम्पूर्णस्य भिसः ऐसादेशे राम ऐस् इति स्थितिः भवति। अधुना रामशब्दस्य अकारात् परम् एचः ऐकारः वर्तते। अतः वृद्धिरेचि इत्यनेन अकारैकारयोः वृद्धौ ऐकारैकादेशे रामैस् इति स्थितिः भवति। तदा सुबन्तस्य रामस् इत्यस्य पदसंज्ञायां सस्य रुत्वे विसर्गे च रामैः इति रूपं सिद्ध्यति।

## [ ११.४] ङेर्यः॥ (७.१.१९)

**सूत्रार्थः -** अतः अङ्गात्परस्य ङे इत्यस्य स्थाने यादेशः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं विद्यते। ङेः यः इति सूत्रगतपदच्छेदः। ङेः इति षष्ठ्येकवचनान्तं पदम्। यः इति प्रथमैकवचनान्तं पदम्। अतो भिस ऐस् इत्यस्मात् सूत्रात् अतः इति पञ्चम्यन्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिक्रियते। अङ्गस्य इति सूत्रस्य पञ्चम्यन्ततया विपरिणामः भवति। अतः अङ्गस्य ङेः यः इति पदयोजना। अतः इति अङ्गविशेषणम्। तेन तदन्तविधिना अदन्ताद्



अङ्गाद् इत्यर्थो लभ्यते। तेन अस्य सूत्रस्य अर्थः भवति- अदन्तात् अङ्गात्परस्य ङे इत्यस्य यादेशः भवति इति। अर्थात् अकारान्तं यदङ्गं तस्मात् परस्य ङेप्रत्ययस्य यादेशः भवति। यादेशः अनेकाल् अस्ति। तस्मात् सर्वस्य ङे इत्यस्य स्थाने भवति।

**उदाहरणम्**- रामशब्दस्य चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये राम ङे इति स्थितिः जायते। रामशब्दः अदन्तः अस्ति। तस्माद् अनेन सूत्रेण अदन्ताद् अङ्गात् परस्य ङेप्रत्ययस्य यादेशे राम य इति स्थितिः भवति। यद्यपि यादेशः यञादिः अस्ति। तथापि सुपि च इत्यनेन अङ्गसंज्ञकस्य रामशब्दस्य अकारस्य दीर्घः न भवति । यतो हि यादेशः न सुप्। ततः अग्रिमं सूत्रम् आरभ्यते-

## पाठगतप्रश्नाः-१

१. रामेण इत्यत्र टा इत्यस्य इनादेशः केन भवति।

२. रामेण इत्यत्र नकारस्य णकारः केन सूत्रेण।

३. टाङसिङसामिनात्स्याः इति सूत्रार्थं लिखत।

४. रामाभ्याम् इत्यत्र दीर्घः केन भवति।

५. सुपि च इत्यस्य अर्थं लिखत।

६. भिसः स्थाने केन सूत्रेण ऐसादेशः विधीयते।

७. ङे इत्यस्य कः आदेशः भवति।

## [ ११.५] स्थानिवदादेशोऽनल्विधौ॥ (१.१.५५)

**सूत्रार्थः** - आदेशः स्थानिवत् भवति, न तु स्थान्यलाश्रयविधौ।

**सूत्रव्याख्या**- इदम् अतिदेशसूत्रम्। स्थानिवत् आदेशः अनल्विधौ इति सूत्रगतपदच्छेदः। पदत्रयात्मकेऽस्मिन् सूत्रे स्थानिवदिति अव्ययं पदम्। स्थानं नाम प्रसङ्गः। यस्य स्थाने अन्यद् विधीयते तत्स्थानी। स्थानिना तुल्यम् इति स्थानिवत्। आदेशः इति प्रथमैकवचनान्तं पदम्। यस्य विधानेन अन्यः निवर्तते स आदेशः। आदेशः स्थानिवदित्यस्य आदेशः स्थानिना तुल्यो भवति इत्यर्थः। अनल्विधौ इति सप्तम्यन्तं समस्तं पदम्। विधिर्नाम कार्यम्। अल्विधिरित्यत्र अला विधिः, अलः परस्य विधिः, अलः विधिः अलि विधिः चेति विग्रहे यथाक्रमं तृतीया-पञ्चमी-षष्ठी-सप्तमीतत्पुरुषसमासः। न अल्विधिः अनल्विधिः, तस्मिन् अनल्विधौ इति। अलाश्रयभिन्ने कार्ये कर्तव्ये इति तस्य अर्थः। तेन अलाश्रयकार्ये कर्तव्ये स्थानिवन्न भवतीति फलितम्। अल् इति वर्णपर्यायः। अत्र अल् इत्यनेन स्थानिभूतः स्थान्यवयवश्च गृह्यते। ततश्च अस्य सूत्रस्य अर्थो भवति- स्थानिभूतो योऽल् स्थान्यवयवश्च योऽल् तमाश्रित्य कार्ये कर्तव्ये आदेशः न स्थानिवत् इति। तेन आदेशः स्थानिवत् स्यान्न तु स्थान्यलाश्रयविधौ इति उच्यते।

**उदाहरणम्-** रामाय।

**सूत्रार्थसमन्वयः-** रामशब्दात् चतुर्थ्येकवचने ङेप्रत्यये ङेर्यः इति ङेप्रत्ययस्य यादेशे राम य इति जातम्। अत्र ङे इति स्थानी। तमाश्रित्य अत्र किमपि कार्यं न भवति। अतः अत्र स्थान्यलाश्रयविधिः वर्तते। अत्र च स्थानिनः धर्मः सुप्त्वम्। अतः प्रकृतसूत्रेण आदेशभूते यकारे सुप्त्वधर्मः अतिदिश्यते। तेन यकारे स्वकीयं यञादिधर्मः, अतिदिश्यमानः सुप्त्वधर्मश्च वर्तते। तेन सुपि च इति दीर्घः सिद्धः। तेन रामा य इति स्थिते वर्णसम्मेलने रामाय इति रूपं सिद्ध्यति।

रामशब्दस्य चतुर्थीद्विवचने भ्यामि प्रत्यये राम भ्याम् इति स्थितिः। तत्र पूर्ववत् मकारस्य न विभक्तौ तुस्माः इत्यनेन इत्संज्ञायाः निषेधः भवति। ततः सुपि च इत्यनेन यञादौ सुपि परे अदन्तस्य अङ्गस्य दीर्घे आकारे रामा भ्याम् इति स्थितिः। ततः वर्णसम्मेलने रामाभ्याम् इति रूपं सिद्ध्यति।

रामशब्दात् चतुर्थीबहुवचने भ्यस्प्रत्यये राम भ्यस् इति स्थिते-

## [ ११.६] बहुवचने झल्येत्॥ (७.३.१०३)

**सूत्रार्थः -** झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे पदत्रयं विद्यते। बहुवचने झलि एत् इति सूत्रगतपदच्छेदः। बहुवचने इति सप्तम्येकवचनान्तं पदम्। झलि इत्यपि सप्तम्येकवचनान्तं पदम्। झल्प्रत्याहारे परे इत्यर्थः। एत् इति प्रथमैकवचनान्तं पदम्। एदित्यनेन ह्रस्वैकारस्य एव ग्रहणम्। अतो दीर्घो यञि इत्यस्मात् सूत्रात् अतः इति षष्ठ्यन्तं पदम् अनुवर्तते। सुपि च इत्यस्मात् सूत्रात् सुपि इति सप्तम्यन्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिक्रियते। अतः यञि सुपि अङ्गस्य बहुवचने झलि एत् इति पदयोजना। अतः इति अङ्गविशेषणम्। तेन तदन्तविधिना अदन्तस्य अङ्गस्य इत्यर्थो लभ्यते। अङ्गस्य इत्यत्र स्थानेषष्ठी अस्ति। अतः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः इत्यर्थलाभः। झलीत्यनेन सुपीति विशिष्यते। तेन तदादिविधिना झलादौ सुपि इत्यर्थो लभ्यते। तेन अस्य सूत्रस्य झलादौ बहुवचने सुपि परे अदन्तस्य अङ्गस्य अन्त्यस्य अलः एकारः स्याद् इत्यर्थो लभ्यते। अर्थात् बहुवचने विद्यमानः यः सुप्प्रत्ययः स यदि झलादिः स्यात् तर्हि तस्मिन् परे अदन्तस्य अङ्गस्य अन्त्यस्य अलः अतः एकारादेशः स्यात्।

**उदाहरणम्-** रामेभ्यः।

**सूत्रार्थसमन्वयः-** रामशब्दात् चतुर्थीबहुवचने भ्यस्प्रत्यये राम भ्यस् इति स्थितिः। सकारस्य अलोऽन्त्यम् इत्यनेन इत्संज्ञा प्राप्ता। तस्य न विभक्तौ तुस्माः इत्यनेन सूत्रेण निषेधो भवति। ततः बहुवचने झल्येत् इत्यनेन सूत्रेण झलादौ बहुवचने सुपि परे अदन्तस्य अङ्गस्य अन्त्यस्य अलः अतः एकारे रामेभ्यस् इति भवति। तत्र सकारस्य रुत्वे विसर्गे रामेभ्यः इति रूपं सिद्ध्यति।

प्रातिपदिकसंज्ञकात् रामशब्दात् पञ्चम्येकवचनविवक्षायां ङसि प्रत्यये राम ङसि इति स्थितिः जायते। ततः टाङसिङसामिनात्स्याः इत्यनेन ङसेः स्थाने आत्-इत्यादेशे राम आत् इति स्थितिः भवति। अत्र अकः सवर्णे दीर्घः इति सूत्रेण पूर्वपरयोः अकाराकारयोः स्थाने आकाररूपसवर्णदीर्घैकादेशे रामात् इति भवति। तस्य सुबन्तत्वेन सुप्तिङन्तं पदम् इत्यनेन सूत्रेण पदसंज्ञा भवति। तत्र पदान्ते

विद्यमानस्य झलः तकारस्य झलां जशोऽन्ते इति दकारे रामाद् इति भवति। परन्तु अस्माकं रामात् इति रूपम् अपि इष्टम् अस्ति। अतः नूतनं सूत्रमारभ्यते-

## [ ११.७] वाऽवसाने॥ (८.४.५६)

**सूत्रार्थः -** अवसाने झलां चरो वा स्युः।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। वा अवसाने इति सूत्रगतपदच्छेदः। अवसाने इति सप्तम्येकवचनान्तं पदम्। वा इति अव्ययपदम्। झलां जश् झशि इत्यस्मात् सूत्रात् झलाम् षष्ठ्यन्तं पदम् अनुवर्तते। अभ्यासे चर्च इत्यस्मात् सूत्रात् चर् इति प्रथमान्तं पदम् अनुवर्तते। अवसाने झलां चर् वा इति पदयोजना। चर् इत्यस्य बहुवचनान्ततया विपरिणामः भवति। झल् चर् इति उभौ अपि प्रत्याहारौ। तेन अस्य सूत्रस्य अर्थो भवति- अवसाने झलां चरो वा भवन्ति इति। अर्थात् अवसाने परे झल्प्रत्याहारस्थवर्णानां चरः विकल्पेन भवन्ति।

**उदाहरणम्-** रामात्।

**सूत्रार्थसमन्वयः-** रामशब्दात् पञ्चम्येकवचने ङसिप्रत्यये प्रक्रियाकार्ये रामाद् इति जातम्। दकारात् परं वर्णोच्चारणस्य अभावः अस्ति। तदभावस्य विरामोऽवसानम् इत्यनेन अवसानसंज्ञा भवति। दकारः झल्प्रत्याहारे विद्यते। तेन वाऽवसाने इत्यनेन झलः दकारस्य वैकल्पिके चर्त्वे तकारे रामात् इति रूपं सिध्यति। वाऽवसाने इत्यस्य वैकल्पिकत्वेन तत्प्रवृत्त्यभावपक्षे रामाद् इत्यपि रूपं भवति।

रामशब्दस्य षष्ठ्येकवचनविवक्षायां ङस्-प्रत्यये राम ङस् इति स्थितिः। तत्र यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति प्रकृतेः रामशब्दस्य अङ्गसंज्ञा भवति। यथासंख्यमनुदेशः समानाम् अनेकाल्शित्सर्वस्य चेत्याभ्यां परिभाषाभ्यां परिष्कृतेन टाङसिङसामिनात्स्याः इति सूत्रेण अदन्तात् अङ्गात्परस्य ङसः स्थाने स्य इति सर्वादेशे रामस्य इति रूपं सिद्ध्यति।

रामशब्दात् षष्ठीद्विवचनविवक्षायाम् ओस्प्रत्यये राम ओस् इति स्थिते-

## [ ११.८] ओसि च॥ (७.३.१०४)

**सूत्रार्थः -** ओसि परे अतोऽङ्गस्यैकारः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं विद्यते। ओसि इति सप्तम्येकवचनान्तं पदम्। तस्य च ओसि परे इत्यर्थः। चेति अव्ययपदम्। अतो दीर्घो यञि इत्यस्मात् सूत्रात् अतः इति षष्ठ्यन्तं पदम् अनुवर्तते। बहुवचने झल्येत् इत्यस्मात् सूत्रात् एत् इति प्रथमान्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिक्रियते। अतः अङ्गस्य एत् ओसि इति पदयोजना। अङ्गस्य इति षष्ठ्यन्तं पदम्। अतः इति अङ्गविशेषणम्। तेन तदन्तविधिना अदन्तस्य अङ्गस्य इत्यर्थो लभ्यते। तेन अस्य सूत्रस्य अर्थो भवति- ओसि परे अदन्तस्य अङ्गस्य एकारः भवति इति। अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः स्थाने भवति इति स्फुटम्।

**उदाहरणम्-** रामयोः।

**सूत्रार्थसमन्वयः-** रामशब्दात् षष्ठीद्विवचनविवक्षायाम् ओस्प्रत्यये राम ओस् इति स्थितिः भवति। सकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा प्राप्ता। तस्याः न विभक्तौ तुस्माः इत्यनेन सूत्रेण निषेधे राम ओस् इति भवति। अत्र वृद्धिरेचि इत्यनेन आद् एचि परे वृद्धिरेकादेशः प्राप्नोति। वृद्धिं बाधित्वा अतो गुणे इत्यनेन अपदान्ताद् अतः गुणे परतः पररूपमेकादेशः प्राप्नोति। एकादेशमपि बाधित्वा ओसि च इत्यनेन सूत्रेण ओसि परे अदन्तस्य अङ्गस्य अन्त्यस्य अलः एकारादेशे रामे ओस् इति जातम्। ततः एचः एकारस्य अचि ओकारे परे एचोऽयवायावः इत्यनेन सूत्रेण अयादेशे रामयोस् इति स्थितिः। ततः पदसंज्ञायां सकारस्य रुत्वे विसर्गे च रामयोः इति रूपं सिद्ध्यति।

## पाठगतप्रश्नाः-२

८. स्थानिवदादेशोऽनल्विधौ इति कीदृशं सूत्रम्।

९. स्थानिवदादेशोऽनल्विधौ इत्यत्र अनल्विधौ इत्यस्य कः अर्थः।

१०. रामाय इत्यत्र सुप्त्वातिदेशः कथम् ।

११. रामेभ्यः इत्यत्र एत्वं कथम्।

१२. बहुवचने झल्येत् इत्यस्य सूत्रार्थं लिखत।

१३. वाऽवसाने इत्यस्य अर्थं लिखत।

१४. ओसि च इत्यस्य सूत्रस्य अर्थं लिखत।

---

रामशब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये राम आम् इति जाते-

## [११.९] ह्रस्वनद्यापो नुट्॥ (७.१.५४)

**सूत्रार्थः -** ह्रस्वान्तात् नद्यन्ताद् आबन्तात् च अङ्गात्परस्य आमो नुडागमः भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। ह्रस्वनद्यापः नुट् इति सूत्रगतपदच्छेदः। ह्रस्वनद्यापः इति पञ्चम्येकवचनान्तं समस्तं पदम्। ह्रस्वश्च नदी च आप् च इति ह्रस्वनद्याप् इति समाहारयोगद्वन्द्वः, तस्मात् इति ह्रस्वनद्यापः। नुट् इति प्रथमैकवचनान्तं पदम्। आमि सर्वनाम्नः सुट् इत्यस्मात् सूत्रात् आमि इति सप्तम्यन्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिक्रियते। अङ्गस्य इति पदं पञ्चम्यन्ततया विपरिणम्यते। परस्य इति अध्याह्रियते। ह्रस्वनद्यापः अङ्गात् परस्य आमि नुट् इति पदयोजना। ह्रस्वनद्यापः इत्यत्र नदी इत्यनेन यू स्त्र्याख्यौ नदी इत्यनेन सूत्रेण विहितानां नदीसंज्ञकानां ग्रहणं भवति। आप् इत्यनेन टाप्, डाप्, चाप् इत्येतेषां स्त्रीप्रत्ययानां ग्रहणं भवति। अङ्गात् इति पदं ह्रस्वनद्यापः इति पदस्य विशेषणम्। अतः तदन्तविधिना ह्रस्वान्ताद् नद्यन्ताद् आबन्ताद् अङ्गाद् इत्यर्थो लभ्यते। आमि इत्यत्र सप्तमीनिर्देशः, ह्रस्वनद्यापः इत्यत्र पञ्चमीनिर्देशः। तेन उभयनिदर्शे पञ्चमीनिदर्शो बलीयान् इति न्यायेन तस्मादित्युत्तरस्य इति परिभाषया आमि इति सप्तम्यन्तस्य षष्ठ्यन्ततया

विपरिणामः भवति। नुट् इत्यत्र टकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा भवति। तेन अयं टित् इति ज्ञायते। अतः आद्यन्तौ टकितौ इति परिभाषया अयम् आद्यावयवः भवति इति परिष्कृतम्। अतः अस्य सूत्रस्य अर्थः भवति ह्रस्वान्तात् नद्यन्ताद् आबन्तात् च अङ्गात्परस्य आमो नुटागमः आद्यावयवः भवति इति। अर्थात् ह्रस्वान्तशब्देभ्यः नदीसंज्ञकशब्देभ्यः आबन्तशब्देभ्यः च परतः आमः नुडागमः भवति।

**उदाहरणम्-** रामशब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये राम आम् इति जातम्। मकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा प्राप्ता। तस्याः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। रामशब्दः ह्रस्वान्तः अस्ति। प्रत्ययः परमस्ति । तस्मात् अङ्गसंज्ञकः अपि अस्ति। ततः परं च आम् अस्ति। अतः 'आद्यन्तौ टकितौ' इति परिभाषया परिष्कृतेन 'ह्रस्वनद्यापो नुट्' इति सूत्रेण ह्रस्वान्तात् अदङ्गात् अङ्गात् परस्यामः नुटि आद्यावयवेऽनुबन्धलोपे राम नाम् इति स्थिते अग्रिमं सूत्रं प्रवर्तते।

## [ ११.१० ] नामि॥ (६.४.३)

**सूत्रार्थः -** नामि परे अजन्तस्य अङ्गस्य दीर्घः भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे नामि इति एकमेव सप्तम्यन्तं पदं विद्यते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इत्यस्मात् सूत्रात् दीर्घः इति प्रथमान्तं पदम् अनुवर्तते। दीर्घश्रुत्या अचश्च इति परिभाषया अचः इति पदम् उपतिष्ठते। अङ्गस्य इति षष्ठ्यन्तम् अधिक्रियते। नामि अचः अङ्गस्य दीर्घः इति पदयोजना। नामि इत्यत्र परसप्तमी अस्ति। अतः तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषया नामि निर्दिष्टे पूर्वस्य इत्यर्थलाभः। अचः इति अङ्गविशेषणम्। तेन तदन्तविधिना अजन्तस्य अङ्गस्य इत्यर्थो लभ्यते। तेन अस्य सूत्रस्य अर्थः भवति- नामि परे अजन्तस्य अङ्गस्य दीर्घः भवति इति। अर्थात् नकारसहिते आमि प्रत्यये परे अजन्तस्य अङ्गस्य दीर्घो भवति।

**उदाहरणम्-** रामाणाम्।

**सूत्रार्थसमन्वयः-** रामशब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये नुडागमे राम नाम् इति जातम्। ततः अचश्च अलोऽन्त्यस्य चेत्याभ्यां परिभाषाभ्यां परिष्कृतेन नामि इति सूत्रेण अजन्तस्य अङ्गस्य रामशब्दस्य अन्त्यस्य अलः अकारस्य दीर्घे रामानाम् इति भवति। तस्य सुबन्तत्वेन समानपदत्वात् रेफरूपात् निमित्तात् अटा पवर्गीयेण अटा च व्यवहितस्य नकारस्य अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णत्वे कृते रामाणाम् इति रूपं सिद्ध्यति।

सप्तम्येकवचनविवक्षायां ङिप्रत्यये राम ङि इति जातम्। ततः ङकारस्य लशक्वतद्धिते इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे राम इ इति जातम्। अत्र आद्गुणः इत्यनेन गुणे एकादेशे वर्णसम्मलने रामे इति रूपं सिद्ध्यति।

रामशब्दस्य सप्तमीद्विवचनविवक्षयाम् ओस्प्रत्यये राम ओस् इति जातम्। ततः ओसि च इत्यनेन ओसि परे अदन्तस्य अङ्गस्य एकारादेशे रामे ओस् भवति। तत्र एचः एकारस्य अचि ओकारे परे एचोऽयवायावः इत्यनेन सूत्रेण अयादेशे रामयोस् इति स्थिते रुत्वे विसर्गे च रामयोः इति रूपं सिद्ध्यति।

रामशब्दस्य सप्तमीबहुवचनविवक्षयां सुप्प्रत्यये सुपः पकारस्य हलन्त्यम् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन लोपे राम सु इति जातम्। रामशब्दः अदन्तः अस्ति। सुप्रत्ययः झलादिः बहुवचनसंज्ञकः च विद्यते। अतः अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन बहुवचने झल्येत् इत्यनेन रामशब्दावयवस्य अन्त्यस्य अकारस्य एकारे रामेसु इति जाते-

## [ ११.११] आदेशप्रत्यययोः॥ (८.३.५९)

**सूत्रार्थः** - इण्कवर्गाभ्यां परस्य अपदान्तस्य आदेशः प्रत्ययावयवश्च यः सकारः तस्य मूर्धन्यादेशः स्याद्।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। सूत्रमिदम् एकपदात्मकम्। आदेशप्रत्यययोः इति षष्ठीद्विवचनान्तं पदम्। आदेशश्च प्रत्ययश्च आदेशप्रत्ययौ, तयोः आदेशप्रत्यययोः इति इतरेतरयोगद्वन्द्वसमासः। सहेः साडः स इत्यस्मात् सूत्रात् स इति षष्ठ्यन्तं पदमनुवर्तते। अपदान्तस्य मूर्धन्यः इत्यस्मिन् अधिकारे सूत्रमिदं विद्यते। अपदान्तस्य इति षष्ठ्यन्तं पदम्। मूर्धन्यः इति प्रथमान्तं पदम्। अस्य च मूर्ध्नि भवः इत्यर्थः। इण्कोः इति पञ्चम्येकवचनान्तं पदम् अधिक्रियते। इण् च कुश्च इति इण्कु तस्मात् इण्कोः इति समाहारद्वन्द्वसमासः। इण्कोः आदेशप्रत्यययोः सः मूर्धन्यः इति पदयोजना। इण् इति प्रत्याहारः। अइउण् इति सूत्रमारभ्य लणः णकारपर्यन्तम्। कुः इत्यनेन कवर्गः गृह्यते। एवञ्च इण्कोः परस्य अपदान्तस्य आदेशस्य प्रत्ययस्य च यः सकारः तस्य मूर्धन्यादेशः इति अन्वयः। अत्र आदेशविषये अभेदात्मिका षष्ठी स्वीक्रियते, प्रत्ययविषये च अवयवात्मिका षष्ठी स्वीक्रियते। तेन अस्य सूत्रस्य अर्थो भवति- इण्कवर्गाभ्यां परस्य अपदान्तस्य आदेशः यः सकारः प्रत्ययावयवश्च यः सकारः तस्य मूर्धन्यादेशः भवति इति। अर्थात् इण्प्रत्याहारकवर्गाभ्यां परस्य सकाररूपः यः आदेशः प्रत्ययावयवात्मकश्च यः सकारः तस्य मूर्धन्यादेशः भवति। विवृताघोषस्य सकारस्य तादृश एव षकारः आदेशः भवति।

**उदाहरणम्**-रामेषु।

**सूत्रार्थसमन्वयः**- रामशब्दात् सप्तमीबहुवचनविवक्षयां सुप्प्रत्यये अनुबन्धलोपे प्रक्रियाकार्ये रामे सु इति स्थितिः जायते। अत्र सुप्रत्ययस्य सकारः प्रत्ययावयः अस्ति। स च सकारः एकारात् परमस्ति। एकारश्च इण्प्रत्याहारे अन्तर्भवति। तस्मात् आदेशप्रत्यययोः इत्यनेन सूत्रेण प्रत्ययावयवस्य सकारस्य मूर्धन्यादेशे षकारे रामे षु इति भवति। ततः वर्णसम्मेलने रामेषु रूपं सिद्ध्यति।

रामशब्दवत् कृष्णमुकुन्दादयः अकारान्तपुँल्लिङ्गशब्दाः अपि विज्ञेयाः।

इदानीं ये शब्दाः सर्वादिगणपठिताः तेषु सर्वशब्दस्य रूपसाधनप्रक्रिया कथं भवति इति पर्यालोचनं कुर्मः। यद्यपि रामवत् सर्वशब्दोऽपि अकारान्तोऽस्ति तथापि बहुषु स्थलेषु सर्वशब्दः रामशब्दात् विशिष्यते। तस्मात् सर्वशब्दस्य रूपाणां साधनाय यानि विशेषसूत्राणि आवश्यकानि तानि अत्र विस्तरेण पर्यालोच्यन्ते। आदौ सर्वनामसंज्ञाविधायकं सूत्रम् -

## [ ११.१२] सर्वादीनि सर्वनामानि॥ (१.१.२६)

**सूत्रार्थः**- सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः।

**सूत्रव्याख्या**- इदं संज्ञासूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। सर्वादीनि इति प्रथमाबहुवचनान्तं पदम्। सर्वनामानि इत्यपि प्रथमाबहुवचनान्तं पदम्। सर्वादीनि इति नपुंसकवशात् शब्दस्वरूपाणि इति प्रथमाबहुवचनान्तं विशेष्यपदम् अध्याहार्यम्। अतः सर्वादीनि शब्दस्वरुपाणि सर्वनामानि इति पदयोजना। सर्वः (सर्वशब्दः) आदिः प्रथमावयवः (आद्यवयवः) येषां (शब्दस्वरूपाणां) तानि सर्वादीनि तद्गुणसंविज्ञानबहुव्रीहिसमासः। सर्वशब्दः स्वरूपपरः। तेन सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञकानि भवन्ति इति सूत्रार्थः लभ्यते।

**विशेषव्याख्या**- सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्वम्, अन्तर, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम् इत्येते पञ्चत्रिंशत् शब्दाः सर्वादिगणे पठिताः। एतेषाम् एव सर्वनामसंज्ञा भवति।

विश्वशब्दः सर्वशब्दः समशब्दः सर्ववाचकः। समशब्दः तुल्यपर्यायः अपि अस्ति। परन्तु अत्र तुल्यपर्यायस्य समशब्दस्य ग्रहणं नास्ति। उभशब्दस्तु द्वित्वविशिष्टस्य वाचकः। अतः एव नित्यः द्विवचनान्तः। उभयशब्दस्तु नित्यबहुवचनान्तः भवति। डतरडतमौ प्रत्ययौ भवतः। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इत्यनेन तदन्तविधिना डतरडतमप्रत्ययान्तौ एव स्वीकर्तव्यौ। तेन डतरडतमग्रहणेन अत्र कतरकतमादिशब्दानाम् अपि ग्रहणं भवति। त्व त्वद् द्वौ अपि अन्यपर्यायौ। नेमशब्दः अर्धवाचकः। एकशब्दः संख्यायां नित्यैकवचनान्तः।

सर्वनामसंज्ञा अन्वर्थसंज्ञा। अन्वर्थसंज्ञायाः महासंज्ञा इत्यर्थः। तेन सर्वशब्दः यदा सर्वार्थस्य वाचकः भवति तदैव सर्वनामसंज्ञा भवति परन्तु यदा कस्यापि नाम सर्वः भवति तदा तु सर्वशब्दस्य सर्वनामसंज्ञा न भवति।

**उदाहरणम्**- सर्वादिगणे आदौ पठितस्य सर्वार्थवाचकस्य सर्वशब्दस्य सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञा भवति। किञ्च अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञा भवति। प्रातिपदिकसंज्ञकस्य अस्य सर्वशब्दस्य प्रथमैकवचने द्विवचने च रामशब्दवत् सर्वः, सर्वौ इति रूपम्।

## पाठगतप्रश्नाः-३

१५. रामाणाम् इत्यत्र नुडागमः कथम्।

१६. ह्रस्वानद्यापो नुट् इति सूत्रार्थं लिखत।

१७. रामाणाम् इत्यत्र दीर्घः कथम्।

१८. नामि इत्यस्य अर्थं लिखत।

१९. रामाणाम् इत्यत्र केन णत्वं विधीयते।

२०. सर्वादीनि सर्वनामानि इत्यत्र का संज्ञा विधीयते।

२१. सर्वादिगणे कति शब्दाः पठिताः।



२२. रामेषु इत्यत्र सकारस्य षकारः केन।

२३. कस्मात् परस्य सकारस्य मूर्धन्यः भवति।

सर्वशब्दात् बहुत्वविवक्षायां प्रथमाबहुवचने जस्-प्रत्यये, अनुबन्धलोपे सर्व जस् इति स्थिते-

## [ ११.१३] जसः शी॥ (७.१.१७)

**सूत्रार्थः** - अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। जसः इति षष्ठ्येकवचनान्तं पदम्। शी इति प्रथमैकवचनान्तं पदम्। अतो भिस ऐस् इत्यस्मात् सूत्रात् अतः इति पञ्चम्यन्तं पदम् अनुवर्तते। सर्वनाम्नः स्मै इत्यस्मात् सूत्रात् सर्वनाम्नः इति पञ्चम्यन्तं पदम् अनुवर्तते। अतः सर्वनाम्नः जसः शी इति पदयोजना। सर्वनाम्नः इति पदम् अतः पदस्य विशेषणम्। तेन तदन्तविधिना अदन्तात् सर्वनाम्नः इत्यर्थो लभ्यते। जसः इत्यत्र षष्ठीनिर्देशात् षष्ठी स्थानेयोगा इत्यनया परिभाषया जसः स्थाने इत्यर्थः लभ्यते। जसः स्थाने विधीयमानः शी-इत्यादेशः अनेकाल् अस्ति। तस्मात् अनेकाल्शित्सर्वस्य इत्यनया परिभाषया सर्वस्य जसः स्थाने शी भवति इत्यर्थः लभ्यते। तेन अस्य सूत्रस्य अर्थः भवति- अदन्तात्सर्वनाम्नः परस्य जसः स्थाने शी इत्यादेशः भवति इति। अर्थात् अदन्तात् सर्वनाम्नः परस्य जसः सर्वस्य स्थाने शी इति आदेशः भवति।

**उदाहरणम्**- सर्वे।

**सूत्रार्थसमन्वयः**- सर्वशब्दात् बहुत्वविवक्षायां प्रथमाबहुवचने जस्-प्रत्यये, अनुबन्धलोपे सर्व अस् इति स्थितिः। अत्र सर्वशब्दः अदन्तः अस्ति। सर्वादिगणे पठितः अस्ति। तस्मात् सर्वनामसंज्ञकः वर्तते। ततः परं जस्प्रत्ययः विद्यते। अतः जसः शी इति सूत्रेण जसः स्थाने शी इत्यादेशे सर्व शी इति भवति। ततः शकारस्य लशक्वतद्धिते इति सूत्रेणेत्संज्ञायां तस्य लोपः इति लोपे सर्व ई इति जायते। ततः स्थानेऽन्तरतमः इति परिभाषया आद् गुणः इति सूत्रेण अकारेकारयोः स्थाने स्थानतः आन्तर्यात् एकारे सर्वे इति रूपं सिद्धम्।

**विशेषव्याख्या**- ननु शी-इत्यादेशस्य शकारः इत्संज्ञकः अस्ति। तस्मात् शीत्त्वात् एव अनेकाल्शित्सर्वस्य इत्यनया परिभाषया सर्वादेशः सिद्धः। कथम् अनेकाल्त्वात् सर्वादेशः। अत्रेदम् उच्यते आदेशात्प्राक् शकारस्य इत्संज्ञा न भवति। लशक्वतद्धिते इत्यनेन प्रत्ययादेः शकारस्य इत्संज्ञा भवति। जसः स्थाने आदेशात्परमेव स्थानिवद्भावेन शी-इत्यस्य प्रत्ययत्वं सिद्ध्यति। ततः पूर्वं तु प्रत्ययत्वं नास्ति। प्रत्ययत्वाभावात् शकारस्य इत्संज्ञा अपि न भवति। तस्मात् अत्र शित्त्वात् सर्वादेशः न भवति, अनेकाल्त्वादेव सर्वादेशः भवति। नागेशमते तु शित्त्वादेव सर्वादेशो भवति। यतो हि तस्य मते इत्संज्ञायोग्यत्वमिति स्वीक्रियते न तु इत्संज्ञकत्वमिति।

**सर्वम्**- प्रातिपदिकसंज्ञकात् सर्वशब्दात् द्वितीयैकवचनविवक्षायाम् अम्प्रत्यये सर्व अम् इति स्थिते अमि पूर्वः इत्यनेन पूर्वपरयोः पूर्वरूपैकादेशे सर्वम् इति रूपम्।



**सर्वौ-** प्रातिपदिकसंज्ञकात् सर्वशब्दात् प्रथमाद्विवचनविवक्षायां औप्रत्यये सर्व औ इति स्थिते वृद्धिरेचि इत्यनेन पूर्वपरयोः वृद्धिरेकादेशे सर्वौ इति रूपम्। द्वितीयाद्विवचनविवक्षायाम् तु औट्प्रत्यये अनुबन्धलोपे सर्व औ इति स्थिते वृद्धिरेचि इत्यनेन पूर्वपरयोः वृद्धिरेकादेशे सर्वौ इति रूपम्।

**सर्वान्-** प्रातिपदिकसंज्ञकात् सर्वशब्दात् द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे सर्व अस् इति स्थिते प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वपरयोः सवर्णदीर्घैकादेशे सर्वास् इति स्थिते तस्माच्छसो नः पुंसि इत्यनेन सकारस्य नकारे सर्वान् इति रूपम्।

**सर्वेण-** प्रातिपदिकसंज्ञकात् सर्वशब्दात् तृतीयैकवचनविवकषायां टाप्रत्यये सर्व टा इति स्थिते टाङसिङसामिनात्स्याः इत्यनेन इनादेशे आद्गुणः इत्यनेन गुणे एकारे अट्कुप्वाङ्नुम्व्यवायेपि इत्यनेन णत्वे सर्वेण इति रूपम्।

**सर्वाभ्याम्-** प्रातिपदिकसंज्ञकात् सर्वशब्दात् तृतीयाद्वि-वचनविवकषायां चतुर्थीद्विवचनविवक्षायां पञ्चमीद्विवचनविवक्षायां वा भ्याम्प्रत्यये सर्व भ्याम् इति स्थिते सुपि च इत्यनेन अदन्ताङ्गस्य दीर्घे सर्वाभ्याम् इति रूपम्।

**सर्वैः-** प्रातिपदिकसंज्ञकात् सर्वशब्दात् तृतीयाद्वि-वचनविवकषायां भिस्प्रत्यये सर्व भिस् इति स्थिते अतः भिस ऐस् इत्यनेन भिसः ऐसादेशे वृद्धिरेचि इति वृद्धिरेकादेशे सर्वैस् इति जाते पदसंज्ञायां रूत्वे विसर्गे सर्वैः इति रूपम्।

एवञ्च सर्वशब्दात् चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये सर्व ङे इति स्थिते ङेः स्थाने ङेर्यः इत्यनेन यादेशे प्राप्ते-

## [ ११.१४] सर्वनाम्नः स्मै॥ (७.१.१४)

**सूत्रार्थः -** अतः सर्वनाम्नो ङे इत्यस्य स्मै स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। सर्वनाम्नः इति पञ्चम्येकवचनान्तं पदम्। स्मै इति प्रथमैकवचनान्तं पदम्। इत्यत्र विभक्तिलोपस्तु आर्षः। अतो भिस ऐस् इत्यस्मात् सूत्रात् अतः इति पञ्चम्यन्तं पदम् अनुवर्तते। ङेर्यः इत्यस्मात् सूत्रात् ङेः इति षष्ठ्यन्तं पदम् अनुवर्तते। अतः सर्वनाम्नः ङेः स्मै इति पदयोजना। अतः इति पदं सर्वनाम्नः इत्यस्य विशेषणं भवति। तेन तदन्तविधिना अदन्तात् सर्वनाम्नः इत्यर्थो लभ्यते। स्मै इत्यादेशः अनेकाल् अस्ति। तस्मात् ङे-इति सम्पूर्णस्य स्थाने स्मै इति आदेशः भवति। तेन अस्य सूत्रस्य अर्थः भवति- अदन्तात् सर्वनाम्नो ङे इत्यस्य स्मै इत्यादेशः भवति इति। अर्थात् अदन्तात् सर्वनामसंज्ञकशब्दात् ङेप्रत्ययस्य सर्वस्य स्थाने स्मै इति आदेशः भवति।

**उदाहरणम्-** सर्वस्मै।

**सूत्रार्थसमन्वयः-** सर्वार्थवाचकात् प्रातिपदकसंज्ञकात् सर्वशब्दात् चतुर्थ्येकचनविवक्षायां ङेप्रत्यये अनुबन्धलोपे सर्व ए इति स्थितिः भवति। अत्र सर्वशब्दः अदन्तः सर्वनामसंज्ञकः च वर्तते। अतः अनेकाल्शित्सर्वस्य इति परिभाषया परिष्कृतेन 'सर्वनाम्नः स्मै' इत्यनेन ङे-इत्यस्य स्थाने स्मै इत्यादेशे सर्वस्मै इति रूपं सिद्ध्यति।



## [ ११.१५] ङसिङ्योः स्मात्स्मिनौ॥ (७.१.१५)

**सूत्रार्थः** - अतः सर्वनाम्नः ङसिङ्योः स्मात्स्मिनौ स्तः इति।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं विद्यते। ङसिङ्योः इति षष्ठीद्विवचनान्तं पदम्। ङसिश्च ङिश्च इति ङसिङी तयोः ङसिङ्योः इति इतरेतरयोगद्वन्द्वसमासः। स्मात्स्मिनौ इति प्रथमाद्विवचनान्तं पदम्। स्मात् च स्मिन् च इति स्मात्स्मिनौ इति इतरेतरयोगद्वन्द्वसमासः। अतो भिस ऐस इत्यस्मात् सूत्रात् अतः इति पञ्चम्यन्तं पदम् अनुवर्तते। सर्वनाम्नः स्मै इत्यस्मात् सूत्रात् सर्वनाम्नः इति पञ्चम्यन्तं पदम् अनुवर्तते। अतः सर्वनाम्नः ङसिङ्योः स्मात्स्मिनौ इति पदयोजना। अतः इति पदं सर्वनाम्नः इत्यस्य विशेषणम्। तेन तदन्तविधिना अदन्तात् सर्वनाम्नः इत्यर्थो लभ्यते। अत्र स्थानिनौ अपि द्वौ आदेशौ अपि द्वौ तेन यथासंख्यविधिना ङसि इत्यस्य स्थाने स्मादादेशः, ङि-इत्यस्य स्थाने स्मिनादेशश्च भवतः। तेन अस्य सूत्रस्य अदन्तात् सर्वनाम्नः परयोः ङसिङ्योः स्मात्स्मिनौ आदेशौ भवतः इत्यर्थो जायते। आदेशयोः स्मात्स्मिनोः अनेकाल्त्वात् सर्वादिशत्वं सिद्ध्यति।

**उदाहरणम्**- सर्वस्मात्।

**सूत्रार्थसमन्वयः**- सर्वादिगणे पठितस्य सर्वार्थवाचकस्य सर्वशब्दस्य 'सर्वादीनि सर्वनामानि' इत्यनेन सूत्रेण सर्वनामसंज्ञा भवति। ततः पञ्चम्येकवचनविवक्षायां ङसिप्रत्यये अनुबन्धलोपे सर्व अस् इति स्थितिः भवति। 'यथासंख्यमनुदेशः समानाम्' इति परिभाषया परिष्कृतेन 'ङसिङ्योः स्मात्स्मिनौ' इत्यनेन ङसेः स्थाने स्मात् इत्यादेशे सर्वस्मात् इति स्थितिः। स्मादित्यादेशस्य स्थानिवद्भावात् विभक्तिसंज्ञा भवति। ततः स्मातः तकारस्य हलन्त्यम् इति सूत्रेण प्राप्तायाः इत्संज्ञायाः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। तेन सर्वस्मात् इति रूपं सिद्ध्यति।

## [ ११.१६] आमि सर्वनाम्नः सुट्॥ (७.१.५२)

**सूत्रार्थः** - अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः भवति।

**सूत्रव्याख्या**- सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे पदत्रयम् विराजते। आमि इति सप्तम्येकवचनान्तं पदम्। सर्वनाम्न इति पञ्चम्येकवचनान्तं सुबन्तम्। सुडिति प्रथमैकवचनान्तम्। आज्जसेरसुक् इत्यतः आदिति पञ्चम्यन्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिक्रियते। तच्च पञ्चम्यन्ततया विपरिणम्यते। परस्य इति षष्ठ्यन्तम् अध्याह्रियते। आमि सर्वनाम्नः आत् अङ्गात् परस्य सुट् इति पदयोजना। आदिति अङ्गविशेषणम्। तेन येन विधिस्तदन्तस्य इति सूत्रप्रामाण्यात् तदन्तविधिना अवर्णान्तात् अङ्गात् इत्यर्थः प्राप्यते। सुटः टकारः हलन्त्यम् इत्यनेन इत्संज्ञकः। तेन अयम् आगमः इति ज्ञायते। आद्यन्तौ टकितौ इति परिभाषया च विहितस्य आद्यावयवः भवति इत्यपि स्फुटम्। आमि इत्यत्र सप्तमीनिर्देशः, सर्वनाम्नः इत्यत्र पञ्चमीनिर्देशः। तेन उभयनिर्दशे पञ्चमीनिदर्शो बलीयान् इति न्यायेन तस्मादित्युत्तरस्य इति परिभाषया आमि इति सप्तमी आमः इति षष्ठ्यन्तमापद्यते। अतः सूत्रस्य अस्य अर्थो भवति- अवर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्य आमः सुडागमः इति।

**उदाहरणम्**- सर्वेषाम्।



**सूत्रार्थसमन्वयः-** सर्वनामसंज्ञकात् प्रातिपदिकसंज्ञकात् सर्वशब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये सर्व आम् इति जातम्। आमः मकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा प्राप्ता। तस्याः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। ततः प्रकृतसूत्रेण आमः सुडागमे आद्यावयवे सुटि अनुबन्धलोपे सर्व साम् इति जाते, बहुवचने झल्येत् इत्यनेन एत्वे, आदेशप्रत्यययोः इत्यनेन इणः परस्य प्रत्ययावयवस्य सस्य षत्वे सर्वेषाम् इति रूपं सिद्ध्यति।

**सर्वस्मिन्-** सर्वशब्दस्य सप्तम्येकवचने ङिप्रत्यये सर्व ङि इति स्थितिः। ङिप्रत्ययस्य ङसिङ्योः स्मात्स्मिनौ इत्यनेन स्मिन् इत्यादेशे सर्वस्मिन् इति स्थितिः। स्मिन्-इत्यस्य स्थानिवद्भावात् विभक्तिसंज्ञा भवति। ततः स्मिनः नकारस्य हलन्त्यम् इति सूत्रेण प्राप्तायाः इत्संज्ञायाः न विभक्तौ तुस्माः इत्यनेन निषेधः भवति। तेन सर्वस्मिन् इति रूपं सिद्ध्यति।

**सर्वयोः-** प्रातिपदिकसंज्ञकात् सर्वशब्दात् षष्ठीद्विवचनविवक्षायाम् सप्तमीद्विवचनविवक्षायाम् ओस्प्रत्यये सर्व ओस् इति स्थिते ओसि च इत्यनेन सर्वशब्दावयवस्य अन्त्यस्य अकारस्य एकारे एचोऽयवायावः इत्यनेन अयादेशे सर्वयोस् इत्यस्य पदसंज्ञायां सस्य रुत्वे विसर्गे सर्वयोः इति रूपम्।

**सर्वेषु-** सर्वशब्दस्य सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये सुपः पकारस्य हलन्त्यम् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन लोपे सर्व सु इति जातम्। सर्वशब्दः अदन्तः अस्ति। सुप्रत्ययः झलादिः बहुवचनसंज्ञकः च विद्यते। अतः अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन बहुवचने झल्येत् इत्यनेन सर्वशब्दावयवस्य अन्त्यस्य अकारस्य एकारे सर्वेसु इति जाते आदेशप्रत्यययोः इत्यनेन सकारस्य षकारे सर्वेषु इति रूपम्।

## पाठगतप्रश्नाः-४

२४. जसः स्थाने कः आदेशः भवति।

२५. जसः शी इत्यस्य कः अर्थः।

२६. अदन्तात् सर्वनाम्नः ङे इत्यस्य कः आदेशः भवति।

२७. अदन्तात् सर्वनाम्नः ङसिङ्योः कौ आदेशौ भवतः।

२८. सर्वेषाम् इत्यत्र सुडागमः कथम्।

२९. आमि सर्वनाम्नः सुट् इति सूत्रस्यार्थः कः।

## पाठसारः

अस्मिन् पाठे रामशब्दस्य तृतीयातः सप्तमीं यावत् रूपसाधनप्रक्रिया विस्तरेण निरूपिता। ततः येषां शब्दानां सर्वनामसंज्ञा भवन्ति ते शब्दाः वर्णिताः। सर्वनामशब्दाः पञ्चत्रिंशत् भवन्ति। तेषां नामत उल्लेखः अस्मिन् पाठे कृतः। सर्वादिगणे ये शब्दाः पठिताः तेषां सर्वनामसंज्ञा भवति। जशः शी

इत्यादिविशेषकार्यार्थं सर्वादिगणे पठितानां शब्दानां सर्वनामसंज्ञा कृता। अस्मिन् पाठे सर्वशब्दस्य यानि विशेषकार्याणि भवन्ति तानि ससूत्राणि वर्णितानि।

## पाठान्तप्रश्नाः

१. टाङसिङसामिनात्स्याः इति सूत्रं व्याख्यात।

२. स्थानिवदादेशोऽनल्विधौ इति सूत्रं व्याख्यात।

३. स्थानिवदादेशोऽनल्विधौ इति सूत्रं व्याख्यात।

४. आदेशप्रत्यययोः इति सूत्रं व्याख्यात।

५. सर्वादीनि सर्वनामानि इति सूत्रं व्याख्यात।

६. आमि सर्वनाम्नः सुट् इति सूत्रं व्याख्यात।

७. ससूत्रं रूपाणि साधयत – रामेण रामाय रामाभ्याम् रामेभ्यः रामात् रामस्य रामयोः रामाणाम् रामे रामेषु  सर्वे सर्वस्मै सर्वस्मात् सर्वेषाम् सर्वस्मिन्।

## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. टाङसिङसामिनात्स्याः।

२. अट्कुप्वाङ्नुम्व्यवायेपि इति सूत्रेण।

३. अकारान्तात् अङ्गात् टादीनां क्रमादिनादयः आदेशाः स्युः।

४. सुपि च।

५. यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्याद्।

६. अतो भिस ऐस्।

७. यादेशः।

**उत्तराणि-२**

८. अतिदेशसूत्रम्।

९. स्थान्यलाश्रयविधौ न कर्तव्ये।

१०. स्थानिवदादेशोऽनल्विधौ इति सूत्रेण।

११. बहुवचने झल्येत्।

१२. झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारःस्याद्।

१३. अवसाने झलां चरो वा स्युरिति।

१४. ओसि परे अतोऽङ्गस्यैकारः स्याद्।

**उत्तराणि-३**

१५. ह्रस्वानद्यापो नुट्।

१६. ह्रस्वान्तान्नद्यन्तादाबन्ताच्च अङ्गात्परस्य आमो नुटागमः स्यात्।

१७. नामि।

१८. नामि परे अजन्तस्य अङ्गस्य दीर्घः स्याद्।

१९. आदेशप्रत्यययोः।

२०. सर्वनामसंज्ञा।

२१.

२२. आदेशप्रत्यययोः

२३. इण्कोः

**उत्तराणि-४**

२४. शी इत्यादेशः।

२५. अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् इति।

२६. स्मै इत्यादेशः।

२७. स्मात्स्मिनौ इत्यादेशौ।

२८. आमि सर्वनाम्नः सुट्

२९. अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः इति।

**।।इति एकादशः पाठः।।**

# १२

# अजन्तपुंलिङ्गे इकारादिशब्दानां रूपाणि

## प्रस्तावना

पूर्वस्मिन् पाठे भवन्तः रामशब्दस्य रूपसाधनप्रक्रियां ज्ञातवन्तः। पञ्चत्रिंशतं सर्वनामशब्दान् अपि ज्ञातवन्तः। पूर्वम् अजन्तेषु अकारान्तशब्दानां रूपसाधनप्रक्रिया ज्ञाता। अपि च अकारान्तसर्वनामसंज्ञकस्य सर्वशब्दस्य रूपसिद्धिः समाप्ता। अधुना आकारन्तपुंलिङ्गशब्दानां रूपसिद्धिप्रक्रियां पठामः। ततः वर्णक्रमानुसारेण इकारान्तपुंलिङ्गशब्दानां रूपसिद्धिपद्धतिं जानीमः। एवञ्च तत्र तत्र रूपसाधनकाले कानिचन विशेषकार्याणि सन्ति। तेषां विशेषकार्याणां सिद्ध्यर्थं कानिचन विशेषसूत्राणि सन्ति। रूपसाधनकाले तानि विशेषसूत्राणि विशेषकार्याणि च अस्मिन् प्रकरणे विस्तरेण आलोचयामः।

## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- आकारान्तस्य पुंलिङ्गशब्दस्य परिचयं प्राप्नुयात्।
- पदसंज्ञां ज्ञातुं शक्नोति।
- सर्वनामस्थानसंज्ञा कुत्र भवति इति ज्ञातुं पारयेत्।
- भसंज्ञा कस्य भवति इति ज्ञातुं शक्नुयात्।
- एकसंज्ञाधिकारे का संज्ञा भवति इति ज्ञातुं पारयेत्।
- हरिशब्दस्य परिचयं प्राप्नुयात्।
- गोशब्दस्य रूपसिद्धिं कर्तुं शक्नुयात्।
- उपधासंज्ञा कस्य भवतीति ज्ञातुं शक्नुयात्।

विश्वं पाति रक्षतीति विश्वपाः। विश्वकर्मोपपदात् पा रक्षणे इति धातोः अन्येभ्योऽपि दृश्यन्ते इत्यनेन सूत्रेण विच्प्रत्यये तस्य सर्वापहारिलोपे विश्वपा इति शब्दः निष्पद्यते। आकारान्तपुंलिङ्गस्य विश्वपाशब्दस्य प्रथमैकवचनविवक्षायां सुप्रत्यये विश्वपा सु इति जाते अनुबन्धलोपे, रुत्वे, विसर्गे विश्वपाः इति रूपं भवति। विश्वपाशब्दात् प्रथमाद्विवचनविवक्षायाम् औप्रत्यये वृद्धिरेचि इत्यनेन प्राप्तां वृद्धिं प्रबाध्य प्रथमयोः पूर्वसवर्णः इति पूर्वसवर्णदीर्घे प्राप्ते सूत्रमिदमारभ्यते-

## [ १२.१] दीर्घाज्जसि च॥ (६.१.१०५)

**सूत्रार्थः** - दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् इति।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। पूर्वसवर्णदीर्घस्य निषेधविधिः अत्र उपदिश्यते। सूत्रे अस्मिन् त्रीणि पदानि सन्ति। दीर्घात् जसि च इति सूत्रगतपदच्छेदः। पदत्रयात्मकेऽस्मिन् सूत्रे दीर्घात् इति पञ्चम्येकवचनान्तं पदम्। जसि इति सप्तम्येकवचनान्तं पदम्। चेत्यव्ययपदम्। नादिचि इत्यतः इचि इति सप्तम्यन्तं पदं नेति अव्ययपदञ्च अनुवर्तते। प्रथमयोः पूर्वसवर्णः इत्यतः पूर्वसवर्णः इति प्रथमान्तं पदम् अनुवर्तते। अकः सवर्णे दीर्घः इत्यतो दीर्घः इत्यपि प्रथमान्तं पदम् अनुवर्तते। एकः पूर्वपरयोः इत्यधिकृतम्। दीर्घात् जसि इचि च परे पूर्वपरयोः एकः पूर्वसवर्णदीर्घ न इत्यन्वयः। अतः सूत्रस्य अस्य अर्थः भवति- दीर्घात् प्रथमाबहुवचनसंज्ञके जसि परे इच्प्रत्याहारे च परे पूर्वपरयोः स्थाने विधीयमानः पूर्वसवर्णदीर्घैकादेशः न भवति इति।२९

**उदाहरणम्**- विश्वपौ।

**सूत्रार्थसमन्वयः**- विश्वपाशब्दात् प्रथमाद्विवचनविवक्षायाम् औप्रत्यये वृद्धिरेचि इत्यनेन प्राप्तां वृद्धिं प्रबाध्य प्रथमयोः पूर्वसवर्णः इति पूर्वसवर्णदीर्घः प्राप्तः। किन्तु विश्वपाशब्दः दीर्घान्तः अस्ति। ततः परं इच्प्रत्याहारस्थः औप्रत्ययः अस्ति। अतः अनेन सूत्रेण पूर्वसवर्णदीर्घस्य निषेधः क्रियते। ततः वृद्धौ विश्वपौ इति रूपम्।

एवञ्च विश्वपाशब्दात् प्रथमाबहुवचने जसि अनुबन्धलोपे विश्वपा अस् इति जाते पूर्वसवर्णदीर्घे प्राप्ते दीर्घाज्जसि च इत्यनेन तस्य निषेधे अकः सवर्णे दीर्घः इत्यनेन सूत्रेण दीर्घे आकारे, सकारस्य रुत्वे विसर्गे च विश्वपाः इति रूपम्।

द्वितीयैकवचनविवक्षायाम् अपि विश्वपा अमि इति स्थितिः। ततः पूर्वसवर्णदीर्घे प्राप्ते तं प्रबाध्य अमि पूर्वः इत्यनेन पूर्वरूपे विश्वपाम् इति रूपम्। द्वितीयाद्विवचनविवक्षायां औटि अनुबन्धलोपे पूर्ववत् विश्वपौ इति रूपम्।

द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे विश्वपा अस् इति स्थिते प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वसवर्णदीर्घः प्राप्तः। तं प्रबाध्य अग्रिमं सूत्रं प्रवर्तते-

## [ १२.२] सुडनपुंसकस्य॥ (१.१.४२)

**सूत्रार्थः** - स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युः अक्लीबस्य इति।

**सूत्रव्याख्या**- इदं संज्ञासूत्रम्। सर्वनामस्थानसंज्ञा अनेन विधीयते। पदद्वयात्मके अस्मिन् सूत्रे सुट् अनपुंसकस्य इति सूत्रगतपदच्छेदः। सुट् इति प्रथमैकवचनान्तं पदम्। अनपुंसकस्य इति षष्ठ्येकवचनान्तं समस्तं पदम्। न नपुंसकम्, अनपुंसकम्, तस्य अनपुंसकस्य इति नञ्तत्पुरुषसमासः। तस्य च नपुंसकभिन्नस्य इत्यर्थः। शि सर्वनामस्थानम् इति सूत्रात् सर्वनामस्थानम् इति प्रथमान्तं पदम् अनुवर्तते। अनपुंसकस्य सुट् सर्वनामस्थानम् इति पदयोजना। अत्र सुट् इति प्रत्याहारः सु इत्यारभ्य औटः टकारेण। अतः सुडयं स्वादिपञ्चवचनानां सु-औ-जस्-अम्-औट्-इत्येतेषां बोधकः। अनपुंसकस्य

सुट् सर्वनामस्थानम् भवति इत्यन्वयः। तेन अस्य सूत्रस्य अर्थः नपुंसकभिन्नस्य प्रातिपदिकस्य सुट् सर्वनामस्थानसंज्ञं भवति इति। अर्थात् नपुंसकभिन्नात् प्रातिपदिकात् विहितस्य सुटः सर्वनामस्थानसंज्ञा भवति इति।

**उदाहरणम्-** सखा इति अत्र उदाहरणम्। तथाहि प्रथमैकवचनविवक्षायां सुप्रत्यये सखि सु इति स्थितिः जायते। अत्र सखि-शब्दः पुंलिङ्गे वर्तते। किञ्च सुप्रत्ययः सुट्प्रत्याहरे विद्यते। अतः अनेन सूत्रेण सुप्रत्ययस्य सर्वनामस्थानसंज्ञा भवति। ततः सर्वनामस्थाने चासम्बुद्धौ इत्यनेन उपधावृद्धिः सम्भवति।

## [ १२.३] स्वादिष्वसर्वनामस्थाने॥ (१.४.१७)

**सूत्रार्थः** - कप्प्रत्ययावधिषु स्वादिषु असर्वनामस्थानेषु परेषु पूर्वं पदसंज्ञं स्याद्।

**सूत्रव्याख्या-** इदं संज्ञासूत्रम्। अनेन पदसंज्ञा विधीयते। स्वादिषु असर्वनामस्थाने इति सूत्रगतपदच्छेदः। स्वादिषु इति सप्तमीबहुवचनान्तं पदम्। सुः आदिर्येषां ते स्वादयः, तेषु स्वादिषु इति बहुव्रीहिसमासः। असर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम्। न सर्वनामस्थानम् इति असर्वनामस्थानं, तस्मिन् असर्वनामस्थाने इति नञ्तत्पुरुषसमासः। सुप्तिङन्तं पदम् इत्यस्मात् सूत्रात् पदम् इति प्रथमान्तं संज्ञापदम् अनुवर्तते। कप्प्रत्ययावधिषु इति पदं व्याख्यानात् लभ्यते। अष्टाध्याय्याः स्वौजसमौट्-छष्टाभ्यांभिस्-ङेभ्यांभ्यस्-ङसिभ्यांभ्यस्-ङसोसां-ङ्योस्सुप् इत्यस्मिन् सूत्रे सुप्रत्ययमारभ्य उरःप्रभृतिभ्यः कप् इति सूत्रे कप्प्रत्ययं यावत् कप्प्रत्ययावधिः इत्यर्थः। स्वादिषु असर्वनामस्थाने इत्युभयत्र परसप्तमी श्रूयते। तेन तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनया परिभाषया निर्दिष्टे पूर्वस्य इति पदद्वयं लभ्यते। स्वादिषु असर्वनामस्थाने कप्प्रत्ययावधिषु निर्दिष्टेषु पूर्वस्य पदम् इति पदयोजना। असर्वनामस्थाने इति पदं स्वादिषु इत्यस्य विशेषणम्। असर्वनामस्थाने इत्यत्र बहुत्वेऽपि एकवचनमार्षम्। एवञ्च अस्य सूत्रस्य अर्थः भवति-कप्प्रत्ययावधिषु स्वादिषु सर्वनामस्थानसंज्ञकभिन्नेषु निर्दिष्टेषु पूर्वस्य पदसंज्ञा भवति इति।

## [ १२.४] यचि भम्॥ (१.४.१८)

**सूत्रार्थः** - यकारादिषु अजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्याद्।

**सूत्रव्याख्या-** इदं संज्ञासूत्रम्। अनेन भसंज्ञा विधीयते। द्विपदात्मके अस्मिन् सूत्रे यचि इति सप्तम्येकवचनान्तम् पदम्। भम् इति प्रथमैकवचनान्तं पदम्। य् च अच् च इति यच् तस्मिन् अचि इति समाहारयोगद्वन्द्वसमासः। स्वादिष्वसर्वनामस्थाने इति सम्पूर्णं सूत्रमनुवर्तते। कप्प्रत्ययावधिषु इति पदं व्याख्यानात् लभ्यते। अष्टाध्याय्याः स्वौजसमौट्-छष्टाभ्यांभिस्-ङेभ्यांभ्यस्-ङसिभ्यांभ्यस्-ङसोसां-ङ्योस्सुप् इत्यस्मिन् सूत्रे सुप्रत्ययमारभ्य उरःप्रभृतिभ्यः कप् इति सूत्रे कप्प्रतयं यावत् कप्प्रत्ययावधिः इत्यर्थः। यचि कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु इति पदयोजना। यचि इत्यत्र परसप्तमी श्रूयते। तेन तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनया परिभाषया निर्दिष्टे पूर्वस्य इति पदद्वयं लभ्यते। यचीत्यत्र अल्ग्रहणात् सप्तमीनिर्देशाच्च तदादिविधिना यादिषु अजादिषु इत्यर्थः लभ्यते। एवञ्च असर्वनामस्थानेषु स्वादिषु यकारादिषु अजादिषु कप्प्रत्ययावधिषु निर्दिष्टेषु पूर्वस्य भसंज्ञा भवति इत्यर्थो लभ्यते।

स्वादिष्वसर्वनामस्थाने इत्यस्य सूत्रस्य अपवादसूत्रमिदं यचि भम् इति।

**उदाहरणम्-** विश्वपाशब्दात् द्वितीयाबहुवचनविवक्षायां शसि, अनुबन्धलोपे विश्वपा अस् इति तिष्ठति। अत्र अस् इति सर्वनामस्थानभिन्नः अजादिप्रत्ययः अस्ति। तेन अनेन सूत्रेण ततः पूर्वस्य विश्वपा इत्यस्य भसंज्ञा भवति।

## [ १२.५] आकडारादेका संज्ञा॥ (१.४.१)

**सूत्रार्थः** - इतः ऊर्ध्वं कडाराः कर्मधारये इत्यतः प्राग् एकस्यैकैव संज्ञा स्याद्।

**सूत्रव्याख्या-** इदम् अधिकारसूत्रम्। कडाराः कर्मधारये इत्यतः प्राक् सूत्रमिदम् अधिक्रियते। आ कडारात् एका संज्ञा इति सूत्रगतपदच्छेदः। पदचतुष्टयात्मके सूत्रेऽस्मिन् आ इति अव्ययपदम्। आङ् इत्यनेन आङ् इत्युपसर्गस्य ग्रहणम्। आङ् उपसर्गः अत्र मर्यादावाचकः। तेन कडारा इत्यस्मात् प्राक् इत्यर्थः। कडारात् इति पञ्चम्यन्तं पदम्। आङ् इत्युपसर्गयोगे अत्र पञ्चमी। एका इति प्रथमैकवचनान्तं सुबन्तम्। संज्ञा इत्यपि प्रथमैकवचनान्तं पदम्। आ कडारात् एका संज्ञा इति पदयोजना। तेन इतः आरभ्यः कडाराः कर्मधारये इत्यतः प्राग् एकस्य एका एव संज्ञा भवति इत्यर्थो लभ्यते।

**विशेषव्याख्या-** अस्मिन् अधिकारे एकस्य एकैव संज्ञा भवति इत्युक्तम्। तथापि का संज्ञा भवति इत्यत्र नियमः कश्चिद् उच्यते- या संज्ञा परा अनवकाशा च सैव भवति। अर्थात् अष्टाध्यायां या संज्ञा परा यस्याः संज्ञायाः च अन्यत्र अवकाशः नास्ति सा एव भविष्यति इति। सुबादिविभक्तिषु असर्वनामस्थानेषु भसंज्ञा पदसंज्ञा च युगपत् प्राप्ता। तत्र अष्टाध्याय्यां परा संज्ञा अस्ति भसंज्ञा, किञ्च सा अनवकाशापि अस्ति। यदि सर्वनामस्थानभिन्नेषु अकारादिषु यकारादिषु सुबादिप्रत्ययेषु अपि पदसंज्ञा भवति। तर्हि भसंज्ञा अनवकाशा भवति। तस्मात् कप्प्रत्ययावधिषु अजादिषु यकारादिषु च प्रत्ययेषु भसंज्ञा भवति अन्यत्र तु पदसंज्ञा भवति।

**उदाहरणम्-** अतः प्रातिपदिकसंज्ञकात् विश्वपाशब्दात् द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे विश्वपा अस् इति स्थितिः जायते। अत्र विश्वपाशब्दः पुलिङ्गे वर्तते। ततः अजादिप्रत्ययः वर्तते। तस्य च सर्वनामसंज्ञा न भवति। यतो हि सुट्प्रत्याहारे शसः पाठः नास्ति। अतः विश्वपाशब्दात् असर्वनामस्थानसंज्ञके अजादिप्रत्यये कृते विश्वपाशब्दस्य पदसंज्ञा भसंज्ञा युगपत् प्राप्नोति। किन्तु भसंज्ञाविधायकं सूत्रम् अष्टाध्यायां पदसंज्ञाविधायकसूत्रात् परम् अस्ति। किञ्च भसंज्ञाविधायकं सूत्रम् अवकाशरहितमस्ति। अतः प्रकृतसूत्रेण विश्वपाशब्दस्य भसंज्ञा विधीयते। ततः विश्वपा अस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते-

## पाठगतप्रश्नाः-१

१. दीर्घाज्जसि च इति सूत्रेण किं विधीयते।

२. दीर्घाज्जसि च इति सूत्रार्थं लिखत।

३. सर्वनामस्थानसंज्ञाविधायकं सूत्रं लिखत।

४. पदसंज्ञाविधायकं सूत्रं किं लिखत।

५. आ कडारादेका संज्ञा इति कीदृशं सूत्रम्।

६. भसंज्ञाविधायकं सूत्रं लिखत।

---

## [ १२.६] आतो धातोः॥ (६.४.१४०)

**सूत्रार्थः** - आकारान्तो यो धातुस्तदन्तस्य भसंज्ञकस्याङ्गस्य लोपः स्याद्।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। आतः धातोः इति सूत्रगतपदच्छेदः। आतः षष्ठ्येकवचनान्तं पदम्। धातोः इत्यपि षष्ठ्येकवचनान्तं पदम्। अल्लोपोऽनः इत्यतः लोपः इति प्रथमान्तं पदम् अनुवर्तते। अङ्गस्य भस्य इति षष्ठ्यन्तं सूत्रद्वयं चाधिक्रियते। आतः धातोः अङ्गस्य भस्य लोपः इति पदयोजना। आतः इति धातोः इत्यस्य विशेषणम्। धातोः इति भस्य इत्यस्य विशेषणम्। अतः येन विधिस्तदन्तस्य इत्यनेन सूत्रेण तदन्तविधिः भवति। आतः इत्यत्र षष्ठीनिर्देशेन अलोऽन्त्यस्य इत्यनया परिभाषया अन्त्यस्य अलः इति अर्थः लभ्यते। एवञ्च आकारन्तः यो धातुस्तदन्तस्य भस्य अङ्गस्य लोपः भवति इति सूत्रार्थः समायाति।

**उदाहरणम्**- विश्वपः।

**सूत्रार्थसमन्वयः**- विश्वपाशब्दात् द्वितीयाबहुवचनविवक्षायां शसि अनुबन्धलोपे विश्वपा अस् जातम्। ततः विश्वपाशब्दस्य यचि भम् इत्यनेन भसंज्ञा भवति। किञ्च विश्वपाशब्दस्य अन्ते आकारान्तः पा इति धातुः अस्ति। अतः आतो लोपः इत्यनेन सूत्रेण पाधातोः भसंज्ञकस्य अङ्गस्य आकारस्य लोपे विश्वपस् इति जाते सकारस्य रुत्वे विसर्गे च विश्वपः इति रूपम्।

तृतीयैकवचने टाप्रत्यये अनुबन्धलोपे विश्वपा आ इति जाते आतोः धातोः इत्यनेन पाधातोः भसंज्ञकस्य अङ्गस्य आकरास्य लोपे वर्णसम्मेलने विश्वपा इति रूपम्।

तृतीयाद्विवचनविवक्षायां भ्यामि भसंज्ञकाभावात् आतो धातोः इत्यनेन लोपाभावे विश्वपाभ्याम् इति रूपम्। एवञ्च तृतीयादिषु अजादिविभक्तिषु सर्वत्रैव भसंज्ञायां आकारलोपः भवति। तृतीयादिषु हलादिविभक्तिषु पदसंज्ञायां भसंज्ञायाः अभावात् आकरलोपः न भवति। तेन तृतीयाबहुवचने भिसि विश्वपाभिः इति रूपम्। चतुर्थ्येकवचने ङेप्रत्यये विश्वपे, द्विचवने विश्वपाभ्याम्, बहुवचने विश्वपाभ्यः इति रूपम्। पञ्चम्येकवचने विश्वपः, द्विवचने विश्वपाभ्याम्, बहुवचने विश्वपाभ्यः इति रूपम्। षष्ठ्येकवचने विश्वपः, द्विवचने विश्वपोः, बहुवचने विश्वपाम् इति रूपम्। सप्तम्येवचने- विश्पपि, द्विवचने विश्वपोः बहुवचने च विश्वपासु इति रूपम्। सम्बोधनैकवचने- हे विश्वपाः, द्विवचने हे विश्पपौ, बहुवचने हे विश्वपाः इति रूपम्। इति आदन्तपुंलिङ्गप्रकरणं समाप्तम्।

## अथ इदन्तपुंलिङ्गप्रकरणम्।

हरति पापानि इति हरिः। शाकटायनमते व्युत्पन्नत्वेऽपि पाणिनिमते अव्युत्पन्नत्वाद् विष्णवादिनानार्थकस्य इकारान्तस्य नियतपुंलिङ्गस्य हरिशब्दस्य अर्थवदधातुरप्रत्ययः प्रतिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेति सूत्राणि अधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसि-भ्याम्भ्यस्ङसोसांङ्योस्सुप् इति सूत्रेण सर्वेषु एकाकिंवशतिः स्वादयः प्राप्ताः। ततः खले कपोतन्यायेन युगपत् परत्वेन प्राप्तेषु प्रथमैकचवविवक्षायां सुप्रत्यये हरि सु इति जातः। ततः उकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे हरिस् इति भवति। ततः समुदायस्य सुप्तिङन्तं पदम् इति सूत्रेण पदसंज्ञा भवति। ततः ससजुषो रुः इत्यनेन सकारस्य रुत्वेऽनुबन्धलोपे हरिर् इति जाते, रेफात् परं वर्णान्तरस्य उच्चारणाभावेन तदभावस्य विरामोऽवसानम् इति अवसानसंज्ञा भवति। ततः खरवसानयोर्विसर्जनीयः इत्यनेन रेफस्य विसर्गे हरिः इति रूपं सिद्धम्।

हरिशब्दस्य प्रथमाद्विवचने औप्रत्यये हरि औ इति जाते पूर्वसवर्णदीर्घे हरी इति रूपम्। ततः हरिशब्दात् प्रथमाबहुवचनविवक्षायां जसि अनुबन्धलोपे हरि अस् इति स्थितिः जायते। तदा-

### [ १२.७]  जसि च॥ (७.३.१०९)

**सूत्रार्थः** - ह्रस्वान्तस्याङ्गस्य गुणः स्यात् जसि परे इति।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। पदद्वयात्मके अस्मिन् सूत्रे जसि इति सप्तम्येकवचनान्तं पदम्। चेति अव्ययपदम्। ह्रस्वस्य गुणः इति सूत्रम् अनुवर्तते। ह्रस्वस्य इति षष्ठ्यन्तं पदम्। गुणः इति प्रथमान्तं पदम्। अङ्गस्य इति षष्ठ्यन्तम् अधिक्रियते। ह्रस्वस्य इति अङ्गविशेषणम्। तेन येन विधिस्तदन्तस्य इति नियमेन तदन्तविधिना इगन्तस्य ह्रस्वान्तस्य अङ्गस्य इत्यर्थो लभ्यते। अत्र गुणशब्दमुच्चार्य गुणः विधीयते। अतः इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तं पदं लभ्यते। इकः इति ह्रस्वस्य इत्यस्य विशेषणम्। तेन येन विधिस्तदन्तस्य इति निमयेन तदन्तविधिना इगन्तस्य ह्रस्वान्तस्य अङ्गस्य इत्यर्थो लभ्यते। ह्रस्वस्य इत्यत्र षष्ठीनिर्देशात् अलोन्त्यस्य इति परिभाषया अन्त्यस्य अलः इति लभ्यते। तेन अस्य सूत्रस्य अर्थः भवति जसि परे इगन्तस्य ह्रस्वान्तस्य अङ्गस्य अन्त्यस्य अलः गुणः भवति इति।

**उदाहरणम्**- हरयः।

**सूत्रार्थसमन्वयः**- हरिशब्दात् प्रथमाबहुवचनविवक्षायां जसि अनुबन्धलोपे हरि अस् इति स्थितिः। ततः पूर्वसवर्णदीर्घः प्राप्तः। किन्तु हरिशब्दः इगन्तः ह्रस्वान्तः अङ्गसंज्ञकः वर्तते। अतः प्राप्तं पूर्वसवर्णदीर्घं प्रबाध्य अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन जसि च इति सूत्रेण अङ्गसंज्ञकस्य हरिशब्दस्य अलोऽन्त्यस्य इकारस्य स्थानत आनन्तर्यात् गुणे एकारे हरे अस् इति स्थितिः। ततः अकारूपेऽचि परे एचोऽयवायावः इत्यनेन एकारस्य स्थाने अयादेशे संयोगे हरयस् इति निष्पद्यते। अस्य रुत्वे विसर्गे च हरयः इति सिद्ध्यति।

## [ १२.८] ह्रस्वस्य गुणः॥ (७.३.१०८)

**सूत्रार्थः** - ह्रस्वस्य गुणः स्यात् सम्बुद्धौ इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। ह्रस्वस्य इति षष्ठ्येकवचनान्तं पदम्। गुणः इति प्रथमैकवचनान्तं सुबन्तं पदम् सम्बुद्धौ च इत्यस्मात् सूत्रात् सम्बुद्धौ इति सप्तम्यन्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिकारे सूत्रमिदं विद्यते। अत्र गुणशब्दमुच्चार्य गुणः विधीयते। अतः इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तं पदं लभ्यते। ह्रस्वस्य इकः अङ्गस्य गुणः इति पदयोजना। ह्रस्वस्य इति अङ्गविशेषणम्। इकः इति ह्रस्वविशेषणम्। तेन तदन्तविधिना इगन्तस्य ह्रस्वान्तस्य अङ्गस्य इत्यर्थो लभ्यते। ह्रस्वस्य इति षष्ठीनिर्देशात् अलोन्त्यस्य इति परिभाषया अन्त्यस्य अलः इति ज्ञायते। अतः सूत्रस्यास्य अर्थः भवति- इगन्तं यत् ह्रस्वान्तं तदन्तं यदङ्गं तस्य अन्त्यस्य अलः गुणः स्यात् सम्बुद्धौ इति।

**उदाहरणम्-** हे हरे।

**सूत्रार्थसमन्वयः-** सम्बुद्धौ हरिशब्दात् सुप्रत्यये अनुबन्धलोपे हरि स् इति भवति। सुप्रत्ययस्य एकवचनं सम्बुद्धिः इत्यनेन सम्बुद्धिसंज्ञा भवति। ततः ह्रस्वस्य गुणः इति सूत्रेण अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन ह्रस्वान्तस्य इगन्तस्य अङ्गसंज्ञकस्य हरिशब्दस्य अलोऽन्त्यस्य इकारस्य स्थानत आनन्तर्यात् गुणे एकारे हे हरे स् इति स्थितिः भवति। ततः एङ्ह्रस्वात्सम्बुद्धेः इत्यनेन सूत्रेण एङः परस्य सम्बुद्धेः लोपे हे हरे इति रूपं सिद्ध्यति।

हरिशब्दस्य द्वितीयैकवचनविवक्षायां अमि हरि अम् इति स्थितिः। ततः अमि पूर्वः इत्यनेन सूत्रेण पूर्वरूपैकादेशे हरिम् इति रूपम्।

द्वितीयाद्विवचनविवक्षायां औट्प्रत्यये अनुबन्धलोपे हरि औ इति भवति। ततः वृद्धिरेचि इत्यनेन वृद्धौ प्राप्तायां तं प्रबाध्य प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वसवर्णदीर्घे हरी इति रूपं सिद्ध्यति।

द्वितीयायाः बहुवचनविवक्षायां शसि अनुबन्धलोपे हरि अस् इति जाते पूर्वसवर्णदीर्घे तस्माच्छसो न पुंसि इत्यनेन कृतपूर्वसवर्णदीर्घात् परस्य शसः सकारस्य नादेशे हरीन् इति रूपं सिद्ध्यति। पदान्तस्य इति निषेधात् अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य णत्वादेशः न भवति।

हरिशब्दः अनदीसंज्ञकः ह्रस्वः इवर्णान्तः। तस्मात् शेषो घ्यसखि इति अनेन सूत्रेण अस्य घिसंज्ञा भवति। घिसंज्ञायां सत्यां तस्याः फलम् अग्रिमसूत्रे उच्यते-

## [ १२.९] आङो नाऽस्त्रियाम्॥ (७.३.११९)

**सूत्रार्थः**- घेः परस्याङो ना स्याद् अस्त्रियाम्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। आङः ना अस्त्रियाम् इति सूत्रगतपदच्छेदः। आङः इति षष्ठ्येकवचनान्तं सुबन्तं पदं टाविभक्तेः संज्ञा। ना इति प्रथमैकवचनान्तं पदम्। ना इत्यत्र विभक्तिलोपः आर्षः। अस्त्रियाम् इति सप्तम्येकवचनान्तं पदम्। न स्त्रियाम् इति अस्त्रियाम् इति नञ्तत्पुरुषसमासः।



अच्च घेः इत्यस्मात् सूत्रात् घेः इति पञ्चम्यन्तं पदम् अनुवर्तते। घेः आङः ना अस्त्रियां इति पदयोजना। घेः इत्यत्र पञ्चमीश्रवणेन तस्मादित्युत्तरस्य इत्यनया परिभाषया परस्य इत्यर्थो लभ्यते। तेन अस्य सूत्रस्य अस्त्रियां घेः परस्य आङो ना इत्यादेशः भवति इत्यर्थो लभ्यते।

**उदाहरणम्-** हरिणा।

**सूत्रार्थसमन्वयः-** हरिशब्दात् तृतीयैकवचनविवक्षायां टाप्रत्यये अनुबन्धलोपे हरि आ इति स्थितिः भवति। ततः शेषो घ्यसखि इति सूत्रेण अनदीसंज्ञकस्य इकारान्तस्य हरिशब्दस्य घिसंज्ञा भवति। ततः आङो नाऽस्त्रियाम् इत्यनेन घेः परस्य आङः अनेकाल्त्वात् ना इति सर्वादेशे हरिना इति जातम्। ततः अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन रेफात् निमित्तात् परस्य नकारस्य अटा व्यवहितस्य णकारे हरिणा इति रूपं सिद्ध्यति।

हरिशब्दस्य तृतीयाद्विवचने हरिभ्याम् इति रूपम्। अस्य अदन्ताङ्गाभावात् सुपि च इत्यनेन दीर्घः न। बहुवचने हरिभिः इति रूपम्। अत्रापि अदन्ताङ्गाभावात् बहुवचने झल्येत् इत्यनेन न एदादेशः।

## पाठगतप्रश्नाः-२

७. आतो धातोः इति सूत्रस्य अर्थं लिखत।
८. हरि जस् इति स्थिते इकारस्य गुणः कथम्।
९. जसि च इति सूत्रस्य अर्थं लिखत।
१०. हे हरे इति केन सूत्रेण गुणः भवति।
११. घिसंज्ञाविधायकं सूत्रं किम् अस्ति।
१२. घेः परस्य आङः नादेशः केन सूत्रेण विधीयते।

## [ १२.१०] घेर्ङिति॥ (७.३.१११)

**सूत्रार्थः** - घिसंज्ञकस्य ङिति सुपि गुणः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। घेः ङिति इति सूत्रगतपदच्छेदः। घेः इति षष्ठ्येकवचनान्तं पदम्। ङिति इति सप्तम्येकवचनान्तं पदम्। ह्रस्वस्य गुणः इत्यस्मात् सूत्रात् गुणः इति प्रथमान्तं पदम् अनुवर्तते। सुपि च इत्यस्मात् सूत्रात् सुपि इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। घेः ङिति सुपि गुणः इति पदयोजना। अत्र गुणशब्दश्रवणात् इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तं पदम् उपतिष्ठते। इकः इति घेः इत्यस्य विशेषणम्। अतः तदन्तविधिना इगन्तस्य इति लभ्यते। ङिति इत्यत्र सप्तमीनिर्देशात् ङिति परे इत्यर्थः लभ्यते। घेः इति षष्ठीनिर्देशात् अलोन्त्यस्य इति परिभाषया अन्त्यस्य अलः इति लभ्यते। तेन अस्य सूत्रस्य इगन्तस्य घिसंज्ञकस्य ङिति सुपि परे अन्त्यस्य अलः गुणः भवति इत्यर्थो लभ्यते।

**उदाहरणम्-** हरये।

**सूत्रार्थसमन्वयः-** हरिशब्दात् चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये, अनुबन्धलोपे हरि ए इति स्थितिः। ङेप्रत्ययः ङिदस्ति। तेन ङिति सुपि परे अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन घेर्ङिति इति सूत्रेण घिसंज्ञकस्य हरिशब्दस्य अलोऽन्त्यस्य इकारस्य स्थानत आन्तर्यात् गुणे एकारे हरे ए इति स्थिते, एकाररूपेऽचि परे एचोऽयवायावः इत्यनेन एकारस्य अयादेशे संयोगे हरये इति रूपं सिद्ध्यति।

चतुर्थीद्विवचने हरिभ्याम्, बहुवचने हरिभ्यः चेति रूपं भवति।

## [१२.११] ङसिङसोश्च॥ (६.१.११०)

**सूत्रार्थः** - एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। ङसिङसोः च इति सूत्रगतपदच्छेदः। ङसिङसोः इति षष्ठीद्विवचनान्तं पदम्। ङसिश्च ङस् च इति ङसिङसौ इतरेतरयोगद्वन्द्वः, तयोः ङसिङसोः। चेति अव्ययपदम्। एङः पदान्तादति इत्यस्मात् सूत्रात् एङः इति पञ्चम्यन्तं पदम्, अति इति सप्तम्यन्तं पदं चानुवर्तते। अमि पूर्वः इत्यस्मात् सूत्रात् पूर्वः इति प्रथमान्तं पदम् अनुवर्तते। एकः पूर्वपरयोः इत्यधिक्रियते। एङः ङसिङसोः पूर्वपरयोः एकः पूर्वः च अति इति पदयोजना। एङः इत्यत्र एङ् इति प्रत्याहारस्य वाचकः। अति इत्यस्य ह्रस्वे अकारे परे इत्यर्थः। एवञ्च अस्य सूत्रस्य अर्थः भवति एङः ङसिङसोः अकारे परे पूर्वरूपम् एकादेशः भवति इति।

**उदाहरणम्-** हरेः।

**सूत्रार्थसमन्वयः-** हरिशब्दात् पञ्चम्येकवचनविवक्षायां ङसिप्रत्यये अनुबन्धलोपे, जसि च इति गुणे एकारे हरे अस् इति जातम्। ततः आयदेशे प्राप्ते तं बाधित्वा ङसिङसोश्च इति सूत्रेण पूर्वरूपैकादेशे हरेस् इति जातम्। ततः रुत्वे विसर्गे च हरेः इति सिद्ध्यति।

पञ्चमीद्विवचने हरिभ्याम्, बहुवचने च हरिभ्यः रूपम्। षष्ठ्येकवचने ङस्प्रत्यये हरि ङस् इत्यत्र अनुबन्धलोपे, गुणे हरे अस् इति भवति। ततः आयादेशे प्राप्ते तं बाधित्वा ङसिङसोश्च इति सूत्रेण पूर्वरूपैकादेशे हरेस् इति जातम्। ततः रुत्वे विसर्गे च हरेः इति सिद्ध्यति।

षष्ठीद्विवचनविवक्षाम् ओस्प्रत्यये हरि ओस् इति स्थितिः भवति। ततः इको यणचि इत्यनेन इकः अचि परे यणि यकारादेशे हर्य् ओस् इति भवति। अत्र सकारस्य रुत्वे विसर्गे च हर्योः इति रूपम्।

षष्ठीबहुवचने आमि हरि आम् इति जाते ह्रस्वनद्यापो नुट् इत्यनेन नुटि अनुबन्धलोपे हरि नाम् इति भवति। ततः नामि इत्यनेन नामि परे इकारस्य दीर्घे ईकारे हरी नाम् इति जातः। ततः नकारस्य णत्वे हरीणाम् इति सिद्ध्यति।

## [१२.१२] अच्च घेः॥ (७.३.११९)

**सूत्रार्थः** - इदुद्भ्यामुत्तरस्य ङेः औकारादेशः घेः अकारः अन्तादेशश्च भवति।

**सूत्रव्याख्या-** विधिसूत्रम्। अत् च घेः इति सूत्रगतपदच्छेदः। अत् इति प्रथमैकवचननान्तं पदम्। चेति अव्ययपदम्। घेः इति षष्ठ्येकवचनान्तं पदम्। ङेराम्नद्याम्नीभ्यः इत्यस्मात् सूत्रात् ङेः इति षष्ठ्यन्तं पदम् अनुवर्तते। इदुद्भ्याम् इति पञ्चम्यन्तं सूत्रम् औत् इति प्रथमान्तं सूत्रं चानुवर्तते। इदुद्भ्याम् ङेः औत् घेः अत् इति पदयोजना। इदुद्भ्याम् इति पञ्चमीनिर्देशात् तस्मादित्युत्तरस्य इति परिभाषया उत्तरस्य इति लभ्यते। घेः इत्यत्र षष्ठीनिर्देशात् अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः आदेशः इत्यर्थो लभ्यते। इदुद्भ्याम् परस्य ङेः औत् घेः अत् च इति सूत्रसमन्वयः। अनेन सूत्रेण कार्यद्वयं भवति। एकं च इदुद्भ्याम् उत्तरस्य ङेः औदादेशः भवति, अपरञ्च घेः अदादेशः भवति। तेन अस्य सूत्रस्य इकारान्तात् उकारान्तात् च परस्य ङेः औत्स्याद् घेः अकारः अन्तादेशः च भवति इति अर्थः लभ्यते।

**उदाहरणम्-** हरौ।

**सूत्रार्थसमन्वयः-** हरिशब्दात् सप्तम्येकवचनविवक्षायां ङिप्रत्यये अनुबन्धलोपे हरि इ इति स्थितिः भवति। ततः घेर्ङिति इति गुणे प्राप्ते अच्च घेः इत्यनेन सूत्रेण ङितः इकारस्य औदादेशः भवति। किञ्च अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन घिसंज्ञकस्य हरिशब्दस्य अलोऽन्त्यस्य इकारस्य अदादेशः भवति। तदा हर औ इति स्थितिः जायते। तदा वृद्धिरेचि इत्यनेन वृद्धौ एकादेशे हरौ इति रूपं सिद्ध्यति।

सप्तमीद्विवचने ओसिप्रत्यये हर्योः, बहुवचने सुप्प्रत्यये हरिषु इति रूपं भवति।

## पाठगतप्रश्नाः-३

१३. हरि+ए इत्यत्र गुणः कथम्।

१४. घेर्ङिति इति सूत्रस्य अर्थं लिखत।

१५. घेर्ङिति इति कीदृशं सूत्रम्।

१६. ङसिङसोश्च इति सूत्रेण किं विधीयते।

१७. ङसिङसोश्च इति सूत्रस्य अर्थं लिखत।

१८. अच्च घेः इति कीदृशं सूत्रम्।

## [ १२.१३] गोतो णित्॥ (७.१.९०)

**सूत्रार्थः** - गोशब्दात्परं सर्वनामस्थानं णिद्वत्स्यात् इति।

**सूत्रव्याख्या-** इदं अतिदेशसूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। गोतः णित् इति सूत्रगतपदच्छेदः। गोतः इति पञ्चम्येकवचनान्तं पदम्। तोऽत् सर्वनामस्थाने इत्यस्मात् सूत्रात् सर्वनामस्थाने इत्यनुवृत्तं प्रथमान्ततया विपरिणम्यते। णित् इति प्रथमैकवचनान्तं पदम्। गोतः इति तपरकरणम्। गोतः इत्यत्र

पञ्चमीनिर्देशात् तस्मादित्युत्तरस्य इत्यनया परिभाषया गोशब्दात् परम् इत्यर्थो लभ्यते। तेन गोशब्दात्परं सर्वनामस्थानं णिद्वद्भवति इति सूत्रार्थो लभ्यते।

**उदाहरणम्-** गौः।

गोशब्दस्य प्रथमैकवचनविवक्षायां सुप्रत्यये गो सु इति जातम्। ततः उकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे गो स् इति भवति। अत्र सुप्रत्ययः सुडनपुंसकस्य इत्यनेन सर्वनामस्थानसंज्ञकः अस्ति। तस्मात् अनेन सूत्रेण तस्य सुप्रत्ययस्य णिद्वद्भावः भवति। ततः अग्रिमं सूत्रं प्रवतते।

## [ १२.१४] अचो ञ्णिति॥ (७.१.९०)

**सूत्रार्थः** - ञिति णिति च परे अजन्तस्य अङ्गस्य वृद्धिः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः।अचः ञ्णिति इति सूत्रगतपदच्छेदः। अचः इति षष्ठ्येकवचनान्तं पदम्। ञ्णिति इति सप्तम्येकवचनान्तं पदम्। ञ् च ण् च इति ञ्णौ, तौ इतौ यस्य तत् ञ्णित् तस्मिन् इति ञ्णिति इति द्वन्द्वगर्भबहुव्रीहिसमासः। मृजेर्वृद्धिः इत्यस्मात् सूत्रात् वृद्धिः इति प्रथमान्तं विधेयपदम् अनुवर्तते। अङ्गस्य इत्यधिक्रियते। अचः इति पदम् अङ्गविशेषणम्। तेन तदन्तविधिना अजन्तस्य अङ्गस्य इत्यर्थो लभ्यते। अतः ञिति णिति च परे अजन्तस्य अङ्गस्य वृद्धिः भवति इति सूत्रस्य अर्थः भवति।

**उदाहरणम्-** गौः।

**सूत्रार्थसमन्वयः-** गोशब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे गो स् इति भवति। सुप्रत्ययः सुडनपुंसकस्य इत्यनेन सर्वनामस्थानसंज्ञकः अस्ति। तस्मात् गोतो णित् इत्यनेन सूत्रेण सुप्रत्यये णिद्वद्भावः अतिदिश्यते। ततः णित्त्वात् अनेन सूत्रेण णिति परे अजन्तस्य अङ्गस्य वृद्धौ औकारे गौस् इति भवति। ततः सकारस्य रुत्वे विसर्गे च गौः इति रूपम्।

प्रथमाद्विवचने औप्रत्यये गो औ इत्यत्र गोतो णित् इत्यनेन सूत्रेण णिद्वद्भावः भवति। ततः अचो ञ्णिति इत्यनेन सूत्रेण अजन्तस्य अङ्गस्य वृद्धौ गौ औ इति भवति। ततः एचोऽयवायावः इत्यनेन सूत्रेण आवादेशे गावौ इति रूपं भवति।

बहुवचने जस्प्रत्यये अनुबन्धलोपे च गो अस् इति स्थितिः भवति। ततः णिद्वद्भावे वृद्धौ च गौ अस् इति भवति। ततः आवादेशे सकारस्य रुत्वे विसर्गे च गावः इति रूपं सिद्ध्यति।

गोशब्दस्य सम्बोधनैकवचने सुप्रत्यये अनुबन्धलोपे हे गो स् इति भवति। सुप्रत्ययस्य णिद्वद्भावे अचो ञ्णिति इत्यनेन वृद्धौ गौस् इति जाते ततः रुत्वे विसर्गे गौः इति रूपम्।

द्विवचने औप्रत्यये पूर्ववत् णिद्वद्भावे हे गावौ इति रूपं भवति। बहुवचने जस्प्रत्यये अनुबन्धलोपे हे गो अस् इत्यत्र पूर्ववत् णिद्वद्भावे च हे गावः इति रूपं सिद्ध्यति।

## [ १२.१५] औतोऽम्शसोः॥ (६.१.९१)

**सूत्रार्थः** - ओकारात् अम्शसोरचि परे आकार एकादेशः स्याद्।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। आ ओतः अम्शसोः इति सूत्रगतपदच्छेदः। तत्र आ इति लुप्तप्रथमाकं विधेयबोधकं पदम्। ओतः इति पञ्चम्येकवचनान्तं पदम्। अम्शसोः इति षष्ठीद्विवचनान्तं समस्तं पदम्। अम् च शस् च अम्शसौ, तयोः इति इतरेतरद्वन्द्वः। षष्ठी च अत्र अवयवार्थिका। इको यणचि इत्यतः अचि सप्तम्यन्तं पदम् अनुवर्तते। एकः पूर्वपरयोः इत्यधिकृतम्। ओतः इत्यत्र तपरकरणात् ओकारात् इत्यर्थः जायते। ओतो अम्शसोः अचि पूर्वपरयोः आ एक इत्यन्वयः। तेन अस्य सूत्रस्य ओकारात् अम्शसोः अवयवे अचि परे पूर्वपरयोः आकार एकादेश इति सूत्रार्थः भवति।

**उदाहरणम्**- गाम्।

**सूत्रार्थसमन्वयः**- गोशब्दाद् द्वितीयैकवचनविवक्षायां अमि प्रकृतसूत्रेण ओकाराकारयोः आकाररूपैकादेशे गामिति रूपम्।

द्वितीयाद्विवचनविवक्षायां औट्प्रत्यये अनुबन्धलोपे गो औ इति जाते पूर्ववत् गावौ इति रूपं भवति।

बहुवचने शस्प्रत्यये अनुबन्धलोपे गो अस् इति भवति। ततः औतोऽम्शसोः इत्यनेन ओकाराकारयोः आकाररूपैकादेशे सकारस्य रुत्वे विसर्गे च गाः इति रूपं भवति।

गोशब्दस्य तृतीयैकवचने टाप्रत्यये अनुबन्धलोपे आ इति स्थितिः भवति। ततः एचोऽयवायावः इत्यनेन ओकारस्य अवादेशे गवा इति रूपं सिद्ध्यति।

तृतीयाद्विवचने भ्याम्प्रत्यये गोभ्याम् इति रूपं सिद्ध्यति। बहुवचने भ्यस्प्रत्यये सकारस्य रुत्वे विसर्गे च गोभ्यः इति रूपं सिद्ध्यति।

चतुर्थ्येकवचने ङेप्रत्यये अनुबन्धलोपे गो ए इति स्थितिः भवति। ततः एचोऽयवायावः इत्यनेन ओकारस्य अवादेशे गवे इति रूपं सिद्ध्यति। द्विवचने भ्याम्प्रत्यये गोभ्याम् इति बहुवचने भ्यस्प्रत्यये गोभ्यः इति च रूपं सिद्ध्यति।

पञ्चम्येकवचने ङसिप्रत्यये अनुबन्धलोपे गो अस् इत्यत्र ङसिङसोश्च इत्यनेन सूत्रेण पूर्वरूपैकादेशे गोः इति रूपम्। द्विवचने भ्याम्प्रत्यये गोभ्याम् इति रूपं भवति। बहुवचने भ्यस्प्रत्यये गोभ्यः इति च रूपं सिद्ध्यति।

षष्ठ्येकवचने ङस्प्रत्यये अनुबन्धलोपे गो अस् इत्यत्र ङसिङसोश्च इत्यनेन सूत्रेण पूर्ववत् पूर्वरूपैकादेशे गोः इति रूपं सिध्यति। द्विचवने ओस्प्रत्यये गो ओस् इत्यत्र एचोऽयवायावः इत्यनेन सूत्रेण अवादेशे रुत्वे विसर्गे च गवोः इति रूपम्। बहुवचने आम्प्रत्यये गो आम् इत्यत्र पूर्ववत् ओकारस्य अवादेशे गवाम् इति रूपम्।



सप्तमीबहुवचने ङिप्रत्यये अनुबन्धलोपे गो इ इत्यत्र गूर्ववत् अवादेशे गवि इति रूपम्। द्विवचने ओस्प्रत्यये गो ओस् इत्यत्र पूर्ववत् अवादेशे रुत्वे विसर्गे च गवोः इति रूपम्। बहुवचने सुप्प्रत्यये अनुबन्धलोपे च गो सु इत्यत्र सकारस्य षत्वे गोषु इति रूपं सिद्ध्यति।

सिद्धान्तकौमुद्याम् अस्मिन् प्रकरणे विद्यामानानि अन्येषु प्रकरणेषु सदा आवश्यकानि कानिचन सूत्राणि पर्यालोच्यन्ते।

## [ १२.१६] अलोऽन्त्यात्पूर्व उपधा॥ (१.१.६५)

**सूत्रार्थः**- अन्त्यादलः पूर्वो वर्णः उपधासंज्ञः स्याद्।

**सूत्रव्याख्या**- इदं संज्ञासूत्रम्। अनेन सूत्रेण उपधासंज्ञा विधीयते। अलः अन्त्यात् पूर्वः उपधा इति सूत्रगतपदच्छेदः। अलः इति पञ्चम्येकवचनान्तं पदम्। अन्त्यात् इत्यपि पञ्चम्येकवचनान्तं पदम्। अन्ते भवः अन्त्यः। अन्ते विद्यमानः इति यावत्। अन्त्याद् अलः पूर्वः उपधा इति पदयोजना। अल् इति प्रत्याहारः वर्णपर्यायः। अलः इति अन्त्यादित्यनेन विशिष्यते। पूर्वः इति प्रथमैकवचनान्तं पदम्। उपधा इति प्रथमैकवचनान्तं पदम्। तेन अस्य सूत्रस्य अर्थः भवति- अन्त्यः यो अल् तस्मात् पूर्वो वर्णः उपधासंज्ञः स्याद्।

**उदाहरणम्**- सखा

**सूत्रार्थसमन्वयः**- अस्याः संज्ञायाः परमेव सर्वनामस्थाने चासम्बुद्धौ, अत उपधायाः इत्यादिसूत्रैः उपधाकार्याणि सम्भवन्ति। यथा सखिशब्दस्य प्रातिपदिकसंज्ञायां प्रथमैकवचनविवक्षायां सौ अनुबन्धलोपे सखि स् इति जातम्। ततः अनङ् सौ इति सूत्रेण अनङादेशे सखन् स् इति जाते सखन् शब्दस्य अन्त्यात् अलः पूर्वस्य उपधासंज्ञा भवति। तदा सर्वनामस्थाने चासम्बुद्धौ इत्यनेन उपधायाः अकारस्य दीर्घे आकारे सखान् स् इति नान्तात् परस्य सस्य हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन लोपे सखान् इत्यस्य प्रत्ययलोपमाश्रित्य सुप्तिङन्तं पदम् इति पदसंज्ञायां नकारस्य नलोपः प्रातिपदिकान्तस्य इत्यनेन नलोपे सखा इति रूपम्।

## [ १२.१७] अचि श्नुधातुभ्रुवां य्वोरियङुवङौ॥ (६.४.७७)

**सूत्रार्थः**- श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोः भ्रूशब्दस्य चाङ्गस्य इयङुवङौ स्तः अजातौ प्रत्यये परे।

**सूत्रव्याख्या**- इदं विधिसूत्रम्। अस्मिन् सूत्रे चत्वारि पदानि विद्यन्ते। अचि श्नुधातुभ्रुवां य्वोः इयङुवङौ इति सूत्रगतपदच्छेदः। अचि इति सप्तम्येकवचनान्तं पदम्। श्नुधातुभ्रुवाम् इति षष्ठीबहुवचनान्तं पदम्। श्नुश्च धातुश्च भ्रूश्च इति श्नुधातुभ्रुवः इतरेतरयोगद्वन्द्वसमासः, तेषां इति श्नुधातुभ्रुवाम्। य्वोः इति षष्ठीद्विवचनान्तं पदम्। इश्च उश्च यू इति इतरेतरयोगद्वन्द्वसमासः, तयोः य्वोः इवर्णोवर्णयोः इत्यर्थः। इयङुवङौ इति प्रथमाद्विवचनान्तं पदम्। इयङ् च उवङ् च इति इयङुवङौ इतरेतरयोगद्वन्द्वसमासः। अङ्गस्य इति षष्ठ्यन्तं सूत्रम् अधिक्रियते। श्नुधातुभ्रुवाम् इत्यत्र श्नु इति प्रत्ययः। तेन प्रत्ययग्रहणपरिभाषया श्नुप्रत्ययान्तः इत्यर्थः। अङ्गस्य इति पदस्य वचनविपरिणामेन अङ्गानाम् इति

लाभः भवति। प्रत्यये परे एव पूर्वस्य अङ्गसंज्ञा भवति। तस्मात् प्रत्यये इति आक्षिप्यते। तच्च अचि इति सप्तम्यन्तपदे विशेष्यत्वेन अन्वेति। अतः तदादिविधिना अजादौ प्रत्यये परे इत्यर्थो लभ्यते। य्वोरिति धातोरेव विशेषणम्। तेन तदन्तविधिना इवर्णान्तस्य उवर्णान्तस्य धातोः इत्यर्थः लभ्यते। तेन अस्य सूत्रस्य अर्थः भवति श्नुप्रत्ययान्तस्य इवर्णान्तस्य उवर्णान्तस्य च धातोः भ्रूशब्दस्य चाङ्गस्य इयङुवङौ आदेशौ स्तः अजातौ प्रत्यये परे इति।

**उदाहरणम्-** सुधियौ।

**सूत्रार्थसमन्वयः-** सुधीशब्दात् प्रथमाद्विवचने औ प्रत्यये सुधी औ इति भवति। ततः इको यणचि इत्यनेन सूत्रेण यणादेशः प्राप्नोति। किन्तु सुधी इत्यत्र धी इति ईकारान्तः धातुः अस्ति। ततः परं अजादिप्रत्ययः अस्ति। अतः इको यणचि इति सूत्रं बाधित्वा क्ङिच्च इति परिभाषया परिष्कृतेन अनेन सूत्रेण सुधीशब्दावयवस्य अन्त्यस्य ईकारस्य इयङादेशे अनुबन्धलोपे सुध् इय औ इति रूपं भवति। ततः वृद्धौ सुधियौ इति रूपं सिद्ध्यति।

## [ १२.१८] एरनेकाचोऽसंयोगपूर्वस्य॥ (६.४.८२)

**सूत्रार्थः** - धात्ववयवसंयोगपूर्वो न भवति यः इवर्णस्तदन्तो यो धातुः तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। एः अनेकाचः असंयोगपूर्वस्य इति सूत्रगतपदच्छेदः। एः इति षष्ठ्येकवचनान्तं पदम्। इवर्णस्य इत्यर्थः। अनेकाचः इति षष्ठ्येकवचनान्तं पदम्। न एकः इति अनेकः, अनेकः अच् यस्य सः अनेकाच् इति बहुव्रीहिसमासः, तस्य इति अनेकाचः। असंयोगपूर्वस्य इति षष्ठ्येकवचनान्तं पदम्। नास्ति संयोगः पूर्वो यस्य सः असंयोगपूर्वः, तस्य असंयोगपूर्वस्य इति बहुव्रीहिसमासः। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यस्मात् सूत्रात् धातोः इति एकदेशस्य अनुवृत्तिः भवति। धातोः इति पदस्य आवृत्तिः क्रियते। तत्र एकम् अवयवषष्ठ्यन्तम्। अन्यत् स्थानषष्ठ्यन्तम्। इणो यण् इति सूत्रात् यण् इति प्रथमान्तं पदम् अनुवर्तते। अनेकाचः धात्ववयवस्य असंयोगपूर्वस्य इवर्णस्य धातोः अङ्गस्य यण् अचि इति पदयोजना। एरिति धातोरिति षष्ठ्यन्तस्य विशेषणम्। तेन तदन्तविधिना इकारान्तस्य धातोः इत्यर्थः लभ्यते। अङ्गस्य इति पदं स्थानषष्ठ्यन्तधातुना विशेष्यते। तेन तदन्तविधिना धात्वन्तस्य अङ्गस्य इत्यर्थो लभ्यते। अवयवषष्ठ्यन्तस्य धातोः पदम् असंयोगपूर्वस्य इत्यत्र संयोगांशे अन्वेति। अनेकाचः इति अङ्गस्य इत्यत्र अन्वेति। अङ्गस्य इत्यनेन प्रत्यये इति आक्षिप्यते। अचि इति प्रत्ययविशेषणम्। तेन तदादिविधिना अजादौ प्रत्यये परे इत्यर्थो लभ्यते। एः इत्यत्र षष्ठीनिर्देशात् अलोऽन्त्यस्य इति परिभाषाया अन्त्यस्य अलः आदेशः इति लभ्यते। इवर्णस्य स्थाने अचं निमित्तीकृत्य यण् आदेशः भवति। तेन अस्य सूत्रस्य संयोगभिन्नः यो धात्ववयवः इवर्णः तदन्तो यो धातुः तदन्तस्य अनेकाचः अङ्गस्य यण् स्यादजादौ प्रत्यये परे इत्यर्थो भवति।

**उदाहरणम्-** प्रध्यौ।

**सूत्रार्थसमन्वयः**-प्रध्यौ इति अस्य सूत्रस्य उदाहरणम्। प्रधीशब्दात् प्रथमाद्विवचनविवक्षायाम् औप्रत्यये प्रधी औ इति स्थितिः जाता। प्रधी इत्यत्र धी इति धातुः ईवर्णान्तः अस्ति। किञ्च ईवर्णः धात्ववयवसंयोगपूर्वः न भवति। एवञ्च प्रधीशब्दः धी इति धात्वन्तः अनेकाचः अङ्गसंज्ञकः वर्तते। ततः परम् अजादिप्रत्ययः अपि वर्तते। अतः प्रकृतसूत्रेण ईकारस्य यणादेशे संयोगे प्रध्यौ इति रूपम्।

## पाठगतप्रश्नाः-४

१९. गोतो णित् इति सूत्रस्य अर्थं लिखत।

२०. अचो ञ्णिति इति सूत्रस्य अर्थं लिखत।

२१. अचो ञ्णिति इति सूत्रेण किं विधीयते।

२२. औतोऽम्शसोः इति सूत्रेण किं विधीयते।

२३. उपधासंज्ञाविधायकं सूत्रं किम्।

२४. अचि श्नु... इति सूत्रं पूरयत।

२५. एरनेकाचोऽसंयोगपूर्वस्य इति सूत्रस्य अर्थं लिखत।

२६. कुमार्यौ इत्यत्र यण् केन विधीयते।

२७. सुधियौ इत्यत्र यण् केन विधीयते।

## पाठसारः

अस्मिन् पाठे आकारान्तस्य विश्वपाशब्दस्य रूपाणि कथं भवन्ति इति विस्तरेण दर्शितम्। सुडनपुंसकस्य इत्यनेन सूत्रेण नपुंसकभिन्नशब्देभ्यः परस्य सुट्प्रत्ययस्य सर्वनामस्थानसंज्ञा भवति। सर्वनामस्थाने भिन्ने प्रत्यये परे स्वादिष्वसर्वनामस्थाने इत्यनेन सूत्रेण पदसंज्ञा भवति। सर्वनामस्थाने भिन्ने अजादिप्रत्यये परे यचि भम् इत्यनेन सूत्रेण भसंज्ञा भवति। हरिशब्दस्य रूपसाधनप्रक्रियापि अत्र विस्तरेण उपस्थापिता। ओकारान्तस्य गोशब्दस्यापि रूपसिद्धिप्रक्रिया अस्मिन् पाठे आलोचिता।

## पाठान्तप्रश्नाः

१. दीर्घाज्जसि च इत्यस्य सूत्रस्य अर्थं लिखत।

२. यचि भम् इति सूत्रं व्याख्यात।

३. शेषो घ्यसखि इति सूत्रं व्याख्यात।

४. ङसिङसोश्च इति सूत्रं व्याख्यात।

५. औतोऽम्शसोः इति सूत्रं व्याख्यात।



६. अलोऽन्त्यात्पूर्व उपधा इति सूत्रं व्याख्यात।

७. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति सूत्रं व्याख्यात।

८. एरनेकाचोऽसंयोगपूर्वस्य इति सूत्रं व्याख्यात।

९. प्रदत्तानि रूपाणि ससूत्रं साधयत – विश्वपाः विश्वपा हरिः हरयः हरिणा हरिषु हरेः गौः गाम्।

## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. पूर्वसवर्णदीर्घनिषेधः।

२. दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् इति।

३. सुडनपुंसकस्य।

४. स्वादिष्वसर्वनामस्थाने।

५. अधिकारसूत्रम्।

६. यचि भम्।

**उत्तराणि-२**

७. आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्याद्।

८. जसि च।

९. ह्रस्वन्तस्याङ्गस्य गुणः स्यात् जसि परे इति।

१०. ह्रस्वस्य गुणः।

११. शेषो घ्यसखि।

१२. आङो नाऽस्त्रियाम्।

**उत्तराणि-३**

१३. घेर्ङिति।

१४. घिसंज्ञकस्य ङिति सुपि गुणः स्याद्।

१५. विधिसूत्रम्।

१६. पूर्वरूपमेकादेशः।

१७. एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्याद्।

१८. विधिसूत्रम्।

**उत्तराणि-४**

१९. गोशब्दात्परं सर्वनामस्थानं णिद्वत्स्यात् इति।

२०. ञिति णिति च परेऽजन्तस्य अङ्गस्य वृद्धिः स्याद्।

२१. वृद्धिः।

२२. आकारः एकादेशः।

२३. अलोऽन्त्यात्पूर्व उपधा।

२४. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ।

२५. धात्ववयवसंयोगपूर्वो न भवति यः इवर्णस्तदन्तो यो धातुः तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे इति।

२६. एरनेकाचोऽसंयोगपूर्वस्य।

२७. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ।

## ।।इति द्वादशः पाठः।।

# १३

# अजन्तस्त्रीलिङ्गे रमानदीशब्दरूपाणि

## प्रस्तावना

पूर्वम् अजन्तपुंलिङ्गप्रकरणं पठितम्। अधुना अजन्तस्त्रीलिङ्गप्रकरणं प्रारभ्यते। प्रातिपदिकशब्दाः च द्विविधाः इति पूर्वम् उक्तम्। १.अजन्तशब्दः२.हलन्तशब्दः इति तस्य भेदद्वयम्। येषां शब्दानाम् अन्ते अच् भवति ते अजन्ताः शब्दाः। येषां शब्दानाम् अन्ते हल् भवति ते हलन्ताः शब्दाः। तत्र लिङ्गभेदेन अजन्तशब्दाः हलन्तशब्दाश्च त्रिविधाः भवन्ति। तथाहि अजन्तपुंलिङ्गशब्दाः, अजन्तस्त्रीलिङ्गशब्दाः, अजन्तनपुंसकलिङ्गशब्दाः, हलन्तपुंलिङ्गशब्दाः, हलन्तस्त्रीलिङ्गशब्दाः, हलन्तनपुंसकलिङ्गशब्दाश्चेति। अस्मिन् पाठे अजन्तस्त्रीलिङ्गशब्दानां रूपसाधनप्रक्रियाम् आलोचयामः। स्त्रीलिङ्गवाचकशब्दाः द्विधा विभक्ताः। केचन शब्दाः पुंलिङ्गे विद्यन्ते। तेषु एव स्त्रीत्वविवक्षायां टाबादयः स्त्रीप्रत्ययाः भवन्ति। यथा रमा सर्वा इत्यादयः। अपरे केचन तु स्वतः एव स्त्रीलिङ्गवाचकाः, येषु कोऽपि विशेषप्रत्ययः न प्रयुज्यते। यथा लक्ष्मीः श्रीः मतिः इत्यादयः। स्त्रीप्रत्ययानां विचारस्तु स्त्रीप्रत्ययप्रकरणे विहितः। स्त्रीलिङ्गवाचकशब्दानां रूपाणि कथं भवन्ति इति विचाराय प्रकरणमिदं प्रारभ्यते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- स्त्रीलिङ्गशब्दानां रूपाणि कथं भवन्ति इति ज्ञास्यति।
- अपृक्तसंज्ञां विस्तरेण ज्ञातुं शक्ष्यति।
- प्रत्ययलोपे अपि तदाश्रितानि कार्याणि कथं भवन्ति इति बोद्धुं समर्थः भविष्यति।
- रमाशब्दस्य रूपसाधनानि कर्तुं शक्तः भविष्यति।
- नदीसंज्ञाविषये विस्तरेण ज्ञास्यति।

### ।।रमा।।

आदौ रमाशब्दस्य रूपसाधनप्रक्रियाम् अवलोकयामः। रमाशब्दः टाप् इति स्त्रीप्रत्ययान्तः। रमते विष्णुना साकम् इत्यर्थे विद्यमानात् रमु क्रीडायाम् इति धातोः नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः इत्यनेन सूत्रेण पचादिगणपठितात् अच्प्रत्यये प्रक्रियाकार्ये रमशब्दः निष्पद्यते। ततः स्त्रीत्वविवक्षायां स्त्रियाम् इत्यधिकारे विद्यमानेन अजाद्यतष्टाप् इत्यनेन सूत्रेण टापि अनुबन्धलोपे रमा इति निष्पद्यते। रमा इति टाप्प्रत्ययान्तः। अप्रातिपदिकत्वेऽपि तस्मात् ङ्याप्प्रातिपदिकात् इत्यत्र ङ्यापोः पृथग्ग्रहणात्, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इत्यनया परिभाषया वा स्वादयः प्रत्ययाः भवन्ति। ततः

प्रथमैकवचनविवक्षायां सुप्रत्यये रमा सु इति जाते उकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञा भवति। ततः तस्य लोपः इत्यनेन तस्य लोपे रमा स् इति जायते। अत्र सुप्रत्ययः अनुबन्धविनिर्मुक्तः एकाल् अस्ति। तस्मात् अपृक्त एकाल् प्रत्ययः इति अनेन सूत्रेण सुप्रत्ययावयवस्य सकारस्य अपृक्तसंज्ञा भवति। तदा-

## [ १३.१] हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्॥ (६.१.६८)

**सूत्रार्थः** - हलन्तात्परं यौ ङ्यापौ तदन्तात् च परं सुतिसि इत्येतदपृक्तं हल् लुप्यते इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। हल्ङ्याब्भ्यः दीर्घात् सुतिसि अपृक्तं हल् इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे पञ्चपदानि सन्ति। हल्ङ्याब्भ्यः इति पञ्चमीबहुवचनान्तं पदम्। हल् च ङी च आप् च इति हल्ङ्यापः तेभ्यः हल्ङ्याब्भ्यः इति इतरेतरयोगद्वन्द्वसमासः। अत्र पञ्चमीश्रवणात् तस्मादित्युत्तरस्य इत्यनया परिभाषया परस्य इत्यर्थो लभ्यते। दीर्घात् इति पञ्चम्येकवचनान्तं पदम्। अस्य तु द्विवचनान्ततया विभक्तिविपरिणामः भवति। सुतिसि इति प्रथमैकवचनान्तं पदम्। सुश्च तिश्च सिश्च इति सुतिसि समाहारयोगद्वन्द्वसमासः। अपृक्तम् इति प्रथमैकवचनान्तं पदम्। हल् इत्यपि प्रथमैकवचनान्तं पदम्। लोपो व्योर्वलि इत्यस्मात् सूत्रात् लोपः इति प्रथमान्तं पदम् अनुवर्तते। शब्दस्वरूपेभ्यः इति अध्याहार्यम्। हल्ङ्याब्भ्यः शब्दस्वरूपेभ्यः दीर्घात् परस्य सुतिसि अपृक्तं हल् लोपः इति पदयोजना। शब्दस्वरूपेभ्यः हल्ङ्याब्भ्यः इत्यत्र विशेष्यत्वेन अन्वेति। तेन तदन्तविधिना हलन्तात् ङ्यन्तात् आबन्तात् शब्दस्वरूपात् इति लभ्यते। ङी इत्यनेन ङीप्, ङीष्, ङीन् इत्येतेषां ग्रहणम्। आप् इत्यनेन च टाप्, डाप्, चाप् इत्येतेषां ग्रहणं भवति। दीर्घात् इत्यत्र द्वित्वेऽपि एकवचनम् आर्षम्। दीर्घात् इति ङ्यापोरेव विशेषणम्, न तु हलः, हलः दीर्घाभावत्। दीर्घत्वं तु केवलम् अचः एव भवति। अपृक्तमिति हलिति च सामानाधिकरण्येन अन्वेति। तेन अस्य सूत्रस्य हलन्तात् परं यौ दीर्घौ ङ्यन्ताबन्तौ ताभ्यां परं सुतिसि इत्येतदपृक्तं हल् लुप्यते इति सूत्रार्थः भवति।

**उदाहरणम्-** रमा।

**सूत्रार्थसमन्वयः-** रमाशब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे रमा स् इति स्थितिः। अत्र रमा इति आबन्तः अस्ति। सुप्रत्ययश्च अपृक्त एकाल्प्रत्ययः इत्यनेन अपृक्तसंज्ञकः। अतः प्रकृतसूत्रेण सुप्रत्ययावयवस्य सकारस्य लोपे रमा इति रूपं सिद्ध्यति। तदा -

## [ १३.२] प्रत्ययलोपे प्रत्ययलक्षणम्॥ (१.१.६२)

**सूत्रार्थः** - प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्याद्।

**सूत्रव्याख्या-** इदं परिभाषासूत्रम्। प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रगतपदच्छेदः। पदद्वयात्मकेऽस्मिन् सूत्रे प्रत्ययलोपे इति सप्तम्येकवचनान्तं पदम्। प्रत्ययस्य लोपः प्रत्ययलोपः इति षष्ठीतत्पुरुषसमासः, तस्मिन् प्रत्ययलोपे। प्रत्ययलक्षणम् इति प्रथमान्तं सुबन्तं पदम्। प्रत्ययो लक्षणं निमित्तं यस्य तत् प्रत्ययलक्षणम् इति बहुव्रीहिसमासः। प्रत्ययस्य लोपे सति प्रत्ययनिमित्तं कार्यं स्यादित्यर्थः।

**उदाहरणम्-** यथा रमा इत्यत्र सुप्रत्यये लुप्ते अपि अनेन सूत्रेण प्रत्ययलक्षणम् आश्रित्य पदसंज्ञा भवति।

## [ १३.३] औङ आपः॥ (७.१.१८)

**सूत्रार्थः -** आबन्तादङ्गात् औङः शी भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। औङः आपः इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। आपः इति पञ्चम्येकवचनान्तं पदम्। आपः इत्यनेन टाप्, चाप्, डाप् इत्येतेषां स्त्रीप्रत्ययानां ग्रहणं भवति। औङः इति षष्ठ्येकवचनान्तं पदम्। अङ्गस्य इत्यधिकृतं पञ्चम्यन्ततया विपरिणम्यते। तच्च आपः इत्यनेन विशेष्यते। तेन तदन्तविधिना आबन्तात् अङ्गात् इत्यर्थो लभ्यते। औङः इति औकारविभक्तेः प्राचां संज्ञा। जशः शी इत्यस्मात् सूत्रात् शी इति प्रथमान्तं पदम् अनुवर्तते। औङ् स्थानी आदेशश्च शी इति। तेन आबन्तात् अङ्गात् परस्य औङः शी इत्यादेशः भवतीति सूत्रार्थो भवति।

**उदाहरणम्-** रमे।

**सूत्रार्थसमन्वयः-** रमाशब्दात् प्रथमाद्विवचनविवक्षायाम् औप्रत्यये रमा औ इति जातम्। ततः वृद्धिरेचि इति सूत्रेण वृद्धिः प्राप्ता। तं प्रबाध्य अनेकाल्शित्सर्वस्य इति परिभाषया परिष्कृतेन औङ आपः इति सूत्रेण अङ्गसंज्ञकात् आबन्तात् रमाशब्दात्परस्य औङः स्थाने अनेकाल्त्वात् शी इति सर्वादेशे रमा शी इति भवति। ततः स्थानिवद्भावेन प्रत्ययत्वात् लशक्वतद्धिते इति सूत्रेण तदाद्यस्य शस्य इत्संज्ञायां तस्य लोपः इति लोपे कृते रमा ई इति भवति। ततः आद् गुणः इति सूत्रेण पूर्वपरयोः आकारेकारयोः स्थाने स्थानत आन्तर्यात् एकाररूपगुणैकादेशे सर्वसंयोगे रमे इति रूपं सिद्धम्।

प्रथमाबहुवचने जस्प्रत्यये अनुबन्धलोपे रमा अस् इति जाते प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वसवर्णदीर्घः प्राप्तः। ततः दीर्घाज्जसि च इत्यनेन सूत्रेण तस्य बाधे अकः सवर्णे दीर्घः इत्यनेन सर्वणदीर्घे रमास् इति जातम्। ततः सकारस्य रुत्वे विसर्गे च रमाः इति रूपं भवति।

## पाठगतप्रश्नाः-१

१. हल्ङ्याब्भ्य...इति सूत्रं पूरयत।
२. हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रस्य अर्थं लिखत।
३. औङः आपः इत्यस्य सूत्रस्य अर्थं लिखत।
४. प्रत्ययलोपे प्रत्ययलक्षणम् इति कीदृशं सूत्रम्।

## [ १३.४] सम्बुद्धौ च॥ (७.३.१०६)

**सूत्रार्थः -** आपः एकारः स्यात्सम्बुद्धौ इति।

**सूत्रव्याख्या-** इदं आदेशविधायकसूत्रम्। सम्बुद्धौ च इति सूत्रगतपदच्छेदः। पदद्वयात्मकेऽस्मिन् सूत्रे सम्बुद्धौ इति सप्तम्येकवचनान्तं पदम्। चेति अव्ययपदम्। आङि चापः इत्यस्मात् सूत्रात् आपः इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। अङ्गस्य इत्यधिकृतम्। अङ्गस्य इति पदम् आपः इत्यस्य विशेषणम्। अतः तदन्तविधिना आबन्तस्य अङ्गस्य इत्यर्थो लभ्यते। बहुवचने झल्येत् इत्यस्मात् सूत्रात् एत् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। आपः इत्यत्र षष्ठीनिर्देशात् अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः स्थाने आदेशः भवति। तेन अस्य सूत्रस्य सम्बुद्धौ परे आपः एकारः भवति इत्यर्थो लभ्यते।

**उदाहरणम्-** हे रमे।

**सूत्रार्थसमन्वयः-** रमाशब्दात् सम्बोधनैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे हे रमा स् इति स्थितिः। सुप्रत्ययस्य सम्बुद्धिसंज्ञायां अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन अनेन सूत्रेण आबन्तस्य अन्त्यस्य अलः आकारस्य एकारादेशे हे रमे स् इति जातः। ततः एङ्ह्रस्वात्सम्बुद्धेः इत्यनेन सूत्रेण एङः परस्य सम्बुद्धिलोपे हे रमे इति रूपं सिद्ध्यति।

सम्बोधनद्विवचने औप्रत्यये हे रमा औ इति स्थितिः। ततः औङः श्यादेशे अनुबन्धलोपे रमा ई इति स्थितिः। ततः आद्गुणः इत्यनेन गुणे एकादेशे हे रमे इति रूपं सिद्ध्यति।

बहुवचने जस्प्रत्यये अनुबन्धलोपे रमा अस् इति स्थितिः। ततः सर्वणदीर्घे रुत्वे विसर्गे च हे रमाः इति सिद्ध्यति।

रमाशब्दस्य द्वितीयैकवचने अम्प्रत्यये रमा अम् इति स्थितिः भवति। ततः मकारस्य न विभक्तौ तुस्माः इत्यनेन इत्त्वनिषेधः भवति। ततः रमा अम् इत्यत्र अकः सवर्णे दीर्घः इत्यनेन दीर्घे प्राप्ते तं प्रबाध्य प्रथमयोः पूर्वसवर्णः इत्यनेन सूत्रेण पूर्वसवर्णदीर्घः प्राप्तः। ततः अतो गुणे इत्यनेन गुणे पूर्वरूपैकादेशे रमाम् इति रूपम्।

द्वितीयाद्विवचने च औट्प्रत्यये अनुबन्धलोपे, औङः श्यादेशे अनुबन्धलोपे रमा ई इति स्थितिः। ततः आद्गुणः इत्यनेन गुणे एकादेशे रमे इति रूपं सिद्ध्यति।

द्वितीयाबहुवचने शसि अनुबन्धलोपे रमा अस् इति स्थितिः भवति। ततः प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वसर्वणदीर्घे रुत्वे विसर्गे च रमाः इति रूपं सिद्ध्यति। अत्रेदं ध्येयं यद् रमाशब्दः पुंलिङ्गी नास्ति। तेन तस्माच्छसो नः पुंसि इत्यनेन कृतपूर्वसर्वर्णदीर्घात् परस्य शसः सस्य नत्वं न।

## [ १३.५]    आङि चापः॥ (७.३.१०५)

**सूत्रार्थः-** आङि ओसि च परे आबन्तस्य अङ्गस्य एदादेशः भवति ।

**सूत्रव्याख्या-** इदं आदेशविधायकसूत्रम्। आङि च आपः इति सूत्रगतपदच्छेदः। पदत्रयात्मकेऽस्मिन् सूत्रे आङि इति सप्तम्येकवचनान्तं पदम्। आङ् इति टासंज्ञा प्राचाम्। ओसि च इत्यस्मात् सूत्रात् ओसि इति सप्तम्यन्तं पदम् अनुवर्तते। चेति अव्ययपदम्। आपः इति षष्ठ्येकवचनान्तं पदम्। अङ्गस्य इत्यधिक्रियते। आपः इति पदम् अङ्गविशेषणम्। तेन तदन्तविधिना आबन्तस्य अङ्गस्य इत्यर्थो लभ्यते। आपः इत्यत्र षष्ठीनिर्देशात् अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः आदेशः भवति

इत्यर्थः लभ्यते। बहुवचने झल्येत् इत्यस्मात् सूत्राद् एदिति प्रथमान्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य आङि ओसि च परे आबन्तस्य अङ्गस्य एदादेशः भवति इत्यर्थो भवति।

**उदाहरणम्-** रमया।

**सूत्रार्थसमन्वयः-** रमाशब्दात् तृतीयैकवचनविवक्षायां टाप्रत्यये अनुबन्धलोपे रमा आ इति स्थितिः। अत्र रमाशब्दः आबन्तः अस्ति। ततः परं च आङस्ति। अतः आङि परे अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन आबन्तस्य अङ्गस्य अन्त्यस्य आकारस्य एदादेशे रमे आ इति स्थितिः। ततः एचोऽयवायावः इत्यनेन सूत्रेण एकारस्य अयादेशे रम् अय् आ इति जातः। ततः वर्णसम्मेलने रमया इति रूपं सिद्ध्यति।

तृतीयाद्विवचने भ्यामि प्रत्यये रमाभ्याम् इति रूपं सिद्ध्यति। बहुवचने च भिस्प्रत्यये सकारस्य रुत्वे विसर्गे च रमाभिः इति रूपम्।

## [ १३.६] याडापः॥ (७.३.११३)

**सूत्रार्थः -** आपः परस्य ङिद्विभक्तेः याडागमः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। याट् आपः इति सूत्रगतपदच्छेदः। पदद्वयात्मकेऽस्मिन् सूत्रे याट् इति प्रथमैकवचनान्तं पदम्। याटि इत्यत्र टकारः इत् अस्ति। अतः आद्यन्तौ टकितौ इति परिभाषया याट् इति आद्यावयवः इति लभ्यते। आपः इति पञ्चम्येकवचनान्तं पदम्। परस्य इत्यध्याहार्यम्। अङ्गस्य इत्यधिक्रियते। अङ्गस्य इति पदं पञ्चम्यन्ततया विपरिणम्यते। ततः आपः इत्यनेन विशेष्यते। तेन तदन्तविधिना आबन्तस्य अङ्गस्य इत्यर्थो लभ्यते। घेर्ङिति इत्यस्मात् ङिति इति सप्तम्येकवचनान्तं पदम्। ङिति इत्यत्र सप्तमी आपः इत्यत्र च पञ्चमी श्रूयते। अतः सप्तमीपञ्चम्योः उभयोः निर्देशः अस्ति। तस्मात् उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इति न्यायेन तस्मादित्युत्तरस्य इति परिभाषया ङिति इति सप्तम्यन्तं षष्ठ्यन्ततया विपरिणम्यते। ङितः इति षष्ठ्यन्तं पदं लभ्यते। एवम् अस्य सूत्रस्य अर्थः भवति- आपः परस्य ङितः याडागमो भवति इति।

**उदाहरणम्-** रमायै।

**सूत्रार्थसमन्वयः-** रमाशब्दात् चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये अनुबन्धलोपे रमा ए इति जातः। अत्र वृद्धौ प्राप्तायां तां बाधित्वा ङेप्रत्ययस्य ङित्त्वात् याडापः इत्यनेन सूत्रेण आपः परस्य ङितः याडागमे अनुबन्धलोपे रमा या ए इति भवति। ततः वृद्धिरेचि इत्यनेन सूत्रेण वृद्धौ ऐकारे रमायै इति रूपं सिद्ध्यति।

चतुर्थीद्विवचने भ्यामि रमाभ्याम् इति, बहुवचने रमाभ्यः इति रूपं भवति।

पञ्चम्येकवचनविवक्षायां ङसिप्रत्यये अनुबन्धलोपे रमा अस् इति स्थिते याडापः इत्यनेन सूत्रेण आबन्तस्य याडागमे अनुबन्धलोपे रमा या अस् इति भवति। ततः सवर्णदीर्घे रमायास् इति जाते सकारस्य रुत्वे विसर्गे च रमायाः इति रूपम्।

पञ्चमीद्विवचने भ्यामि रमाभ्याम् इति, बहुवचने रमाभ्यः इति रूपं भवति।

षष्ठ्येकवचनविवक्षायां ङस्प्रत्यये अनुबन्धलोपे पञ्चम्येकवचनवत् रमायाः इति रूपं भवति।

षष्ठीद्विवचनविवक्षायाम् ओस्प्रत्यये आङि चापः इत्यनेन सूत्रेण मकारोत्तरस्य आकारस्य एकारादेशे रमे ओस् इति स्थितिः। ततः एचोऽयवायावः इत्यनेन सूत्रेण अयादेशे सकारस्य रुत्वे विसर्गे च रमयोः इति रूपम्।

षष्ठीबहुवचने आम्प्रत्यये ह्रस्वनद्यापो नुट् इत्यनेन सूत्रेण आमः नुडागमे अनुबन्धलोपे नामि इत्यनेन नामि परे दीर्घे नकारस्य णत्वे च रमाणाम् इति रूपम्।

## [ १३.७] ङेराम्नद्याम्नीभ्यः॥ (७.३.११६)

**सूत्रार्थः -** नद्यन्ताद् आबन्ताद् नीशब्दाच्च परस्य ङेः आम् भवति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। ङेः आम् नद्याम्नीभ्यः इति सूत्रगतपदच्छेदः। पदत्रयात्मकेऽस्मिन् सूत्रे ङेरिति षष्ठ्येकवचनान्तं पदम्। ङेरित्यत्र षष्ठीश्रवणात् षष्ठीस्थाने योगा इत्यनया परिभाषया स्थाने पदम् उपतिष्ठते। नद्याम्नीभ्यः इति पञ्चमीबहुवचनान्तं पदम्। नद्याम्नीभ्यः इति पञ्चमीबहुवचनान्तं पदम्। नदी च आप् च नीश्च इति नद्याम्न्यः तेभ्यः नद्याम्नीभ्यः इति इतरेतरद्वन्द्वसमासः। नद्याम्नीभ्यः इत्यत्र पञ्चमीश्रवणात् तस्मादित्युत्तरस्य इति परिभाषया परस्य इति पदं लभ्यते। अङ्गस्य इत्यधिक्रियते। तस्य च पञ्चमीबहुवचनान्ततया विपरिणामः भवति। तेन अङ्गेभ्यः इत्यर्थो लभ्यते। तच्च नद्याम्नीभ्यः इत्यत्र विशेष्यत्वेन अन्वेति। तेन तदन्तविधिना नद्यन्ताद् आबन्तात् नद्यन्तात् चाङ्गात् इत्यर्थो लभ्यते। आम् इति प्रथमैकवचनान्तं पदम्। आमादेशस्य स्थानिवद्भावात् विभक्तित्वात् हलन्त्यम् इत्यनेन प्राप्तस्य इत्त्वस्य न विभक्तौ तुस्माः इत्यनेन निषेधो भवति। तेन अस्य सूत्रस्य नद्यन्तात् आबन्तात् नीशब्दाच्च परस्य ङेरामादेशः भवति इत्यर्थो भवति।

**उदाहरणम्-** रमायाम्।

**सूत्रार्थसमन्वयः-** रमाशब्दात् सप्तम्येकवचनविवक्षायां ङिप्रत्यये अनुबन्धलोपे रमा ङि इति स्थितिः। ततः ङेराम्नद्याम्नीभ्यः इत्यनेन सूत्रेण ङेः सर्वादेशे आमि रमा आम् इति स्थितिः भवति। ततः स्थानिवद्भावात् ङितः याडापः इत्यनेन सूत्रेण याडागमे अनुबन्धकार्ये रमा या आम् इति जाते सवर्णदीर्घे रमायाम् इति रूपं सिद्ध्यति।

सप्तमीबहुवचने ओस्प्रत्यये रमयोः इति रूपम्, बहुवचने च सुप्प्रत्यये रमासु इति रूपम्। अत्र इदं धातव्यं यत् इण्कोः परं प्रत्ययावयवः सकारः नास्ति तस्मात् रामेषु इतिवत् रमासु इत्यत्र सकारस्य षत्वं न। दूर्गादीनाम् आकारान्तस्त्रीलिङ्गशब्दानाम् अपि रमाशब्दवद् रूपाणि भवन्ति।

इदानीं स्त्रीलिङ्गवाचकस्य सर्वाशब्दस्य आलोचना प्रारभ्यते। सर्वनामसंज्ञकाद् अदन्तसर्वशब्दात् स्त्रियां टापि सर्वाशब्दः निष्पद्यते। तस्य प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति परिभाषाबलेन सर्वनामसंज्ञकस्य सर्वार्थवाचकस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन प्रातिपदिकसंज्ञा भवति। रमाशब्दात् सर्वाशब्दस्य ङिद्विभक्तिषु आमि च एव भेदः दृश्यते। अन्यत्र सर्वत्र रमाशब्दवत् रूपाणि भवन्ति। ततः प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे रमा स् इति स्थितिः भवति। ततः

एकाल्प्रत्ययस्य सु-इत्यस्य अपृक्त एकाल्प्रत्ययः इत्यनेन अपृक्तसंज्ञा भवति। ततः आबन्तात् परस्य अपृक्तप्रत्ययस्य हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यनेन लोपे रमा इति रूपं भवति।

प्रथमाद्विवचने रमाशब्दवत् सर्वे इति, बहुवचने सर्वाः, द्वितीयैकवचने सर्वाम्, द्विवचने सर्वे, बहुवचने सर्वाः, तृतीयैकवचने सर्वया, द्विवचने सर्वाभ्याम्, बहुवचने सर्वाभिः इति रूपाणि भवन्ति। ङित्सु याडापः इत्यनेन आपः परस्य ङिद्वचनस्य याडागमे प्राप्ते अग्रिमं सूत्रं प्रारभ्यते।

## पाठगतप्रश्नाः

५. सम्बुद्धौ च इति सूत्रस्य अर्थं लिखत।

६. सम्बुद्धौ च इत्यनेन सूत्रेण किं विधीयते।

७. आङि चापः इति सूत्रस्य अर्थं लिखत।

८. याडापः इति सूत्रस्य अर्थं लिखत।

९. रमायै इत्यत्र याडागमः केन सूत्रेण।

१०. ङेराम्नद्याम्नीभ्यः इति किं सूत्रम्।

---

## [ १३.८] सर्वनाम्नः स्याड्ढ्रस्वश्च॥ (७.३.११४)

**सूत्रार्थः-** आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् स्यात् आपश्च ह्रस्वः।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। सर्वनाम्नः स्याट् ह्रस्वः च इति सूत्रगतपदच्छेदः। सूत्रेऽस्मिन् त्रीणि पदानि विद्यन्ते। सर्वनाम्नः इति पञ्चम्येकवचनान्तं पदम्। स्याट् इति प्रथमैकवचनान्तं पदम्। स्याटि टित्करणात् लिङ्गात् तस्य आगमत्वं निश्चीयते। तेन अयम् आगमविधिः। ह्रस्वः इति प्रथमैकवचनान्तं पदम्। चेति अव्ययपदम्। याडापः इत्यस्मात् सूत्रात् आपः इति पञ्चम्येकवचनान्तं पदम् अनुवृत्तं सर्वनाम्नः इत्यत्र विशेष्यत्वेन अन्वेति। तेन तदन्तविधिना आबन्तात् सर्वनाम्नः इत्यर्थो लभ्यते। घेर्ङिति इत्यस्मात् ङिति इति सप्तम्यन्तं पदम् षष्ठ्या विपरिणम्यते। ङितः इत्यत्र षष्ठीश्रवणात् तस्यैव अयम् आद्यवयवः भवति। ह्रस्वनद्यापो नुट् इत्यस्मात् सूत्रात् आपः इति षष्ठ्यन्तं पदं ह्रस्वः इत्यत्र अन्वेति। आपः इत्यत्र षष्ठीश्रवणात् अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः आदेशः स्यादित्यर्थो लभ्यते। तेन अस्य सूत्रस्य आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् स्यात् आपश्च ह्रस्वः भवति इत्यर्थो भवति।

**उदाहरणम्-** सर्वस्यै।

**सूत्रार्थसमन्वयः-** सर्वाशब्दात् चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये अनुबन्धलोपे रमा ए इति जाते याडापः इत्यनेन आबन्तात् परस्य ङितः याडागमः प्राप्तः। तं बाधित्वा अनेन सूत्रेण स्याडागमे अनुबन्धलोपे आपः ह्रस्वे च सर्व स्य ए इति स्थितिः भवति। ततः वृद्धिरेचि इत्यनेन सूत्रेण वृद्धिरूपैकादेशे सर्वस्यै इति रूपं सिद्ध्यति।



सर्वाशब्दस्य चतर्थीद्विवचने भ्यामि प्रत्यये सर्वाभ्याम् इति रूपम्। बहुवचने भ्यसि प्रत्यये सर्वाभ्यः इति रूपं भवति।

पञ्चम्येकवचने ङसिप्रत्यये अनुबन्धलोपे राम अस् इति स्थितिः भवति। ततः ङसेः ङित्त्वात् सर्वनाम्नः स्याड्ढ्रस्वश्च इत्यनेन सूत्रेण स्याडागमे आपः ह्रस्वे च सर्वस्या अस् इति स्थितिः भवति। ततः सकारस्य रुत्वे विसर्गे च सर्वस्याः इति रूपं सिद्ध्यति।

द्विवचने भ्याम्प्रत्यये सर्वाभ्याम् इति रूपम्, बहुवचने भ्यस्प्रत्यये च सर्वाभ्यः इति रूपम्।

षष्ठ्येकवचने ङस्प्रत्यये अनुबन्धलोपे सर्वा अस् इत्यत्र ङसः ङित्त्वात् सर्वनाम्नस्याड्ढ्रस्वश्च इत्यनेन सूत्रेण स्याडागमे ह्रस्वे सर्वस्याः इति स्थितिः भवति। ततः सकारस्य रुत्वे विसर्गे च सर्वाभ्यः इति रूपम् सिद्ध्यति।

षष्ठीद्विवचने ओस्प्रत्यये सर्वा ओस् इति जाते आङि चापः इत्यनेन सूत्रेण मकारोत्तरस्य आकारस्य एकारादेशे सर्वे ओस् इति जातः। ततः एचोऽयवायावः इत्यनेन सूत्रेण एयादेशे सकारस्य रुत्वे विसर्गे च सर्वयोः इति रूपम्।

षष्ठीबहुवचने आम्प्रत्यये सर्वा आम् इति स्थितिः भवति। ततः आमि सर्वनाम्नः सुट् इत्यनेन सुडागमे अनुबन्धलोपे सर्वा साम् इति जातः। ततः सर्वासाम् इति रूपं भवति।

सप्तम्येकवचने ङिप्रत्यये ङेराम्नद्याम्नीभ्यः इत्यनेन सूत्रेण ङेरामादेशे सर्वनाम्नः स्याड्ढ्रस्वश्च इत्यनेन सूत्रेण स्याडागमे सर्वासाम् इति रूपं सिद्ध्यति। इति आकारान्तस्त्रीलिङ्गप्रकरणं समाप्तम्।

अथ इकारान्तस्त्रीलिङ्गप्रकरणं प्रारभ्यते।

मन्यते अनया इति विग्रहे मन-ज्ञाने इति धातोः क्तिन्प्रत्यये मतिशब्दः निष्पद्यते। ततः तस्य कृदन्तत्वात् 'कृत्तद्धितसमासाश्च' इत्यनेन सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः प्रथमैवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे मति स् इति भवति। ततः सकारस्य रुत्वे विसर्गे च मतिः इति रूपं निष्पद्यते।

मतिशब्दस्य प्रथमाद्विवचने औप्रत्यये मति औ इति स्थितिः भवति। ततः प्रथमयोः पूर्वसर्वर्णः इत्यनेन सूत्रेण पूर्वसवर्णदीर्घे मती इति रूपं सिद्ध्यति।

प्रथमाबहुवचने जस्प्रत्यये अनुबन्धलोपे मति अस् इति स्थितिः भवति। ततः जसि च इत्यनेन सूत्रेण गुणे मते अस् इति स्थितिः भवति। ततः एचोऽयवायावः इत्यनेन सूत्रेण अयादेशे, सकारस्य रुत्वे विसर्गे च मतयः इति रूपं सिद्ध्यति।

द्वितीयैकवचने अम्प्रत्यये मति अम् इत्यत्र इको यणचि इति गुणः प्राप्तः। तं प्रबाध्य अमि पूर्वः इत्यनेन सूत्रेण पूर्वसवर्णे मतिम् इति रूपं सिद्ध्यति।

द्वितीयाद्विवचने औट्प्रत्यये अनुबन्धलोपे पूर्ववत् मती इति रूपं सिद्ध्यति।

द्वितीयाबहुवचने शस्प्रत्यये अनुबन्धलोपे मति अस् इति स्थितिः भवति। ततः प्रथमयोः पूर्वसर्वर्णः इत्यनेन सूत्रेण पूर्वसवर्णदीर्घे सकारस्य रुत्वे विसर्गे मतीः इति रूपं सिद्ध्यति। अत्रेदं ध्येयं यत्



अत्र तस्माच्छसो नः पुंसि इत्यनेन सूत्रेण शसः सकारस्य नत्वं न भवति। यतो हि मतिशब्दः स्त्रीलिङ्गे अस्ति न तु पुंलिङ्गे।

तृतीयैकवचने टाप्रत्यये अनुबन्धलोपे मति आ इति स्थितिः भवति। ततः इको यणचि इत्यनेन सूत्रेण यणादेशे मत्या इति रूपं सिद्ध्यति। अत्रेदं ध्येयं यत् अस्त्रियाम् इति निषेधात् आङो नास्त्रियाम् इत्यनेन टाप्रत्ययस्य नादेशो न भवति।

तृतीयाद्विवचने भ्याम्प्रत्यये मतिभ्याम् इति रूपम्, बहुवचने भिस्प्रत्यये मतिभिः इति रूपं सिद्ध्यति।

चतुर्थ्येकवचने ङेप्रत्यये अनुबन्धलोपे मति ए स्थिते मतिशब्दस्य विकल्पेन नदीसंज्ञाविधायकं सूत्रम् उच्यते-

## [ १३.९] ङिति ह्रस्वश्च॥ (१.४.६)

**सूत्रार्थः** - इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे इति।

**सूत्रव्याख्या**- इदं संज्ञासूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। ङिति ह्रस्वः च इति सूत्रगदपदच्छेदः। ङिति इति सप्तम्येकवचनान्तं पदम्। ह्रस्वः इति प्रथमैकवचनान्तं पदम्। चेति अव्ययपदम्। अत्र सूत्रे चकारात् वाक्यद्वयं लभ्यते। तत्रादौ ङिति इति प्रथमं वाक्यम्। अत्र नेयङुवङ्स्थानावस्त्री इत्यतः इयङुवङ्स्थानौ इति प्रथमाद्विचनान्तम् अस्त्री इति प्रथमान्तं पदद्वयमनुवर्तते। यू स्त्र्याख्यौ नदी इति सम्पूर्णमपि सूत्रमनुवर्तते। वामि इत्यतः वा इति अव्ययम् अनुवर्तते। स्त्रियामिति अधिक्रियते। ङकार इत् यस्य सः ङित्, तस्मिन् ङिति इत्यत्र परसप्तमी। तेन ङिति परे इत्यर्थलाभः। इयङ् च उवङ् च इति इयङुवङौ, तयोः इयङुवङोः स्थितिः स्थानं ययोः तौ इयङुवङ्स्थानौ। न स्त्री अस्त्री इति नञ्तत्पुरुषसमासः। तस्य च स्त्रीशब्दभिन्नः शब्दः इत्यर्थः। अस्त्रीशब्दः इयङुवङ्स्थानौ इत्यत्र द्विवचनान्ततया अन्वेति। अतः स्त्रीशब्दभिन्नौ शब्दौ इयङुवङ्स्थानौ इत्यर्थः समायाति। यू इति प्रथमाद्विवचनान्तम् पदम्। ईश्च ऊश्च इति यू। दीर्घेकारान्तोकारान्तौ इत्यर्थः। स्त्र्याख्यौ इति प्रथमाद्विवचनान्तं पदम्। स्त्रियामाचक्षते इति स्त्र्याख्यौ नित्यस्त्रीलिङ्गौ इत्यर्थः। नदी इति प्रथमान्तं पदम्। एवञ्चानुवर्तमानानां पदानामन्वयेन इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ ईदूतौ शब्दौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति परे इति प्रथमं वाक्यं सिध्यति। ह्रस्वः इति द्वितीयं वाक्यम्। अत्रापि नञ्वर्जं नेयङुवङ्स्थानावस्त्री इति सूत्रमनुवर्तते। यू स्त्र्याख्यौ नदी इति सम्पूर्णमपि सूत्रमनुवर्तते। पूर्ववाक्यात् ङिति सप्तम्यन्तमनुवर्तते। स्त्रियामिति अधिक्रियते। वामि इत्यतः वा इति अनुवर्तते। अत्र सूत्रस्थं ह्रस्व इति पदमनुवर्तमानेन यू इति पदेनान्वेति। तेन ह्रस्वेकारान्तोकारान्तौ इत्यर्थः समायाति। एवञ्च इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ ह्रस्वेकारोकारौ शब्दौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति इति द्वितीयं वाक्यं सिद्ध्यति। एवञ्च अस्य सूत्रस्य अर्थः भवति- इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति इति।

**उदाहरणम्-** मतिशब्दात् चतुर्थ्येकवचने ङेप्रत्यये अनुबन्धलोपे मति ए इति स्थितिः भवति। मतिशब्दः ह्रस्वेकारान्तः नित्यस्त्रीलिङ्गी अस्ति। ङिद्विभक्तिः अपि परे अस्ति। अतः अनेन सूत्रेण विकल्पेन स्त्रीलिङ्गवाचकस्य इकारान्तस्य मतिशब्दस्य ङिति प्रत्यये परे नदीसंज्ञा भवति। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १३.१०] आण्नद्याः॥ (७.३.११२)

**सूत्रार्थः-** नद्यन्तात्परेषां ङिताम् आडागमः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अनेन सूत्रेण आडागमः भवति। अस्मिन् सूत्रे द्वे पदे स्तः। आट् नद्याः इति सूत्रगतपदच्छेदः। अत्र सन्धिकार्ये यरोऽनुनासिकेऽनुनासिको वा इत्यनेन सूत्रेण पदान्तस्य यरः टकारस्य अनुनानिके नकारे परे अनुनासिके णकारः अभवत्। आट् इति प्रथमैकवचनान्तं पदम्। नद्याः इति पञ्चम्येकवचनान्तं पदम्। अङ्गस्य इत्यधिक्रियते। तस्य च पञ्चम्यन्ततया विपरिणामः भवति। तच्च नद्याः इत्यत्र विशेष्यत्वेन अन्वेति। तेन तदन्तविधिना नद्यन्तात् अङ्गात् इत्यर्थो लभ्यते। घेर्ङिति इत्यस्मात् सूत्रात् ङिति इति सप्तम्यन्तं पदम् अनुवर्तते। तस्य च षष्ठ्यन्ततया विपरिणामः भवति। आटः इत्यत्र टकारस्य इत्संज्ञा भवति। टित्त्वात् अयम् आगमविधिः इति निश्चीयते। तेन अस्मात् सूत्रात् नद्यन्तात् परेषां ङिताम् आडागमः भवति इत्यर्थो लभ्यते। अयञ्च आडागमः टित्त्वात् आद्यन्तौ टकितौ इति परिभाषया ङितः आद्यावयवः भवति।

**उदाहरणम्-** मति ए इत्यत्र ङेप्रत्ययः ङित्प्रत्ययः अस्ति। किञ्च मतिशब्दस्य ङिति ह्रस्वश्च इत्यनेन विकल्पेन नदीसंज्ञापक्षे अनेन सूत्रेण आडागमे अनुबन्धलोपे मति आ ए इति स्थितिः भवति। ततः वृद्धिविधायकम् अग्रिमं सूत्रं प्रवर्तते-

## पाठगतप्रश्नाः-३

११. सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रस्य अर्थः कः।
१२. सर्वस्यै इत्यस्मिन् स्याडागमः केन सूत्रेण भवति।
१३. नदीसंज्ञाविधायकं सूत्रं किम्।
१४. यू स्त्र्याख्यौ नदी इति सूत्रस्य अर्थः कः।
१५. ङिति ह्रस्वश्च इत्यस्य सूत्रस्य अर्थं लिखत।
१६. नद्यान्तात्परेषां ङिताम् आडागमः केन सूत्रेण भवति।

## [ १३.११] आटश्च(६.१.९०)

**सूत्रार्थः-** आटोऽचि परे वृद्धिरेकादेशः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। नदीसंज्ञकानां शब्दानां ङित्प्रत्यये परे आडागमे अनेन सूत्रेण वृद्धिः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। आटः च इति सूत्रगतपदच्छेदः। आटः इति पञ्चम्येकवचनान्तं पदम्। चेति अव्ययपदम्। अत्र टकारोत्तराद् अकारात्परस्य विसर्गस्य चकारे परे सन्धिकार्ये शकारादेशः अभवत्। आटः इत्यत्र पञ्चमीश्रवणात् तस्मादित्युत्तरस्य इति परिभाषया परस्य इत्यर्थो लभ्यते। इको यणचि इत्यस्मात् सूत्रात् अचि इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। अच् इति प्रत्याहारः स्वरवर्णानां बोधकः। अचि इत्यत्र सप्तमीनिर्देशाद् तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषया अचि परे पूर्वस्य कार्यम् इत्यर्थः लभ्यते। वृद्धिरेचि इत्यस्मात् सूत्रात् वृद्धिः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। एकः पूर्वपरयोः इत्यस्मिन् अधिकारे सूत्रमिदं विद्यते। तेन अस्य सूत्रस्य आटः अचि प्रत्याहारे परे पूर्वपरयोः स्थाने वृद्धिरेकादेशः भवति इत्यर्थो भतति।

**उदाहरणम्-** मत्यै।

**सूत्रार्थसमन्वयः-** मति आ ए इत्यत्र आटः अचि परे अकारैकारयोः वृद्धिरेकादेशे मति ऐ इति भवति। ततः इको यणचि इत्यनेन सूत्रेण यणादेशे मत्यै इति रूपं सिद्ध्यति।

नदीसंज्ञायाः अभावे घिसंज्ञायां मति ए इत्यत्र घेर्ङिति इत्यनेन सूत्रेण गुणे मते ए इति भवति। ततः एचोऽयवायावः इत्यनेन सूत्रेण अयादेशे मतये इति रूपं सिद्ध्यति।

चतुर्थीद्विवचने भ्याम्प्रत्यये मतिभ्याम् इति रूपम्, बहुवचने भ्यस्प्रत्यये मतिभ्यः इति रूपं सिद्ध्यति।

पञ्चम्येकवचने ङसिप्रत्यये अनुबन्धलोपे मति अस् इत्यत्र ङित्त्वात् विकल्पेन ङिति ह्रस्वश्च इत्यनेन सूत्रेण नदीसंज्ञा भवति। नदीसंज्ञायाम् आण्नद्याः इत्यनेन आडागमे अनुबन्धलोपे मति आ अस् इति स्थितिः भवति। ततः आटश्च इत्यनेन वृद्धौ मति ऐस् इति स्थितिः भवति। ततः यणादेशे, सकारस्य रुत्वे विसर्गे च मत्याः इति रूपं सिद्ध्यति। नदीसंज्ञायाः अभावे मति अस् इत्यत्र घेर्ङिति इत्यनेन गुणे मते अस् इति स्थितिः भवति। ततः ङसिङसोश्च इत्यनेन सूत्रेण पूर्वरूपैकादेशे, सकारस्य रुत्वे विसर्गे च मतेः इति रूपं सिद्ध्यति।

द्विचवने भ्याम्प्रत्यये मतिभ्याम् इति रूपम्, बहुवचने भ्यस्प्रत्यये मतिभ्यः इति रूपं सिद्ध्यति।

षष्ठ्येकवचने नदीत्वपक्षे ङस्प्रत्यये अनुबन्धलोपे आडागमे, वृद्ध्येकादेशे पूर्ववत् मत्याः इति रूपं सिद्ध्यति। नदीसंज्ञायाः अभावे पञ्चम्येकवचनवत् मतेः इति रूपं भवति।

षष्ठीद्विवचने ओस्प्रत्यये मति ओस् इत्यत्र यणादेशे सकारस्य रुत्वे विसर्गे च मत्योः इति रूपं सिद्ध्यति।

षष्ठीबहुवचने आम्प्रत्यये मति आम् इति स्थितिः भवति। ततः ह्रस्वनद्यापो नुट् इत्यनेन सूत्रेण नुडागमे नामि इत्यनेन दीर्घे च मतीनाम् इति रूपं सिद्ध्यति।

## [ १३.१२] इदुद्भ्याम्॥ (७.३.११७)

**सूत्रार्थः-** नदीसंज्ञाकाभ्याम् इदुद्भ्यां परस्य ङेराम् स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्मिन् सूत्रे इदुद्भ्याम् इति पञ्चमीद्विवचनान्तम् एकमेव पदं विद्यते। इच्च उच्च इति इदुतौ इतरेतरद्वन्द्वसमासः, ताभ्याम् इति इदुद्भ्याम् इति। ङेराम्नद्याम्नीभ्यः इत्यस्मात् सूत्रात् नदीभ्याम् इति पञ्चम्यन्तं, ङेः इति षष्ठ्यन्तं पदम्, आम् इति प्रथमान्तं पदञ्च अनुवर्तते। नदीभ्याम् इत्यस्य द्विवचनान्ततया विभक्तिविपरिणामः भवति। तेन अस्य सूत्रस्य नदीसंज्ञाकाभ्याम् ह्रस्वेकारोकाराभ्यां परस्य परस्य ङेः आमादेशः भवति इति अर्थः भवति।

**उदाहरणम्-** मत्याम्।

**सूत्रार्थसमन्वयः-** मतिशब्दात् सप्तम्येकवचने ङिप्रत्यये अनुबन्धलोपे मति इ इति भवति। ततः औदादेशं प्रबाध्य अनेन सूत्रेण ङेः आमादेशे मति आम् इति भवति। ततः आण्नद्याः आटि अनुबन्धलोपे मति आ आम् इति स्थितिः भवति। ततः आटश्चेति सूत्रेण वृद्धौ एकादेशे च मति आम् इति स्थितिः भवति। ततः इको यणचि इति सूत्रेण इकारस्य स्थाने यकारादेशे मत्याम् इति रूपं सिद्ध्यति।

ङिति ह्रस्वश्च इत्यनेन नदीसंज्ञायाः विकल्पेन पक्षे शेषो घ्यसखि इत्यनेन मतिशब्दस्य घिसंज्ञा भवति। ततः अच्च घेः इति सूत्रेण ङेः स्थाने औकारादेशे समं च घेः अन्त्यस्याचः इकारस्य स्थाने अकारे च कृते मत औ इति स्थतिः भवति। ततः वृद्धिरेचि इति सूत्रेण अकारौकारयोः वृद्धौ एकादेशे मतौ इत्यपि रूपं सिद्ध्यति।

सप्तमीद्विचवने ओस्प्रत्यये च पूर्ववत् मत्योः इति रूपम्। बहुवचने सुप्प्रत्यये अनुबन्धलोपे सकारस्य आदेशप्रत्यययोः इत्यनेन षत्वे च मतिषु इति रूपं सिद्ध्यति। अथ ईदन्तशब्दाः।

गौरशब्दात् स्त्रीत्वविवक्षायां षिद्गौरादिभ्यश्च इत्यनेन सूत्रेण ङीष्प्रत्यये अनुबन्धलोपे गौर ई इति भवति। ततः यचि भम् इत्यनेन सूत्रेण भसंज्ञा भवति। भसंज्ञकस्य गौरशब्दस्य यस्येति च इत्यनेन सूत्रेण अकारस्य लोपे गौरी इति शब्दः निष्पद्यते। अव्युत्पन्नस्य पार्वत्यर्थवाचकस्य गौरीशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे गौरी स् इति स्थितिः भवति। ततः हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल् इत्यनेन सूत्रेण हलः सकारस्य लोपे गौरी इति रूपं सिद्ध्यति।

प्रथमाद्विवचने औप्रत्यये गौरी औ इति स्थितिः भवति। ततः प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वसवर्णदीर्घः प्राप्तः। तस्य दीर्घाज्जसि च इत्यनेन सूत्रेण निषेधः भवति। ततः इको यणचि इत्यनेन सूत्रेण यणादेशे गौर्यौ इति रूपं सिद्ध्यति।

बहुवचने जस्प्रत्यये अनुबन्धलोपे गौरी अस् इति स्थितिः भवति। ततः पूर्ववत् सवर्णदीर्घस्य निषेधः भवति। ततः इको यणचि इत्यनेन यणादेशे सकारस्य रुत्वे विसर्गे च गौर्यः इति रूपं सिद्ध्यति।

गौरीशब्दस्य सम्बोधनैकवचने सुप्रत्यये हे गौरी सु इति स्थितिः भवति। ततः अग्रिमं सूत्रं प्रारभ्यते।

## [ १३.१३] अम्बार्थनद्योर्ह्रस्वः (७.३.१०७)

**सूत्रार्थः-** अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अम्बार्थनद्योः ह्रस्वः इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। अम्बार्थनद्योः इति षष्ठीद्विवचनान्तं पदम्। अम्बा अर्थो यस्य सः इति अम्बार्थः, बहुव्रीहिसमासः। अम्बार्थशब्देन अम्बाशब्दस्य पर्यायशब्दाः अपि गृह्यन्ते। अम्बार्थश्च नदी च इति अम्बार्थनद्यौ, तयोः इति अम्बार्थनद्योः इतरेतरद्वन्द्वसमासः। अङ्गस्य इत्यधिक्रियते। तच्च वचनविपरिणामेन अम्बार्थनद्योः इत्यत्र विशेष्यत्वेन अन्वेति। तेन तदन्तविधिना अम्बार्थनद्यन्तयोः अङ्गयोः इत्यर्थः लभ्यते। ह्रस्वः इति प्रथमैकवचनान्तं पदम्। सम्बुद्धौ च इत्यस्मात् सूत्रात् सम्बुद्धौ इति सप्तम्यन्तं पदम् अनुवर्तते। सम्बुद्धौ इत्यत्र सप्तमीश्रवणात् तस्मिन्निति निर्दिष्टे पूर्वस्य इत्यनया परिभाषया परे इत्यर्थः लभ्यते। तेन अस्य सूत्रस्य अम्बार्थवाचकानां नद्यन्तानां च शब्दानां सम्बुद्धौ परे ह्रस्वः भवति इत्यर्थो भवति।

**उदाहरणम्-** हे गौरि।

**सूत्रार्थसमन्वयः-** गौरीशब्दात् सम्बोधने सुप्रत्यये अनुबन्धलोपे हे गौरी स् इति स्थितिः भवति। ईकारान्तगौरीशब्दः नित्यं स्त्रीत्ववाचकः । तेन यू स्त्र्याख्यौ नदी इत्यनेन सूत्रेण तस्य नदी संज्ञा भवति। ततः अनेन सूत्रेण सम्बुद्धौ परे नद्यन्तस्य गौरीशब्दस्य ईकारस्य ह्रस्वे इकारे हे गौरि स् इति स्थितिः भवति। ततः एङ्ह्रस्वात्सम्बुद्धेः इत्यनेन सूत्रेण सकारस्य लोपे हे गौरि इति रूपं भवति।

सम्बोधनद्विवचने औप्रत्यये पूर्ववत् हे गौर्यौ इति रूपं भवति। बहुवचने जस्प्रत्यये अनुबन्धलोपे हे गौर्यः इति रूपं भवति।

द्वितीयैकवचने अम्प्रत्यये गौरी अम् इति जाते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे गौरीम् इति रूपं भवति। द्विवचने औट्प्रत्यये अनुबन्धलोपे पूर्ववत् गौर्यौ इति रूपं भवति। बहुवचने शस्प्रत्यये अनुबन्धलोपे प्रथमयोः पूर्वसवर्णः इत्यनेन पूर्वसवर्णदीर्घे सकारस्य रुत्वे विसर्गे च गौरीः इति रूपं भवति।

तृतीयैकवचने टाप्रत्यये अनुबन्धलोपे गौरी आ इति स्थितिः भवति। ततः यणादेशे गौर्या इति रूपं भवति। द्विवचने भ्याम्प्रत्यये गौरीभ्याम् इति रूपं भवति। बहुवचने भिस्प्रत्यये सकारस्य रुत्वे विसर्गे गौरीभिः इति रूपं भवति।

चतुर्थ्येकवचने ङेप्रत्यये अनुबन्धलोपे गौरी ए इति स्थितिः भवति। ततः नदीसंज्ञायां आण्नद्याः इत्यनेन आडागमे आटश्च इत्यनेन बृद्धौ गौरी ऐ इति स्थितिः भवति। ततः यणादेशे गौर्यै इति रूपं भवति। द्विवचने भ्याम्प्रत्यये गौरीभ्याम् इति रूपं भवति। बहुवचने भ्यस्प्रत्यये सकारस्य रुत्वे विसर्गे च गौरीभ्यः इति रूपं भवति।

पञ्चम्येकवचने ङसिप्रत्यये अनुबन्धलोपे गौरी अस् इति स्थितिः भवति। ततः नदीसंज्ञायाम् आडागमे बृद्धौ च पूर्ववत् गौर्याः इति रूपं, द्विवचने भ्याम्प्रत्यये गौरीभ्याम् इति रूपं भवति। बहुवचने भ्यस्प्रत्यये सकारस्य रुत्वे विसर्गे च गौरीभ्यः इति रूपं भवति।

षष्ठ्येकवचने ङस्प्रत्यये गौरीशब्दस्य नदीसंज्ञायाम् आडागमे बृद्धौ च पूर्ववत् गौर्याः इति रूपम्। द्विवचने ओस्प्रत्यये यणादेशे गौर्योः इति रूपं बहुवचने आम्प्रत्यये गौरी आम् इति स्थितिः भवति। ततः नदीसंज्ञायां ह्रस्वनद्यापो नुट् इत्यनेन सूत्रेण नुडागमे नामि इत्यनेन दीर्घे नकारस्य णत्वे च गौरीणाम् इति रूपं भवति।

सप्तम्येकवचने ङिप्रत्यये अनुबन्धलोपे गौरी इ इति स्थितिः भवति। ततः नदीसंज्ञायां ङेराम्नद्याम्नीभ्यः इत्यनेन सूत्रेण ङेरामादेशे गौरी आम् इति स्थितिः भवति। ततः आडागमे बृद्धौ च गौरी आम् इति स्थितिः भवति। ततः यणादेशे गौर्याम् इति रूपं सिद्ध्यति।

द्विवचने ओस्प्रत्यये गौर्योः इति बहुवचने सुप्रत्यये गौरीषु इति रूपं भवति।

## पाठगतप्रश्नाः-३

१७. आटश्च इति सूत्रस्य अर्थं लिखत।

१८. आटश्च सूत्रेण किं विधीयते।

१९. इदुद्भ्याम् इति सूत्रस्य अर्थं लिखत।

२०. हे गौरि इत्यत्र ह्रस्वः केन सूत्रेण भवति।

## पाठसारः

अजन्तस्त्रीलिङ्गशब्दानां रूपाणि कथं भवन्ति इति अस्मिन् पाठे दर्शितम्। अकारान्तः स्त्रीलिङ्गशब्दः नास्ति तस्मात् वर्णक्रमानुसारेण आदौ आकान्तस्य रमाशब्दस्य रूपाणि कथं भवन्तीति आलोचितम्। ततः नित्यस्त्रीलिङ्गवाचकानां ईकारान्तोकारान्तशब्दानां नदीसंज्ञा भवति इति विस्तरेण आलोचितम्। इकारान्तोकारान्तानां स्त्रीलिङ्गवाचकानां शब्दानां ङित्प्रत्ययेषु विकल्पेन नदीसंज्ञा भवति। तेन तेषु स्थलेषु विकल्पेन रूपाणि भवन्ति इति अस्मिन् पाठे विस्तरशः पर्यालोचितम्।

## पाठान्तप्रश्नाः

१. हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रं व्याख्यात।

२. प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रं व्याख्यात।

३. सम्बुद्धौ च इति सूत्रं व्याख्यात।

४. आङि चापः इति सूत्रं व्याख्यात।

५. सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रं व्याख्यात।

६. यू स्त्र्याख्यौ नदी इति सूत्रं व्याख्यात।

७. ङिति ह्रस्वश्च इति सूत्रं व्याख्यात।

८. इदुद्भ्याम् इति सूत्रं सोदाहरणं व्याख्यात।

९. अम्बार्थनद्योर्ह्रस्वः इति सूत्रं व्याख्यात।

१०. प्रदत्तानि रूपाणि ससूत्रं साधयत – रमा रमे रमया रमायै रमायाम् मत्याम् गौरि

## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्।

२. हलन्तात्परं यौ ङ्यापौ तदन्ताच्च परं सुतिसि इत्येतदपृक्तं हल् लुप्यते इति।

३. आबन्तादङ्गात् औङः शी स्याद्।

४. परिभाषासूत्रम्।

**उत्तराणि-२**

५. आपः एकारः स्यात्सम्बुद्धौ इति।

६. सम्बुद्धौ प्रत्यये परे आपः एकारादेशः विधीयते।

७. आङि ओसि च परे आबन्तस्य अङ्गस्य एदादेशः स्याद्।

८. आपः परस्य ङिद्वचनस्य याडागमः स्याद्।

९. याडापः इत्यनेन सूत्रेण।

१०. विधिसूत्रम्।

**उत्तराणि-२**

११. आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् स्यात् आपश्च ह्रस्वः स्याद्।

१२. सर्वनाम्नः स्याड्ह्रस्वश्च इत्यनेन सूत्रेण।

१३. यू स्त्र्याख्यौ नदी।

१४. ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः इति।

१५. इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे इति।

१६. आण्नद्याः इत्यनेन सूत्रेण।

**उत्तराणि-३**

१७. आटोऽचि परे वृद्धिरेकादेशः स्याद्।

१८. आटः अचि प्रत्यये परे पूर्वपरयोः स्थाने वृद्ध्येकादेशः विधीयते।

१९. नदीसंज्ञाकाभ्याम् इदुद्भ्यां परस्य ङेराम् स्याद्।

२०. अम्बार्थनद्योर्ह्रस्वः इत्येनन सूत्रेण।

**।।इति त्रयोदशः पाठः।।**

# १४

# अजन्तनपुंसकलिङ्गम्

## प्रस्तावना

पूर्वस्मिन् पाठे वयम् अजन्तस्त्रीलिङ्गप्रकरणम् आलोचितवन्तः। अस्मिन् पाठे अजन्तनपुंसकलिङ्गप्रकरणविषये आलोचनां कुर्मः। अस्मिन् प्रकरणेऽपि प्रत्याहारक्रमेण शब्दानां विचारः प्रस्तूयते। क्लीबलिङ्गकानां शब्दानाम् अधिकः भेदः नास्ति। एतेषां शब्दानाम् इदं वैशिष्टं यत् प्रथमाद्वितीययोः विभक्त्योः समानरूपाणि भवन्ति। किञ्च तृतीयादिषु विभक्तिषु प्रायः पुंलिङ्गवत् रूपाणि भवन्ति। क्लीबलिङ्गे विद्यमानानां शब्दानां पुंलिङ्गशब्देभ्यः येषु स्थलेषु विशेषता वर्तते तदत्र आलोच्यते। तथैव एतेषां शब्दानां रूपाणि कथं भवन्ति इति विचाराय प्रकरणमिदं प्रारभ्यते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- अजन्तक्लीबलिङ्गे शब्दानां रूपाणि कथं भवन्ति इति जानीयात्।
- नपुंसके कदा ह्रस्वः भवति इति ज्ञातुं शक्नुयात्।
- असमानपदेऽपि कदा णत्वं भवति इति जानीयात्।
- प्रत्ययस्य कदा लुक्श्लुलुपः भवति इति बोद्धुं पारयेत्।
- कदा प्रत्ययलोपे प्रत्ययाश्रितकार्यं न भवति इति जानीयात्।
- नपुंसकलिङ्गेऽपि कदा सर्वनामस्थानसंज्ञा भवति इति ज्ञातुं शक्नुयात्।

॥ज्ञान॥

## [ १४.१] अतोऽम्॥ (७.१.२४)

**सूत्रार्थः-** अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात् इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अतः अम् इति छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। अतः इति पञ्चम्येकवचनान्तं पदम्। अङ्गस्य इत्यस्य अधिकारे सूत्रमिदं विद्यते। तेन अङ्गस्य इत्यनुवर्तते तस्य च पञ्चम्येकवचनतया विपरिणामः भवति। अतः इति अङ्गविशेषणम्। तेन तदन्तविधिना अदन्तस्य अङ्गस्य इत्यर्थो लभ्यते। अम् इति प्रथमैकचनान्तं पदम्। स्वमोर्नपुंसकात् इतीदं सूत्रमनुवर्तते। नपुंसकात् इति पञ्चम्येकवचनान्तं पदम्। स्वमोः इति षष्ठीद्विवचनान्तं पदम्। सुश्च अम् च इति स्वमौ, तयोः स्वमोः इति

इतरेतरद्वन्द्वसमासः। तेन सूत्रार्थः भवति अदन्तात् नुपंसकात् अङ्गात् स्वमोः अमादेशः भवति। अमादेशः अनेकाल् अस्ति। तेन अनेकाल्शित्सर्वस्य इत्यनया परिभाषया सर्वादेशः इति लभ्यते। स्वमोर्नपुंसकात् इत्यनेन सूत्रेण सुप्रत्ययस्य तथा अम्प्रत्ययस्य लुक् प्राप्तः। परन्तु अनेन सूत्रेण अदन्तशब्देभ्यः स्वमोः अमादेशः विधीयते। सूत्रमिदं स्वमोर्नपुंसकात् इत्यस्य बाधकं भवति। अम्प्रत्ययस्य पुनः अमादेशः कुतः इति प्रश्नः भवति। अत्र उच्यते स्वमोर्नपुंसकात् इत्यनेन प्राप्तस्य लुकः बाधनार्थम् अमादेशः विहितः इति।

**उदाहरणम् -** ज्ञानम्।

**सूत्रार्थसमन्वयः -** अवबोधनार्थकात् क्र्यादिगणपठितात् ज्ञा अवबोधने इति धातोः भावे ल्युटि अनुबन्धलोपे ज्ञा यु इति भवति। ततः युवोरनाकौ इत्यनेन सूत्रेण यु-इत्यस्य अनादेशे ज्ञान इति शब्दः निष्पद्यते। ज्ञानशब्दः भावे ल्युडन्तः, तस्मात् तस्य नित्यं नपुंसकलिङ्गं भवति। ल्युट्-प्रत्ययः कृत्प्रत्ययः अस्ति। अतः ज्ञानशब्दः कृदन्तः अस्ति। तेन अस्य कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञा भवति। ततः अस्य प्रथमैकवचनविवक्षायां सुप्रत्यये ज्ञान स् इति स्थिते स्वमोर्नपुंसकात् इत्यनेन प्राप्तं लुकं प्रबाध्य अनेन प्रकृतेन सूत्रेण सोः अमादेशः भवति। ततः मकारस्य हलन्त्यम् इत्यनेन सूत्रेण इत्संज्ञां प्राप्नोति। तस्य न विभक्तौ तुस्माः इत्यनेन सूत्रेण निषेधः भवति। ततः ज्ञान अम् इति जाते अमि पूर्व इत्यनेन पूर्वरूपे ज्ञानम् इति रूपं सिद्ध्यति।

## [ १४.२] नपुंसकाच्च॥ (७.१.१९)

**सूत्रार्थः-** क्लीबात्परस्यौङः शी स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। नपुंसकात् च इति छेदः। चकारे परे तकारस्य स्तोः श्चुना श्चुः इत्यनेन चकारः अभवत्। पदद्वयात्मकेऽस्मिन् सूत्रे नपुंसकात् इति पञ्चम्यन्तं पदम्। चेति अव्ययपदम्। अङ्गस्य इत्यस्य अधिकारे सूत्रमिदं विद्यते। तस्य पञ्चम्यन्ततया विपरिणामः भवति। औङ आपः इत्यस्मात् सूत्रात् औङः इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। जसः शी इत्यस्मात् सूत्रात् शी इति प्रथमान्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य अर्थो भवति नपुंसकात् अङ्गात् परस्य औङ्प्रत्यययोः शी इत्यादेशो भवति इति। प्रथमायाः द्विवचनस्य तथा द्वितीयायाः द्विवचनस्य औङ् इति संज्ञा अस्ति इति औङ आप इत्यस्मिन् सूत्रे प्रतिपाद्यते।

**उदाहरणम्-** ज्ञाने।

**सूत्रार्थसमन्वयः -** ज्ञानशब्दस्य प्रथमाद्विवचने ज्ञान औ इत्यवस्थायां प्रकृतसूत्रेण शी इत्यादेशः भवति। ततः शकारस्य लशक्वतद्धिते इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे ज्ञान ई इति स्थितिः भवति। तत्र शी-इत्यस्य स्थानिवद्भावेन सुप्त्वं विद्यते। तेन सुडनपुंसकस्य इत्यत्र नपुंसकस्य ग्रहणाभावात् ई इत्यस्य सर्वनामस्थानसंज्ञा नास्ति। परन्तु अजादित्वात् यचि भम् इत्यनेन ज्ञानशब्दस्य भसंज्ञा जायते। तदा -



## [ १४.३] यस्येति च॥ (६.४.१४८)

**सूत्रार्थः-** भस्य इवर्णावर्णयोः लोपः स्यादीकारे तद्धिते च परे इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। यस्य ईति च इति छेदः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। यस्य इति षष्ठ्येकवचनान्तं पदम्। इश्च अश्च इति यम्, समाहारद्वन्द्वसमासः। तस्य इति यस्य इवर्णस्य अवर्णस्य इत्यर्थः। ईति इति सप्तम्येकवचनान्तं पदम्। च इति अव्ययपदम्। भस्य इत्यस्य अधिकारे सूत्रमिदं विद्यते। नस्तद्धिते इत्यस्मात् सूत्रात् तद्धिते इति सप्तम्यन्तं पदम् अनुवर्तते। अल्लोपोऽनः इत्यस्मात् सूत्रात् लोपः इति प्रथमान्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य ईति तद्धिते च परे भसंज्ञकस्य इवर्णस्य अवर्णस्य च लोपः भवति इति सूत्रार्थो लभ्यते।

**उदाहरणम्** - ज्ञाने।

**सूत्रार्थसमन्वयः** - ज्ञान ई इत्यत्र ईति परे भसंज्ञकस्य अकारस्य प्रकृतसूत्रेण लोपः प्राप्नोति। ततः औङः श्यां प्रतिषेधो वाच्यः इत्यनेन वार्तिकेन औङः स्थाने विहितस्य शी-इत्यादेशस्य यस्येति च इत्यनेन सूत्रेण लोपस्य बाधः भवति। ततः आद्गुणः इत्यनेन सूत्रेण गुणे एकादेशे ज्ञाने इति रूपं सिद्ध्यति।

## [ १४.४] जश्शसोः शिः॥ (७.१.२०)

**सूत्रार्थः-** क्लीबादनयोः शिः स्यात् इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। जश्शसः शि इति छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। जश्शसोः इति षष्ठीद्विवचनान्तं पदम्। जश्च शश्च इति जशशसौ तयोः जश्शसोः इति इतरेतरद्वन्द्वसमासः। शि इति प्रथमैकवचनान्तं पदम्। स्वमोर्नपुंसकात् इत्यस्मात् नपुंसकात् इति पञ्चम्यन्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य नपुंसकात् जश्शसोः शि इत्यादेशः भवति इत्यर्थो भवति। शि-इत्यादेशः अनेकाल् अस्ति। तेन अनेकाल्शित्सर्वस्य इत्यनया परिभाषया सर्वादेशः भवति। शि-इत्यादेशस्य स्थानिवद्भावात् विभक्तिसंज्ञा भवति। तेन लशक्वतद्धिते इत्यनेन सूत्रेण इत्संज्ञा भवति। तेन तस्य लोपः इत्यनेन तस्य लोपः भवति।

**उदाहरणम्-** ज्ञानानि।

**सूत्रार्थसमन्वयः** - ज्ञानशब्दस्य प्रथमाबहुवचने जस्प्रत्यये प्रकृतसूत्रेण जसः शि इत्यादेशे ज्ञान शि इति स्थिते अनुबन्धलोपे ज्ञान इ इति स्थितिः भवति। तदा -

## पाठगतप्रश्नाः-१

अत्र केचित् प्रश्नाः प्रदीयन्ते-

१. ज्ञानम् इत्यत्र अमादेशः केन सूत्रेण विधीयते?

२. अतोऽम् इति सूत्रं कस्य अपवादः?

३. नपुंसकाच्च इति सूत्रस्य अर्थं लिखत।

४. नपुंसकाच्च इत्यनेन सूत्रेण किं विधीयते?

५. नपुंसकलिङ्गे जसः शि-आदेशः केन सूत्रेण विधीयते?

६. यस्येति च इति सूत्रस्य अर्थं लिखत।

## [ १४.५] शि सर्वनामस्थानम्॥ (१.१.४२)

**सूत्रार्थः-** शि इत्येतत् सर्वनामस्थानसंज्ञं स्याद् इति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। शि सर्वनामस्थानम् इति छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। शि इति प्रथमैकवचनान्तं पदम्। सर्वनामस्थानम् इत्यपि प्रथमैकवचनान्तं पदम्। तेन अस्मात् सूत्रात् नपुंसकलिङ्गे विधीयमानस्य जशः स्थाने शि इत्यस्य सर्वनामस्थानसंज्ञा भवति इत्यर्थो लभ्यते। नपुंसकलिङ्गे जसः सर्वनामस्थानसंज्ञा न भवति इति सुडनपुंसकस्य इत्यस्मिन् सूत्रे प्रतिपादितम्। शसः सुट्त्वाभावात् तस्यापि कस्मिन्नपि लिङ्गे सर्वनामस्थानसंज्ञा न भवति। अतः जश्शसोः स्थाने विहितस्य शि इत्यादेशस्य अपि सर्वनामस्थानसंज्ञा भवतु इत्येतदर्थं सूत्रमिदं प्रारभ्यते।

**उदाहरणम्** - ज्ञान इ इत्यवस्थायां शि इत्यस्य प्रकृतसूत्रेण सर्वनामस्थानसंज्ञा जायते। तदा -

## [ १४.६] नपुंसकस्य झलचः॥ (७.१.७२)

**सूत्रार्थः-** झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे इति।

**सूत्रव्याख्या-** सर्वनामस्थानसंज्ञकप्रत्यये परे झलन्तनपुंसकलिङ्गशब्दस्य अजन्तनपुंसकलिङ्गशब्दस्य च नुमागमः भवति। इदं विधिसूत्रम्। नपुंसकस्य झलचः इति छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। नपुंसकस्य इति षष्ठ्येकवचनान्तं पदम्। झलचः इत्यपि षष्ठ्येकवचनान्तं पदम्। झल् च अच् च झलच् तस्य झलच इति समाहारद्वन्द्वसमासः। झलचः इति नपुंसकस्य इत्यत्र विशेषणत्वेन अन्वेति। तेन विशेषणत्वात् तदन्तविधिना झलन्तस्य अजन्तस्य च इत्यर्थो लभ्यते। इदितो नुम् धातोः इत्यस्मात् सूत्रात् नुम् इति प्रथमान्तं पदम् अनुवर्तते। उगिदचां सर्वनामस्थाने इत्यस्मात् सूत्रात् सर्वनामस्थाने इति सप्तम्यन्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य सर्वनामस्थाने परे झलन्तस्य अजन्तस्य च नपुंसकस्य नुमागमः भवति। नुम् इत्यत्र मित्त्वात् मिदचोऽन्त्यात्परः इत्यनया परिभाषया अन्त्याद् अचः परः नुमागमः भवति इत्यर्थो लभ्यते।

**उदाहरणम्** - ज्ञानानि।

**सूत्रार्थसमन्वयः** - ज्ञान इ इत्यत्र सर्वनामस्थानसंज्ञकस्य अजन्तस्य नपुंसकलिङ्गस्य प्रकृतसूत्रेण नुमागमः भवति। मित्त्वात् मिदचोऽन्त्यात्परः इत्यनया परिभाषया परिष्कृतेन अन्त्यात् अचः नुमागमे अनुबन्धलोपे ज्ञान न् इ इति स्थितिः भवति। तदा -

## [ १४.७] सर्वनामस्थाने चासम्बुद्धौ॥ (६.४.८)

**सूत्रार्थः-** नान्तस्योपधायाः दीर्घः स्यादसंम्बुद्धौ सर्वनामस्थाने इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। सर्वनामस्थाने च असम्बुद्धौ इति छेदः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। सर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम्। असम्बुद्धौ इति सप्तम्येकवचनान्तं पदम्। न सम्बुद्धिः असम्बुद्धिः नञ्तत्पुरुषसमासः, तस्मिन् असम्बुद्धौ इति। सम्बुद्धिभिन्ने इत्यर्थः। च इति अव्ययपदम्। नोपधायाः इतीदं सूत्रम् अनुवर्तते। नः इति लुप्तषष्ठीकं पदम्। अङ्गस्य इत्यधिक्रियते। तच्च न इत्यत्र विशेष्यत्वेन अन्वेति। तेन तदन्तविधिना नान्तस्य अङ्गस्य इत्यर्थो लभ्यते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इत्यस्मात् सूत्रात् दीर्घः इति प्रथमान्तं पदम् अनुवर्तते। तेन न उपधायाः दीर्घः असम्बुद्धौ सर्वनामस्थाने इति सूत्रसमन्वयः भवति। तेन अस्य सूत्रस्य नान्तस्य उपधायाः दीर्घः भवति सम्बुद्धिभिन्ने सर्वनामस्थाने परे इत्यर्थः भवति।

**उदाहरणम्** - ज्ञानानि।

**सूत्रार्थसमन्वयः** - ज्ञान न् इ इत्यत्र शिप्रत्ययः सम्बुद्धिभिन्नः सर्वनामस्थानभिन्नः अस्ति। तेन अनेन सूत्रेण नान्तस्य उपधायाः दीर्घे आकारे ज्ञाना न् इ इति स्थितिः भवति। ततः वर्णसम्मेलने ज्ञानानि इति रूपं सिद्ध्यति।

ज्ञानशब्दस्य सम्बोधनैकवचने सुप्रत्यये अनुबन्धलोपे हे ज्ञान स् इति स्थितिः भवति। ततः स्वमोर्नपुंसकात् इत्यनेन सम्बुद्धेः लुक् प्राप्तः। परन्तु परत्वात् लोपं बाधित्वा अतोऽम् इत्यनेन सूत्रेण सुप्रत्यस्य अमादेशे ज्ञान अम् इति स्थितिः भवति। ततः अमि पूर्व इत्यनेन पूर्वरूपे हे ज्ञानम् इति स्थितिः भवति। ततः एङ्ह्रस्वात्सम्बुद्धेः इत्यनेन ह्रस्वात् परस्य सम्बुद्धेः हलः मकारस्य लोपे हे ज्ञान इति रूपं सिद्ध्यति।

सम्बोधनद्विवचने औप्रत्यये पूर्ववत् हे ज्ञाने इति रूपं भवति, बहुवचने च जस्प्रत्यये हे ज्ञानानि इति रूपं भवति।

द्वितीयैकवचने अम्प्रत्यये अमः लुकं प्रबाध्य अतोऽम् इत्यनेन अमादेशे पूर्वरूपे ज्ञानम् इति रूपम्। द्विवचने औट्प्रत्यये अनुबन्धलोपे प्रथमाद्विवचनवत् ज्ञाने इति रूपं सिद्ध्यति। बहुवचने शस्प्रत्यये जश्शसोः शि इत्यनेन शि-इत्यादेशे प्रथमाबहुवचनवत् ज्ञानानि इति रूपं सिद्ध्यति।

अन्येषु वचनेषु तु रामशब्दवत् ज्ञानेन, ज्ञानाभ्याम्, ज्ञानैः, ज्ञानाय, ज्ञानाभ्याम्, ज्ञानेभ्यः, ज्ञानात्, ज्ञानाभ्याम्, ज्ञानेभ्यः, ज्ञानस्य, ज्ञानयोः, ज्ञानानाम्, ज्ञाने, ज्ञानयोः ज्ञानेषु इत्यादीनि रूपाणि भवन्ति।

## ।।श्रीपा।।

**सूत्रावतरणम्** - श्रियं पातीति श्रीपाशब्दः विश्वपाशब्दवत् क्विप्प्रत्ययान्तः विच्प्रत्ययान्तो वा। अस्य शब्दस्य विशेषणरूपेण व्यवहारः भवति। तस्मात् अस्य त्रिषु एव लिङ्गेषु व्यवहारः भवति। नपुंसकलिङ्गे स्वादिप्रत्ययविवक्षायां ह्रस्वविधानार्थं सूत्रमिदं प्रारभ्यते-

## [ १४.८] ह्रस्वो नपुंसके प्रातिपदिकस्य॥ (१.२.४७)

**सूत्रार्थः**- क्लीबे प्रातिपदिकस्य अजन्तस्य ह्रस्वः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। ह्रस्वः नपुंसके प्रातिपदिकस्य इति छेदः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। ह्रस्वः इति प्रथमैकवचनान्तं पदम्। नपुंसके इति सप्तम्येकवचनान्तं पदम्। प्रातिपदिकस्य षष्ठ्येकवचनान्तं पदम्। अचश्च इति परिभाषया ह्रस्वदीर्घप्लुतशब्दैः यत्र ह्रस्वदीर्घप्लुताः विधीयन्ते तत्र अचः इति षष्ठ्यन्तं पदमुपतिष्ठते। प्रकृतसूत्रेण ह्रस्वो नपुंसके प्रातिपदिकस्य इत्यनेन ह्रस्वशब्देन ह्रस्वविधानात् अत्रापि अचः इति षष्ठ्यन्तं पदम् उपतिष्ठते। तच्च प्रातिपदिकस्य इत्यस्य विशेषणं भवति। तेन तदन्तविधिना अजन्तस्य प्रातिपदिकस्य इत्यर्थः लभ्यते। प्रातिपदिकस्य इत्यत्र षष्ठीश्रवणात् अलोऽन्त्यस्य परिभाषया अन्त्यस्य अलः ह्रस्वादेशः विधीयते। तेन अस्य सूत्रस्य नपुंसकलिङ्गे विद्यमानस्य अजन्तस्य प्रातिपदिकस्य ह्रस्वो भवति इति सूत्रार्थो लभ्यते।

**उदाहरणम्-** श्रीपम्।

**सूत्रार्थसमन्वयः -** श्रीपाशब्दात् नपुंसकलिङ्गे सुबुत्पत्तिविवक्षायां अनेन सूत्रेण अजन्तस्य अङ्गस्य ह्रस्वे आकारस्य अकारे श्रीप इति प्रातिपदिकं भवति। ततः प्रथमैकवचने सुप्रत्यये अनुबन्धलोपे श्रीप स् इति स्थितिः भवति। ततः स्वमोर्नपुंसकात् इत्यनेन सूत्रेण सुप्रत्ययस्य लुक् प्राप्नोति। तं प्रबाध्य अतोऽम् इत्यनेन अमादेशे श्रीप अम् इति स्थितिः भवति। ततः अतोऽम् इत्यनेन सूत्रेण पूर्वरूपैकादेशे श्रीपम् इति रूपं भवति।

द्विवचनविवक्षायां औप्रत्यये ज्ञानशब्दवत् श्रीपे इति रूपं सिद्ध्यति।

बहुवचने जस्प्रत्यये ह्रस्वे श्रीप जस् इति जाते जश्शसोः शिः इत्यनेन सूत्रेण जसः शि-इत्यादेशे अनुबन्धलोपे श्रीप इ इति स्थितिः भवति। ततः शि-इत्यस्य शि सर्वनामस्थानम् इत्यनेन सूत्रेण सर्वनामस्थानसंज्ञा भवति। ततः नपुंसकस्य झलचः इत्यनेन सूत्रेण अजन्ताङ्गस्य क्लीबस्य सर्वनामस्थाने परे नुमागमे श्रीप न् इ स्थितिः भवति। ततः नान्तस्य उपधायाः असंम्बुद्धौ सर्वनामस्थाने परे सर्वनामस्थाने चासम्बुद्धौ इत्यनेन सूत्रेण दीर्घे आकारे श्रीपा नि इति स्थितिः भवति। तदा -

## [ १४.९] एकाजुत्तरपदे णः॥ (८.४.१२)

**सूत्रार्थः-** एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। एकाजुत्तरपदे णः इति छेदः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। एकाजुत्तरपदे इति सप्तम्येकवचनान्तं पदम्। एकः अच् यस्मिन् तद् एकाच्, तद् उत्तरपदं यस्य स एकाजुत्तरपदः, तस्मिन् एकाजुत्तरपदे इति बहुव्रीहिगर्भो बहुव्रीहिसमासः। समासस्य एव उत्तरपदं भवति। तेन उत्तरपदशब्देन समासः इति लभ्यते। णः इति प्रथमैकवचनान्तं पदम्। रषाभ्यां नो णः समानपदे इति सूत्रम् अनुवर्तते। पूर्वपदात्संज्ञायामगः इत्यस्मात् सूत्रात् पूर्वपदात् इति पञ्चम्यन्तं पदम् अनुवर्तते। पूर्वं पदं यस्य तत्पूर्वपदम् इति बहुव्रीहिसमासः। प्रातिपदिकान्तनुम्विभक्तिषु च इति सूत्रम् अनुवर्तते। प्रातिपदिकस्य अन्तः प्रातिपदिकान्तः इति षष्ठीतत्पुरुषसमासः। तेन अस्य सूत्रस्य पूर्वपदभ्यां रषाभ्यां परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णत्वं भवति इत्यर्थो भवति।



**उदाहरणम्-** श्रीपाणि।

**सूत्रार्थसमन्वयः** - पूर्वसूत्रोक्तप्रकारेण श्रीपा नि इति स्थितिः भवति। अत्र श्रीपा इति एकं पदं नि इति अपरं पदम्। अतः श्रीपा नि इत्यत्र एकपदाभावात् अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन सूत्रेण नकारस्य णत्वे अप्राप्ते एकपदाभावेऽपि श्रीपा नि इत्यत्र पूर्वपदस्थात् रेफात् परस्य णकारस्य अनेन सूत्रेण णकारेण श्रीपाणि इति रूपं भवति।

द्वितीयादिविभक्तिषु ज्ञानशब्दवत् श्रीपम्, श्रीपे, श्रीपाणि, श्रीपेण, श्रीपाभ्याम्, श्रीपैः, श्रीपाय, श्रीपाभ्याम्, श्रीपेभ्यः, श्रीपात्, श्रीपाभ्याम्, श्रीपेभ्यः, श्रीपस्य, श्रीपयोः, श्रीपाणाम्, श्रीपे, श्रीपयोः श्रीपेषु, हे श्रीप, हे श्रीपे, हे श्रीपाणि इत्यादीनि रूपाणि भवन्ति।

## पाठगतप्रश्नाः-२

७. शि-इत्यादेशस्य सर्वनामस्थानसंज्ञा विधायकं सूत्रं किम्?

८. ज्ञानानि इत्यत्र नुमागमः केन सूत्रेण विधीयते?

९. ज्ञानानि इत्यत्र उपधादीर्घः केन सूत्रेण विधीयते?

१०. श्रीपम् इत्यत्र ह्रस्वः केन सूत्रेण विधीयते?

११. श्रीपाणि इत्यत्र णत्वं केन सूत्रेण विधीयते?

१२. एकाजुत्तरपदे णः इत्यस्य सूत्रस्य अर्थं लिखत।

---

## ।।वारि।।

### [ १४.१० ] स्वमोर्नपुंसकात्॥ (७.१.२३)

**सूत्रार्थः-** क्लीबादङ्गात् परयोः स्वमोर्लुक् स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। स्वमोः नपुंसकात् इति छेदः। अस्मिन् सूत्रे द्वे पदे स्तः। स्वमोः इति षष्ठीद्विवचनान्तं पदम्। सुश्च अम् च इति स्वमौ तयोः स्वमोः इति इतरेतयोगद्वन्द्वसमासः। नपुंसकात् इति पञ्चम्येकवचनान्तं पदम्। षड्भ्यो लुक् इत्यस्मात् लुगिति प्रथमान्तं पदमनुवर्तते। अङ्गस्य इत्यधिकारे सूत्रमिदं वर्तते। तच्च प्रातिपदिकात् इत्यत्र अन्वेति। तेन अस्य सूत्रस्य नपुंसकलिङ्गात् अङ्गात् परयोः सुप्रत्ययस्य अम्प्रत्ययस्य च लुक् भवति इत्यर्थो लभ्यते।

**विशेषविचारः-** अत्र संशयः तावत् आदेः परस्य इत्यनेन अयं लुक् अमः अकारस्य स्थाने किमर्थं न भवति। अत्र समाधानरूपेण उच्यते प्रत्ययस्य लुक्श्लुलुपः इत्यनेन सूत्रेण विधीयमाणः लुक् प्रत्ययस्य अदर्शनस्य नामान्तरम्। अत्र अमः लुक् करणीयः न तु अमः अकारस्य अथवा मकारस्य। सम्पूर्णस्य अम्समुदायस्य एव प्रत्ययसंज्ञा विद्यते। अतः सम्पूर्णस्य अमः एव अदर्शनं कुर्मः चेदेव लुक् सार्थकः भवति अन्यथा न। अतः सम्पूर्णस्य अमः एव लुक् करणीयः न तु अकारस्य।

**उदाहरणम्-** वारि।

**सूत्रार्थसमन्वयः -** जलार्थकस्य नित्यं नपुंसके वर्तमानस्य अव्युत्पन्नस्य वारिशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे वारि स् इति स्थितिः भवति। ततः स्वमोर्नपुसकात् इत्यनेन सूत्रेण नपुंसकलिङ्गात् अङ्गात् परस्य लुकि वारि इति रूपं भवति।

## [ १४.११] प्रत्ययस्य लुक्श्लुलुपः॥ (१.१.६१)

**सूत्रार्थः-** लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्याद्।

**सूत्रव्याख्या-** इदं संज्ञासूत्रम्। प्रत्ययस्य लुक्श्लुलुपः इति छेदः। अस्मिन् सूत्रे पदद्वयं विद्यते। प्रत्ययस्य इति षष्ठ्येकवचनान्तं पदम्। अदर्शनं लोपः इत्यस्मात् सूत्रात् अदर्शनम् इति प्रथमान्तं पदम् अनुवर्तते। लुक्श्लुलुपः इति प्रथमाबहुवचनान्तं पदम्। लुक् च श्लुश्च लुप् च इति लुक्श्लुलुपः इतरेतरयोगद्वन्द्वः। प्रत्ययस्य अदर्शनं लुक्श्लुलुप्संज्ञकं स्यादित्यर्थः प्रतीयते। लुक्श्लुलुपः इति द्विरावर्तते। आवृत्तस्य तृतीयान्ततया विपरिणामेन लुक्श्लुलुब्शद्बैः इत्यर्थो लभ्यते। एतस्य च अनुवर्तमानस्य अदर्शनम् इति पदेन अन्वयः भवति। ततश्च लुक् श्लु लुप् इत्युच्चार्य विहितं प्रत्ययस्य अदर्शनं यथासंख्यपरिभाषया क्रमाद् लुगादिसंज्ञा स्यादिति लभ्यते। तेन अस्य सूत्रस्य लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात् लुक्श्लुलुप्संज्ञं भवति इत्यर्थो लभ्यते।

## [ १४.१२] न लुमताङ्गस्य॥ (१.१.६३)

**सूत्रार्थः-** लुक् श्लु लुप् एते लुमन्तः। लुमताशब्देन लुप्ते तन्निमित्तम् अङ्गकार्यं न स्याद्।

**सूत्रव्याख्या-** इदं निषेधसूत्रम्। न लुमता अङ्गस्य इति छेदः। त्रिपदात्मकेऽस्मिन् सूत्रे न इति अव्ययपदम्। लुमता इति तृतीयैकवचनान्तं पदम्। लुः इत्येकदेशोऽस्तीति लुमान् तेन लुमता। लुशब्देन लुक्शब्दः, श्लुशब्दः, लुप्शब्दश्च इत्येतेषां ग्रहणं भवति। प्रत्ययलोपे प्रत्ययलक्षणम् इतीदं सूत्रम् प्रकृते अनुवर्तते। अङ्गस्य इति षष्ठ्येकवचनान्तं पदम्। अस्य सूत्रस्य अर्थः लुक् श्लु लुप् एते लुमन्तः। तेन अस्य सूत्रस्य लुक्श्लुलुप्-शब्दैः प्रत्ययलोपे विहिते सति प्रत्ययनिमित्तकम् अङ्गकार्यं न भवति इत्यर्थो लभ्यते।

**उदाहरणम्-** वारि।

**सूत्रार्थसमन्वयः -** अत्र वारिशब्दात् परस्य सुप्रत्ययस्य स्वमोर्नपुंसकात् इत्यनेन सूत्रेण अदर्शनम् अभवत्। तेन प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन सूत्रेण प्रत्ययलक्षणे तदाश्रितं कार्यं प्राप्नोति। परन्तु अत्र सुप्रत्ययस्य अदर्शनं लुक्शब्देन भवति। तेन अनेन सूत्रेण प्रत्ययलक्षणस्य निषेधः भवति। तस्मात् प्रत्ययलक्षणे तदाश्रितं कार्यं न भवति।

## [ १४.१३] इकोऽचि विभक्तौ॥ (७.१.७३)

**सूत्रार्थः-** इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। इकः अचि विभक्तौ इति छेदः। अजादिविभक्तिः यदि परं तिष्ठति तर्हि इगन्तनपुंसकस्य नुमागमः भवतीति सामान्यसूत्रार्थः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। इकः इति षष्ठ्येकवचनान्तं पदम्। अचि इति सप्तम्येकवचनान्तं पदम्। विभक्तौ इत्यपि सप्तम्येकवचनान्तं पदम्। इदितो नुम्धातोः इत्यस्मात् सूत्रात् नुमिति प्रथमान्तं पदम् अनुवर्तते। नपुंसकस्य झलचः इत्यस्मात् नपुंसकस्य इति षष्ठ्यन्तं पदम् अनुवर्तते। इकः इति नपुंसकस्य इत्यस्य विशेषणम्। तेन तदन्तविधिना इगन्तस्य नपुंसकस्य इति लभ्यते। अचि इत्यस्य तदादिविधिना अजादौ विभक्तौ इत्यर्थः जायते। तेन अस्य सूत्रस्य- जादिविभक्तिः परे तिष्ठति चेत् इगन्तनपुंसकस्य नुमागमः भवति इत्यर्थो लभ्यते। नुमः मित्करणात् लिङ्गात् इदम् आगमविधिः इति ज्ञायते। नुमः मित्त्वात् अयम् अन्तिमात् अचः परं भवति।

**उदाहरणम्-** वारिणी।

**सूत्रार्थसमन्वयः -** वारिशब्दस्य प्रथमाद्विवचने औप्रत्यये तस्य शी-इत्यादेशे अनुबन्धलोपे वारि ई इति स्थितिः भवति। वारिशब्दः इगन्तः नपुंसकशब्दः। तस्य अजादिविभक्तौ परे प्रकृतसूत्रेण नुमागमे अनुबन्धलोपे वारि न् ई इति स्थितिः भवति। ततः अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन णत्वे कृते वारिणी इति रूपं सिद्ध्यति।

प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे वारि अस् इति स्थितिः भवति। ततः जश्शसोः शि इत्यनेन शि-इत्यादेशे अनुबन्धलोपे वारि इ इति स्थितिः भवति। शि-इत्यस्य शि सर्वनामस्थानम् इत्यनेन सर्वनामसंज्ञा भवति। ततः इकोऽचि विभक्तौ इत्यनेन सूत्रेण नुमागमे अनुबन्धलोपे वारि न् इ इति स्थितिः भवति। ततः सर्वनामस्थाने चासम्बुद्धौ इत्यनेन सूत्रेण उपधादीर्घे नकारस्य णत्वे च वारीणि इति रूपं सिद्ध्यति। वारिशब्दस्य द्वितीयाविभक्तौ अपि प्रथमावत् रूपाणि भवन्ति।

वारिशब्दस्य सम्बोधनैकवचने सुप्रत्यये अनुबन्धलोपे हे वारि सु इति स्थितिः भवति। ततः स्वमोर्नपुंसकात् इत्यनेन सूत्रेण सुप्रत्ययस्य लुकि हे वारि इति रूपं भवति। ततः प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन सूत्रेण प्रत्ययलक्षणम् आश्रियं ह्रस्वस्य गुणः इत्यनेन सूत्रेण ह्रस्वस्य इकारस्य गुणः प्राप्नोति। परन्तु अत्र सुप्रत्ययस्य लुका लुक् जातः। तेन न लुमताङ्गस्य इत्यनेन प्रत्ययलक्षणस्य निषेधः भवति। परन्तु न लुमताङ्गस्य इति निषेधः अनित्यः अस्ति। तेन गुणे एकारे हे वारे स् इति स्थितिः भवति। ततः एङ्ह्रस्वात्सम्बुद्धेः इत्यनेन सम्बुद्धेः लोपे हे वारे इति रूपं सिद्ध्यति। किञ्च निषेधस्य नित्यत्वपक्षे तु प्रत्ययलक्षणस्य अभावात् तदाश्रयं कार्यं न भवति। तेन गुणाभावे हे वारि इति रूपं सिद्ध्यति।

सम्बोधने द्विवचने औप्रत्यये पूर्ववत् हे वारिणी इति रूपं भवति। बहुवचने जस्प्रत्यये च हे वारीणि इति रूपं सिद्ध्यति।

तृतीयैकचवने टाप्रत्यये अनुबन्धलोपे वारि आ इति स्थितिः भवति। अत्र इकोऽचि विभक्तौ इत्यनेन नुमागमः किञ्च आङो नास्त्रियाम् इत्येनन नादेशः युगपत् प्राप्तः। अत्र परत्वात् विप्रतिषेधे परं कार्यम् इत्यनेन नियमेन आङो नास्त्रियाम् इत्यनेन सूत्रेण नादेशे तस्य णत्वे वारिणा इति रूपं सिद्ध्यति।

द्विवचने भ्याम्प्रत्यये वारिभ्याम् इति रूपं भवति बहुवचने भिस्प्रत्यये सकारस्य रुत्वे विसर्गे च वारिभिः इति रूपं भवति।

चतुर्थ्येकवचने ङेप्रत्यये अनुबन्धलोपे वारि ए इति स्थितिः भवति। वारिशब्दः इकारन्तः अस्ति। तस्मात् शेषो घ्यसखि इत्यनेन सूत्रेण अस्य घिसंज्ञा भवति। ततः इकोऽचि विभक्तौ इत्यनेन सूत्रेण प्राप्तं नुमागमं बाधित्वा परत्वात् घेर्ङिति इत्यनेन सूत्रेण इकारस्य गुणः प्राप्नोति। वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन इत्यनेन वार्तिकेन परमपि गुणं प्रबाध्य नुमागमे वारिन् ए इति स्थितिः भवति। ततः नकारस्य णत्वे वारिणे इति रूपं भवति।

चतुर्थीद्विवचने भ्याम्प्रत्यये वारिभ्याम् इति रूपं सिद्ध्यति। बहुवचने भ्यस्प्रत्यये सकारस्य रुत्वे विसर्गे च वारिभ्यः इति रूपं सिद्ध्यति।

पञ्चम्येवचने ङसिप्रत्यये अनुबन्धलोपे वारि अस् इति स्थितिः भवति। ततः इकोऽचि विभक्तौ इत्यनेन सूत्रेण प्राप्तं नुमागमं बाधित्वा परत्वात् घेर्ङिति इत्यनेन सूत्रेण इकारस्य गुणः प्राप्नोति। ततः वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन इत्यनेन वार्तिकेन परमपि गुणं प्रबाध्य नुमागमे अनुबन्धलोपे वारिन् अस् इति स्थितिः भवति। ततः नकारस्य णत्वे सकारस्य रुत्वे विसर्गे च वारिणः इति रूपं भवति।

पञ्चमीद्विवचने भ्याम्प्रत्यये वारिभ्याम् इति रूपं सिद्ध्यति। बहुवचने भ्यस्प्रत्यये वारिभ्यः इति रूपं भवति।

षष्ठ्येकवचने ङस्प्रत्यये अनुबन्धलोपे पूर्ववत् परमपि गुणं वाधित्वा नुमागमे सकारस्य रुत्वे विसर्गे च वारिणः इति रूपं सिद्ध्यति।

षष्ठीद्विवचने ओस्प्रत्यये वारि ओस् इति जाते इको यणचि इत्यनेन सूत्रेण यणादेशः प्राप्तः। तं प्रबाध्य इकोऽचि विभक्तौ इत्यनेन नुमागमे अनुबन्धलोपे नकारस्य णत्वे वारिणोः इति रूपं सिध्यति।

षष्ठीबहुवचने आम्प्रत्यये वारि आम् इति स्थितिः भवति। ततः इकोऽचि विभक्तौ इत्यनेन नुमागमः प्राप्तः। परत्वात् तं बाधित्वा ह्रस्वनद्यापो नुट् इत्यनेन नुडागमः प्राप्नोति। परन्तु वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन इत्यनेन वार्तिकेन परमपि नुडागमं प्रबाध्य नुमागमे वारिन् आम् इति स्थितिः भवति। ततः नामि इत्यनेन दीर्घे णत्वे वारीणाम् इति रूपं भवति।

सप्तम्येकवचने ङिप्रत्यये अनुबन्धलोपे वारि इ इति स्थितिः भवति। ततः अच्च घेः इत्यनेन सूत्रेण औत्वं प्राप्तम्। किञ्च इकोऽचि विभक्तौ इत्यनेन नुमागमः प्राप्तः। परत्वात् औत्वे प्राप्ते तं प्रबाध्य वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन इत्यनेन वार्तिकेन परमपि नुडागमं प्रबाध्य नुमागमे वारिन् इ इति स्थितिः भवति। ततः णत्वे वारिणि इति रूपं भवति।

द्विवचने ओस्प्रत्यये पूर्ववत् वारिणोः इति रूपं भवति। बहुवचने सुप्प्रत्यये सकारस्य आदेशप्रत्यययोः इत्यनेन षत्वे वारिषु इति रूपं सिद्ध्यति। इति वारिशब्दः समाप्तः।

## पाठगतप्रश्नाः-३

१३. स्वमोर्नपुंसकात् इति सूत्रस्य अर्थं लिखत।

१४. वारि इत्यत्र सुप्रत्ययस्य लुक् केन सूत्रेण अभवत्?

१५. लुमन्ताः के?

१६. कदा प्रत्ययलोपेऽपि प्रत्ययाश्रितं कार्यं न भवति?

१७. वारीणि इत्यत्र नुमागमः केन सूत्रेण विधीयते?

१८. वारिशब्दस्य सम्बोधनैकवचने कति रूपाणि भवन्ति?

---

## ।।दधि।।

अथ दधिशब्दः। नित्यं नपुंसके वर्तमानस्य अव्युत्पन्नस्य अजन्तस्य दधिशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः प्रथमैकवचनविवक्षायां सुप्रत्यये वारिशब्दवत् दधि इति रूपं भवति। द्विचवने औप्रत्यये दधिनी इति रूपं भवति। बहुवचने जस्प्रत्यये दधीनि इति रूपं भवति। द्वितीयायां च पूर्ववत् दधि, दधिनी, दधीनि इत्यादीनि रूपाणि भवन्ति।

दधिशब्दस्य सम्बोधनैकवचने सुप्रत्यये अनुबन्धलोपे हे दधि सु इति स्थितिः भवति। ततः न लुमताङ्गस्य इति निषेधस्य अनित्यपक्षे प्रत्ययलक्षणस्य निषेधाभावे वारिशब्दवत् हे दधे रूपं भवति। किञ्च निषेधस्य नित्यत्वपक्षे प्रत्ययलक्षणस्य अभावात् हे दधि इति रूपं भवति।

सम्बोधने द्विवचने औप्रत्यये पूर्ववत् हे दधिनी इति रूपं भवति। बहुवचने जस्प्रत्यये च हे दधीनि इति रूपं सिद्ध्यति।

**सूत्रावतरणम्-** दधिशब्दस्य तृतीयैकवचने टाप्रत्यये वारि टा इति स्थितिः भवति। ततः शेषो घ्यसखि इत्यनेन सूत्रेण दधिशब्दस्य घिसंज्ञा भवति। घिसंज्ञायाम् आङो नास्त्रियाम् इत्यनेन टा-इत्यस्य नादेशे प्राप्ते सूत्रमिदम् आरभ्यते।

## [ १४.१४] अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः॥ (७.१.७५)

**सूत्रार्थः-** एषामनङ् स्याट्टादावचि स चोदात्तः इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अस्थिदधिसक्थ्यक्ष्णाम् अनङ् उदात्तः इति छेदः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। अस्थिदधिसक्थ्यक्ष्णाम् इति षष्ठीबहुवचनान्तं पदम्। अस्थि च दधि च सक्थि च अक्षि च इति अस्थिदधिसक्थ्यक्षीणि इति इतरेतरयोगद्वन्द्वः, तेषाम् अस्थिदधिसक्थ्यक्ष्णाम्। अनङ् इति प्रथमैकवचनान्तं पदम्। अनङः ङकारस्य इत्संज्ञा भवति, अकारश्च उच्चरणार्थकः। ङित्वात् ङिच्च इति



परिभाषया अन्तादेशः भवति। तेन अयम् आदेशविधिः इति निश्चीयते। उदात्तः इति प्रथमैकवचनान्तं पदम्। इकोऽचि विभक्तौ इत्यस्मात् सूत्रात् अचि इति विभक्तौ चेति सप्तम्यन्ते पदे अनुवर्तेते। तयोश्च बहुवचनान्ततया वचनविपरिणामः भवति। तेन अक्षु विभक्तिषु इत्यर्थो लभ्यते। अक्षु इत्यस्मात् तदन्तविधौ अजादिषु तृतीयादिषु विभक्तिषु इत्यर्थः जायते। तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य इत्यस्मात् सूत्रात् तृतीयादिषु इति सप्तम्यन्तं पदम् अनुवर्तते। तेन अस्य सूत्रस्य अजादिषु तृतीयादिषु विभक्तिषु अस्थिदधिसक्थ्यक्ष्णाम् अनङादेशो भवति स च उदात्तः इत्यर्थो भवति।

**उदाहरणम्-** दध्ना।

तृतीयैकवचने टाप्रत्यये अनुबन्धलोपे दधि आ इति स्थितिः भवति। अजादिप्रत्ययः परे अस्ति। तेन अनेन सूत्रेण अन्त्यस्य इकारस्य अनङादेशे अनुबन्धलोपे दधन् आ इति स्थितिः भवति। तदा -

## [ १४.१५] अल्लोपोऽनः॥ (६.४.१३४)

**सूत्रार्थः-** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्य अकारस्य लोपः स्याद्।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। अत् लोपः अनः इति छेदः। अस्मिन् सूत्रे त्रीणि पदानि विद्यन्ते। अत् इति लुप्तषष्ठ्येकवचनान्तं पदम्। सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः इत्यनेन सूत्रेण षष्ठीविभक्तेः लुक् जातः। लोपः इति प्रथमैकवचनान्तं पदम्। अनः इति अवयवषष्ठ्यन्तम् अत् इत्यस्य विशेषणम्। तेन अनः अववयो योऽकारः तस्य इत्यर्थः लभ्यते। अङ्गस्य इत्यधिकृतम् इह अवयवषष्ठ्यन्तम् आश्रीयते। तच्च अनः इत्यत्र अन्वेति। तेन अङ्गावयवो यः अन् तदवयवस्य अकारस्य लोपः इति। भस्य इत्यधिक्रियते। तच्च अनः इत्यत्र अन्वेति। ततश्च अनः असर्वनामस्थान-यजादिस्वादिपरत्वं लभ्यते। तेन अस्य सूत्रस्य अङ्गावयवः असर्वनामस्थानयजादिस्वादिपरो यः अन् तस्य अकारस्य लोपः भवति इत्यर्थः भवति।

**उदाहरणम्** - दध्ना।

**सूत्रार्थसमन्वयः** - तृतीयैकवचने टाप्रत्यये अनङादेशे दधन् आ इति स्थितिः भवति। ततः अनेन सूत्रेण अजादिप्रत्यये परे अनः अकारस्य लोपे दध्न् आ इति स्थितिः भवति। ततः वर्णसम्मेलने दध्ना इति रूपं सिध्यति।

दधिशब्दस्य तृतीयाद्विचवने भ्याम्प्रत्यये दधिभ्याम् इति रूपं बहुवचने भिस्प्रत्यये दधिभिः इति रूपं भवति।

चतुर्थ्येकवचने ङेप्रत्यये अनुबन्धलोपे पूर्ववत् अनङादेशे, अनः अकारस्य लोपे दध्ने इति रूपं भवति। द्विचवने भ्याम्प्रत्यये दधिभ्याम् इति रूपं सिध्यति। बहुवचने भ्यस्प्रत्यये दधिभ्यः इति रूपं भवति।

पञ्चम्येकवचने ङसिप्रत्यये अनुबन्धलोपे पूर्ववत् अनङादेशे, अनः अकारस्य लोपे दध्नः इति रूपं भवति। द्विचवने भ्याम्प्रत्यये दधिभ्याम् इति रूपं सिध्यति। बहुवचने भ्यस्प्रत्यये दधिभ्यः इति रूपं भवति।

षष्ठ्येकवचने ङस्प्रत्यये अनुबन्धलोपे पूर्ववत् अनङादेशे, अनः अकारस्य लोपे दध्नः इति रूपं भवति। द्विचवने ओस्प्रत्यये पूर्ववत् अनङादेशे, अनः अकारस्य लोपे सकारस्य रुत्वे विसर्गे च दध्नोः इति रूपं भवति। बहुवचने आम्प्रत्यये पूर्ववत् अनङादेशे, अनः अकारस्य लोपे दध्नाम् इति रूपं भवति।

## [ १४.१६] विभाषा ङिश्योः॥ (६.४.१३६)

**सूत्रार्थः-** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्य अकारस्य लोपो वा स्याद् ङिश्योः परयोः इति।

**सूत्रव्याख्या-** इदं विधिसूत्रम्। विभाषा ङिश्योः इति छेदः। विभाषा इति विकल्पार्थकमव्ययपदम्। ङिश्योः इति सप्तमीद्विवचनान्तं पदम्। ङिश्च शी च इति ङिश्यौ इतरेतरयोगद्वन्द्वसमासः, तयोः ङिश्योः। अल्लोपोऽनः इति सूत्रम् अनुवर्तते। अनः इति अवयवषष्ठ्यन्तम् अत् इत्यस्य विशेषणम्। तेन अनः अववयो योऽकारः तस्य इत्यर्थः लभ्यते। अङ्गस्य इत्यधिकृतम् इह अवयवषष्ठ्यन्तम् आश्रीयते। तच्च अनः इत्यत्र अन्वेति। तेन अङ्गावयवो यः अन् तदवयवस्य अकारस्य लोपः इति। भस्य इत्यधिक्रियते। तच्च अनः इत्यत्र अन्वेति। ततश्च अनः असर्वनामस्थान-यजादिस्वादिपरत्वं लभ्यते। शी-इत्यनेन नपुंसकाच्च इत्यनेन विहितः शी एवात्र गृह्यते न तु जश्शसोः शिः। शि सर्वनामस्थानम् इत्यनेन शि-इत्यस्य सर्वनामस्थानसंज्ञा भवति। तेन शिपरे भसंज्ञायाः अभावात् इदं सूत्रं तत्र न प्रवर्तते। तेन अस्य सूत्रस्य अङ्गावयवः असर्वनामस्थानयजादिस्वादिपरो यः अन् तस्य अकारस्य लोपः ङिश्योः परयोः विकल्पेन भवति इत्यर्थः भवति।

**उदाहरणम्** - दध्नि।

**सूत्रार्थसमन्वयः** - सप्तम्येकवचने ङिप्रत्यये अनुबन्धलोपे अनङादेशे दधन् इ इति स्थिते तत्र अनः अकारस्य अल्लोपोऽनः इति नित्यं लोपे प्राप्ते तं प्रबाध्य अनेन सूत्रेण विकल्पेन अङ्गावयवस्य अनः अकारस्य लोपे दध्नि इति रूपं सिध्यति। विकल्पेन लोपाभावपक्षे दधनि इति रूपं सिध्यति।

सप्तमीद्विचवने ओस्प्रत्यये पूर्ववत् अनङादेशे, अनः अकारस्य लोपे सकारस्य रुत्वे विसर्गे च दध्नोः इति रूपं भवति। बहुचवने सुप्प्रत्यये सकारस्य मूर्धन्यादेशे दधिषु इति रूपं सिध्यति।

## पाठगतप्रश्नाः-४

१९. दधिशब्दस्य केन सूत्रेण प्रातिपदिकसंज्ञा विधीयते?

२०. दधिशब्दस्य सम्बोधनैकवचने कति रूपाणि भवन्ति?

२१. अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः इत्यनेन सूत्रेण कः आदेश विधीयते?

२२. दध्ना इत्यत्र अनः अकारस्य लोपः केन सूत्रेण अभवत्?

२३. अल्लोपोऽनः इति सूत्रस्य अर्थं लिखत।

२४. विभाषा ङिश्योः इत्यनेन सूत्रेण किं विधीयते?

## पाठसारः

अस्मिन् पाठे नपुंसकशब्दानां रूपाणि कथं भवन्ति इति पर्यालोचितम्। यद्यपि नपुंसकशब्दानां प्रायः पुंलिङ्गवत् रूपाणि भवन्ति तथापि येषु स्थलेषु भिन्नता परिलक्ष्यते तानि स्थलानि विस्तरेण पर्यालोचितानि। आदौ ज्ञानशब्दस्य रूपाणि कथं भवन्ति तत् विवृतम्। ततः कुत्र प्रत्ययलोपे प्रत्ययाश्रितं कार्याणि न भवन्ति तानि स्थलानि विस्तरेण प्रतिपादितानि। ततः नपुंसके ह्रस्वविधायकं सूत्रं प्रतिपादितम्। ततः नुमागमः कुत्र भवति तत् प्रतिपादितम्। ततः दधिशब्दस्य प्रतिपादनकाले अजादौ प्रत्यये परे अनः अकारस्य लोपः कथं भवति तदालोचितम्। एतानि सर्वाणि अपि अस्मिन् पाठे विस्तरेण प्रतिपादितानि।

## पाठान्तप्रश्नाः

१. अतोऽम् इति सूत्रं व्याख्यात।

२. नपुंसकस्य झलचः इति सूत्रं व्याख्यात।

३. सर्वनामस्थाने चासम्बुद्धौ इति सूत्रं व्याख्यात।

४. ह्रस्वो नपुंसके प्रातिपदिकस्य इति सूत्रं व्याख्यात।

५. एकाजुत्तरपदे णः इति सूत्रं व्याख्यात।

६. स्वमोर्नपुंसकात् इति सूत्रं व्याख्यात।

७. इकोऽचि विभक्तौ इति सूत्रं व्याख्यात।

८. अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः इति सूत्रं व्याख्यात।

९. अल्लोपोऽनः इति सूत्रं व्याख्यात।

१०. रूपाणि ससूत्रं साधयत – ज्ञानानि हे ज्ञाने श्रीपाणि वारीणि विरणे दध्ना ।

## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. अतोऽम् इत्यनेन।

२. स्वमोर्नपुंसकात् इत्यस्य।

३. क्लीबात्परस्यौङः शी स्याद्।

४. औङः शी-इत्यादेशः विधीयते।

५. जश्शसोः शिः इत्यनेन।

६. भस्य इवर्णावर्णयोः लोपः स्यादीकारे तद्धिते च परे इति।

**उत्तराणि-२**

७. शि सर्वनामस्थानम् इत्यनेन।

८. नपुंसकस्य झलचः इत्यनेन।

९. सर्वनामस्थाने चासम्बुद्धौ इत्यनेन।

१०. ह्रस्वो नपुंसके प्रातिपदिकस्य इत्यनेन।

११. एकाजुत्तरपदे णः इत्यनेन।

१२. एकाजुत्तपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्याद्।

**उत्तराणि-३**

१३. क्लीबादङ्गात् परयोः स्वमोर्लुक् स्याद्।

१४. स्वमोर्नपुंसकात् इत्यनेन।

१५. लुक् श्लु लुप् एते लुमन्तः।

१६. लुमताशब्देन लुप्ते प्रत्ययाश्रितं कार्यं न भवति।

१७. इकोऽचि विभक्तौ इत्यनेन।

१८. द्वे रूपे स्तः। हे वारि, हे वारे इति।

**उत्तराणि-४**

१९. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन।

२०. द्वे रूपे स्तः। हे दधे, हे दधि इति।

२१. अनङादेशः।

२२. अल्लोपोऽनः इत्यनेन।

२३. अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्य अकारस्य लोपः स्याद्।

२४. ङिश्योः परयोः अनः अकारस्य विकल्पेन लोपो विधीयते।

## ।।इति चतुर्दशः पाठः।।

# सुबन्ते हलन्तप्रकरणम्

## भूमिका

लोकेऽस्मिन् बहवः शब्दाः प्रयुज्यन्ते। तेषु केचन शब्दाः अजन्ताः भवन्ति। केचन च हलन्ताः भवन्ति। एवम् अजन्त-हलन्तभेदेन शब्दाः द्विविधा इति वक्तुं शक्यते। इतः पूर्वस्मिन् अध्याये अजन्तशब्दरूपाणां साधनविषये आलोचना कृता। तदर्थम् अनेकैः सूत्रैः सह भवतां परिचयः अपि जातः। अस्मिन् अध्याये हलन्तशब्दरूपाणां साधनप्रक्रिया आलोचिता भवति। लोके ये प्रसिद्धाः हलन्तशब्दाः जनेषु व्यवह्रियन्ते, येषां च रूपसाधने विज्ञाते अन्येषाम् अपि प्रसिद्धानां हलन्तशब्दानां रूपसिद्धिप्रक्रिया सुकरा भवति तादृशाः शब्दाः अत्र स्वीकृताः। तेषां च रूपाणां साधनाय अपेक्षितानि सूत्राणि सरलया शैल्या व्याख्यातानि। कदाचित् प्रसिद्धसूत्राणां व्याख्यानाय अप्रसिद्धाः दुह् इत्यादयः शब्दाः अपि स्वीकृताः। अस्मिन् अध्याये ये शब्दाः आलोच्यन्ते ते तावत् - लिह्, दुह्, विश्ववाह्, अनडुह्, सुदिव्, चतुर्, किम्, इदम्, राजन्, मघवन्, युवन्, पथिन्, पञ्चन्, अष्टन्, तद्, अस्मद्, युष्मद्, महत्, विद्वस्, भवत्, अदस्, ददत्, तुदत् पचत् चेति। साकल्येन चतुर्विंशतेः शब्दानां रूपसिद्धिप्रक्रिया अत्र दर्शिता। तेषां शब्दानां साधनाय एकसप्ततिः सूत्राणि अत्र व्याख्यातानि।

शब्दानां त्रीणि लिङ्गानि भवन्ति इति भवद्भिः पूर्वं ज्ञातमेव। प्रसिद्धग्रन्थावलोकनेन चेत् भवद्भिः ज्ञातुं शक्यते यत् आदौ पुंलिङ्गकाः शब्दाः, ततः स्त्रीलिङ्गकाः, अन्तिमे नपुंसकलिङ्गकाः शब्दाः आलोचिताः भवन्ति। तदर्थं प्रकरणभेदः अपि दृश्यते। अत्र तु एकं शब्दं स्वीकृत्य तस्य शब्दस्य पुंलिङ्गे, स्त्रीलिङ्गे, क्लीबलिङ्गे च यानि रूपाणि सन्ति तानि सर्वाणि क्रमशः एव साधितानि। इतः पूर्वं सुबन्ते अजन्तप्रकरणे अपि पुंलिङ्गकाः, स्त्रीलिङ्गकाः, नपुंसकलिङ्गकाः च शब्दाः आलोचिताः। तदर्थम् अपेक्षितेषु सूत्रेषु बहूनि अत्रापि आगच्छन्ति। तेषां पुनः व्याख्यानं नात्र अध्याये विहितम्। केवलं तेन तेन सूत्रेण किं किं कार्यं भवति तस्य उल्लेखः कृतः।

चतुर्षु अपि पाठेषु योग्यतावर्धनम् इति भागः वर्तते। तच्च योग्यतावर्धनं कदाचित् पाठमध्ये, कदाचित् च पाठान्ते स्थापितम्। अस्मिन् अंशे ये विषया आलोचिताः ते वस्तुतः पाठ्यांशे नान्तर्भवन्ति। केवलम् अधिकज्ञानाय प्रदत्ताः सन्ति। किञ्च, प्रत्येकस्मिन् पाठे ये शब्दा आलोचिताः, तेषां रूपाणि पाठान्ते योग्यतावर्धनांशे स्थापितानि।

## १५

# हलन्तप्रकरणे लिह्-दुह् इत्यादिशब्दानां रूपाणि

## प्रस्तावना

अस्मिन् पाठे हकारान्ताः चत्वारः शब्दाः, एकः वकारान्तः, एकः रेफान्तः, एकः मकारान्तः चेति सप्त शब्दाः आलोचिताः। एतेषां रूपाणां साधनाय एकविंशतिमुख्यसूत्राणि व्याख्यातानि। प्रसङ्गवशात् अन्यानि अपि सूत्राणि अध्यायान्तरे व्याख्यातानि पठितानि वा अत्र उल्लिखितानि। सूत्रव्याख्यावसरे पदच्छेदः, अनुवृत्तिः, समासः, विभक्तिः, सूत्रार्थः, उदाहरणे समन्वयः चेत्यादयः विषयाः प्राधान्येन आदृताः। सूत्रं, सूत्रार्थं, ततः सूत्रार्थसमन्वयस्थलं चेत्येतत्त्रयं यः सम्यग् विजानाति स एव वैयाकरणः, अन्ये तु वैयाकरणखसूचयः इति प्रसिद्धिः। तदर्थं सारल्येन सूत्रं सूत्रार्थं, लक्ष्यं चेति त्रितयज्ञानं पाणिनीयतन्त्रे प्राथमिकानां यथा स्यात्, पाणिनीयं शास्त्रं नास्ति कठिनमित्यनुभूतिः यथा स्यात् तथा सूत्राणि अत्र व्याख्यातानि।

## उद्देश्यानि –

इमं पाठं पठित्वा भवान् –

- हकारस्य स्थाने ढ इति आदेशः कदा भवति इति ज्ञास्यति।
- तदपवादत्वेन कदा हस्य स्थाने घ इति आदेशः भवति इति ज्ञातुं शक्ष्यति।
- दकारादिधातुश्चेत् कदा दकारस्य स्थाने धकारः भवति इति अवगच्छेत्।
- विश्ववाह्-शब्दरूपसिद्धिप्रक्रियां ज्ञास्यति।
- सम्प्रसारणसंज्ञाज्ञानं प्राप्स्यति।
- अनडुह्शब्दरूपाणां सिद्धिः कथं भवति इति अवगच्छेत्।
- सुदिव्-इति कथम् औ, उ चेति आदेशौ भवतः इति बोद्धुं पारयेत्।
- संख्यावाचकचतुर्-शब्दस्य त्रिषु अपि लिङ्गेषु रूपाणि कथं सिद्ध्यन्ति इति जानीयात्।
- किम्-शब्दरूपसाधनप्रक्रियां ज्ञातुं पारयेत्।

### लिह्-शब्दः

लिट्-शब्दस्य अर्थः आस्वादनकर्ता। लिह्-इति शब्दात् क्विप्प्रत्यये लिह् इति शब्दः निष्पद्यते। अयं च शब्दः कृदन्तः। कृदन्तत्वात् च कृत्तद्धितसमासाश्च इति सूत्रेण एतस्य प्रातिपदिकसंज्ञा भवति।

हलन्तशब्दविषये एतद् वक्तव्यं यद् प्रायः अजादौ विभक्तौ परतः प्रक्रियाकार्यं तथा न दृश्यते। परन्तु हलादौ विभक्तौ परतः प्रक्रियाकार्याणि दृश्यन्ते।

## [ १५.१] हो ढः। (८.२.३१)

**सूत्रार्थः** – हस्य ढः स्यात् झलि पदान्ते च।

**सूत्रव्याख्या** - अनेन सूत्रेण ढत्वं विधीयते। अतः विधिसूत्रम् इदम्। हः, ढः चेति पदद्वयमत्र। अस्मिन् सूत्रे झलो झलि इति सूत्रात् झलि इति पदमनुवर्तते। पदस्य इति सम्पूर्णं सूत्रमधिक्रियते। स्कोः संयोगाद्योरन्ते च इति सूत्रात् अन्ते इति पदमनुवर्तते। झलि इति सप्तम्येकवचनान्तं पदम्। पदस्य इति षष्ठ्येकवचनान्तं पदम्। अन्ते इति सप्तम्येकवचनान्तं पदम्। हः इति षष्ठ्येकवचनान्तं पदम्। ढः इति प्रथमैकवचनान्तं पदम्। तेन सूत्रस्य अर्थः भवति हस्य स्थाने ढः भवति झलि पदान्ते च परे सति इति।

**उदाहरणम्** – लिट्, लिड्भ्याम् चेत्यादीनि इह उदाहरणानि।

**सूत्रार्थसमन्वयः** – लिह्शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे लिह् स् इति स्थिते अपृक्त एकाल्प्रत्ययः इति सूत्रेण सकारस्य अपृक्तसंज्ञायां हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण हलन्तात् परम् अपृक्तसंज्ञकस्य सकारस्य लोपे लिह् इति भवति। ततः प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रसहकारेण सुप्तिङन्तं पदम् इति सूत्रेण लिह्-इत्यस्य पदसंज्ञा भवति। ततः पदान्ते विद्यमानस्य हकारस्य प्रस्तुतसूत्रेण ढकारे लिढ् इति जाते झलां जशोऽन्ते इति सूत्रेण ढकारस्य स्थाने डकारः भवति। ततः वाऽवसाने इति सूत्रेण डकारस्य विकल्पेन टकारे लिट्, लिड् चेति रूपद्वयं सिद्धं भवति।

लिह्शब्दात् प्रथमाद्विवचनविवक्षायाम् औप्रत्यये वर्णमेलने लिहौ इति रूपम्।

लिह्शब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे लिह् अस् इति स्थिते वर्णमेलने लिहः इति रूपं सिद्धम्।

लिह्शब्दात् द्वितीयैकवचनविवक्षायाम् अम्प्रत्यये वर्णमेलने लिहम् इति रूपम्।

लिह्शब्दात् द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे लिह् अस् इति स्थिते वर्णमेलने लिहः इति रूपं सिद्धम्।

लिह्शब्दात् तृतीयैकवचनविवक्षायां टाप्रत्यये अनुबन्धलोपे लिह् आ इति स्थिते वर्णमेलने लिहा इति रूपम्।

लिह्शब्दात् तृतीयाद्विवचनविवक्षायां भ्याम्प्रत्यये लिह् भ्याम् इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण लिह्-इत्यस्य पदसंज्ञा भवति। ततः हकारस्य पदान्ते विद्यमानत्वात् हो ढः इति सूत्रेण ढकारे, झलां जशोऽन्ते इति सूत्रेण ढकारस्य डकारे वर्णमेलने लिड्भ्याम् इति रूपं सिद्धम्।

लिह्शब्दात् तृतीयाबहुवचनविवक्षायां भिस्प्रत्यये लिह् भिस् इति स्थिते पूर्ववत् लिह्-इत्यस्य पदसंज्ञायां, पदान्ते विद्यमानस्य हकारस्य ढकारे, ढकारस्य च झलां जशोऽन्ते इति सूत्रेण डकारे वर्णमेलने लिड्भिः इति रूपम्।



लिह्शब्दात् चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये अनुबन्धलोपे लिह् ए इति स्थिते वर्णमेलने लिहे इति रूपम्।

लिह्शब्दात् चतुर्थीबहुवचनविवक्षायां भ्यस्प्रत्यये पूर्ववत् लिह्-इत्यस्य पदसंज्ञा भवति। ततः पदान्ते विद्यमानस्य हकारस्य हो ढः इति सूत्रेण ढकारे, ढकारस्य च झलां जशोऽन्ते इति सूत्रेण डकारे वर्णमेलने लिड्भ्याम् इति रूपम्।

लिह्शब्दात् सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये अनुबन्धलोपे लिह् सु इति स्थितिः भवति। ततः स्वादिष्वसर्वनामस्थाने इति सूत्रेण लिह्-इत्यस्य पदसंज्ञा भवति। ततः हो ढः इति सूत्रेण पदान्ते विद्यमानस्य हकारस्य ढकारे लिढ् सु इति जाते झलां जशोऽन्ते इति सूत्रेण ढकारस्य जश्त्वे (झलां जशोऽन्ते इति सूत्रेण) डकारे लिड् सु इति भवति। अस्याम् अवस्थायां खरि च, डः सि धुट् चेति सूत्रद्वयं प्राप्नोति। परन्तु खरि च (८.४.५५) इति सूत्रं पूर्वत्रासिद्धम् इति सूत्रबलात् डः सि धुट् (८.३.२९) इति सूत्रदृष्ट्या असिद्धं भवति। अतः डः सि धुट् इति सूत्रेण डकारात् परस्य सस्य विकल्पेन धुटि, धुटः टित्त्वात् आद्यन्तौ टकितौ इति सूत्रेण सकारस्य आद्यवयवरूपेण धुडागमः भवति। धुटः अनुबन्धलोपे ध् इति अवशिष्यते। स च धुडागमः विकल्पेन भवति। अतः पक्षे लिड् ध् सु इति भवति। अपरस्मिन् पक्षे यत्र धुडागमो न भवति तत्र लिड् सु इति भवति। प्रथमपक्षे ष्टुना ष्टुः इति सूत्रेण यथाक्रमं धकारस्य डकारः, द्वितीये पक्षे च अनेनैव सूत्रेण सकारस्य षत्वं प्राप्नोति। तस्य च ष्टुना ष्टुः इति सूत्रस्य न पदान्ताट्टोरनाम् इति सूत्रेण निषेधः भवति। ततः खरि च इति सूत्रेण प्रथमपक्षे धकारस्य तकारः भवति। तस्मिन् च तकारे च परे खरि च इति सूत्रेण एव डकारस्य टकारे लिट्त्सु इति रूपम्। द्वितीये पक्षे खरि च इति सूत्रेण डकारस्य टकारे लिट्सु इति रूपं सिद्धं भवति।

## दुह्-शब्दः

दुह्धातोः कर्तरि अर्थे क्विप्प्रत्यये दुह् इति रूपम्। अतः दुह्-इति शब्दस्य अर्थः दोहनकर्ता। अयं च शब्दः कृदन्तः। कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञा भवति। दुह्-इति शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे दुह् स् इति स्थिते अपृक्त एकाल्प्रत्ययः इति सूत्रेण सकारस्य अपृक्तसंज्ञायां हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण हलन्तात् परम् अपृक्तसंज्ञकस्य सकारस्य लोपे दुह् इति भवति। अत्र हकारः पदान्ते वर्तते। अतः हो ढः इति सूत्रं प्राप्नोति। ततः तं प्रबाध्य अग्रिमं सूत्रं प्रवर्तते -

## [ १५.२]    दादेर्धातोर्घः। (८.२.३२)

**सूत्रार्थः** – झलि पदान्ते च उपदेशे दादेः धातोः हस्य घः।

**सूत्रव्याख्या** -अनेन सूत्रेण घत्वं विधीयते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् त्रीणि पदानि सन्ति। दादेः, धातोः, घः इति सूत्रगतपदच्छेदः। झलो झलि इति सूत्रात् झलि इति पदमनुवर्तते। पदस्य इति सम्पूर्णं सूत्रमधिक्रियते। स्कोः संयोगाद्योरन्ते च इति सूत्रात् अन्ते इति पदमनुवर्तते। झलि इति सप्तम्येकवचनान्तं पदम्। पदस्य इति षष्ठ्येकवचनान्तं पदम्। अन्ते इति सप्तम्येकवचनान्तं पदम्। दादेः, धातोः चेति षष्ठ्येकवचनान्तं पदद्वयम्। घः इति प्रथमैकवचनान्तं पदम्। दः आदौ आदिर्वा यस्य स

दादिस्तस्य दादेः इति बहुव्रीहिसमासः। तेन सूत्रस्य अर्थः एवम् आगच्छति - उपदेशे यः दकारादिः धातुः, तस्य धातोः हकारस्य स्थाने घकारो भवति झलि पदान्ते च इति। सूत्रे दादिः इत्यनेन उपदेशे यः दादिः इत्यर्थः एव स्वीक्रियते। पतञ्जलिविरचिते महाभाष्ये तथा व्याख्यानम् अवलोक्यते।

**बाध्यबाधकभावः** – हो ढः इति सूत्रस्य बाधकमिदं सूत्रम्।

**उदाहरणम्** – धुक् इत्यादीनि इह उदाहरणानि।

**सूत्रार्थसमन्वयः** -दुह् स् इति अवस्थायां हो ढः इति सूत्रेण हकारस्य ढत्वं प्राप्नोति। परन्तु दुह्धातुः उपदेशे दकारादिः। किञ्च, हकारः पदान्ते अस्ति। अतः तं प्रबाध्य प्रस्तुतसूत्रेण हकारस्य घकारे दुघ् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १५.३] एकाचो बशो भष् झषन्तस्य स्ध्वोः। (८.२.३७)

**सूत्रार्थः** – धात्ववयवस्य एकाचः झषन्तस्य बशो भष् से ध्वे पदान्ते च।

**सूत्रव्याख्या** – अनेन सूत्रेण बशः स्थाने भष्-भावः विधीयते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् पञ्च पदानि। एकाचः, बशः, भष्, झषन्तस्य, स्ध्वोः इति सूत्रगतपदच्छेदः। दादेर्धातोर्घः इति सूत्रात् धातोः इति पदमनुवर्तते। पदस्य इति सम्पूर्णं सूत्रमधिक्रियते। स्कोः संयोगाद्योरन्ते च इति सूत्रात् अन्ते इति पदमनुवर्तते। झलि इति सप्तम्येकवचनान्तं पदम्। पदस्य इति षष्ठ्येकवचनान्तं पदम्। अन्ते इति सप्तम्येकवचनान्तं पदम्। दादेः, धातोः चेति षष्ठ्येकवचनान्तं पदद्वयम्। घः इति प्रथमैकवचनान्तं पदम्। एकः अच् यस्य इति विग्रहे बहुव्रीहिसमासे एकाच् इति रूपं, तस्य एकाचः। झष् अन्ते यस्य सः झषन्तः इति बहुव्रीहिसमासः, तस्य झषन्तस्य। स् च ध्व् च इति विग्रहे इतरेतरद्वन्द्वसमासे स्ध्वौ इति रूपं, तयोः स्ध्वोः इति।

झष् इत्यनेन झ्, भ्, घ्, ढ्, ध् चेति वर्णानां ग्रहणं, बश् इत्यनेन ब्, ग्, ड्, द् चेति, भष् इत्यनेन भ्, घ्, ढ्, ध् चेति वर्णानां ग्रहणं भवति। अर्थात् यथासंख्यमनुदेशः समानाम् इति परिभाषया ब् इत्यस्य स्थाने भ्, ग् इत्यस्य स्थाने घ्, ड् इत्यस्य स्थाने ढ्, द् इत्यस्य च स्थाने ध् इति आदेशो भवति। बश इति स्थानषष्ठी। एकाच इति अवयवषष्ठी। झषन्तस्य इति शब्दस्य विशेष्यं भवति शब्दस्य इति पदम्। सूत्रे झषन्तस्य इत्यत्र अन्तग्रहणं स्पष्टार्थम्। सूत्रस्य सरलार्थः तावत् धातोरवयवः यः एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च इति।

**सूत्रार्थसमन्वयः** -दुघ् इति यद्यपि धातुः तथापि व्यपदेशिवद्भावेन धातोरवयवः भवति। किञ्च अयम् एकाच् झषन्तः अपि भवति। अतः अत्र बशः दकारस्य स्थाने भष्भावेन ध् इति आदेशो भवति। तेन धुघ् इति भवति। ततः झलां जशोऽन्ते इति सूत्रेण घकारस्य स्थाने जश्त्वे गकारे धुग् इति रूपं निष्पन्नं भवति। ततः वाऽवसाने इति सूत्रेण गकारस्य विकल्पेन चर्-भावे कृते एकस्मिन् पक्षे धुक् इति रूपं भवति, यस्मिन् च पक्षे चर्-भावो न भवति तस्मिन् पक्षे धुग् इत्येव रूपम्।

दुह् भ्याम् इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण दुह् इत्यस्य पदसंज्ञा भवति। ततः पदान्ते विद्यमानस्य हकारस्य दादेर्धातोर्घः इति सूत्रेण घकारे दुघ् भ्याम् इति स्थितिः आगच्छति। ततः

एकाचो बशो भष् झषन्तस्य स्ध्वोः इति सूत्रेण दकारस्य धकारे धुघ् भ्याम् इति भवति। ततः झलां जशोऽन्ते इति सूत्रेण घकारस्य जश्-भावे कृते गकारे वर्णमेलने धुग्भ्याम् इति रूपम्।

दुह् इति शब्दात् सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये अनुबन्धलोपे दुह् सु इति स्थिते हकारस्य घकारे, दकारस्य भष्-भावे कृते धकारे धुघ् सु इति भवति। ततः झलां जशोऽन्ते इति सूत्रेण घकारस्य जश्-भावे गकारे धुग् सु इति भवति। ततः खरि च इति सूत्रेण गकारस्य चर्-भावे ककारे धुक् सु इति भवति। ततः आदेशप्रत्यययोः इति सूत्रेण सकारस्य षकारे वर्णमेलने (धुक् षु) धुक्षु इति रूपं सिद्धम्।

## पाठगतप्रश्नाः-१

१. लिह् स् इत्यत्र सकारस्य केन सूत्रेण लोपः भवति?

२. लिह्-शब्दस्य सप्तमीबहुवचने कति रूपाणि? कानि च तानि?

३. दुह् इत्यत्र हो ढः इति सूत्रं कथं न प्रवर्तते?

४. धुक् इत्यत्र दकारस्य स्थाने धकारः केन सूत्रेण?

५. एकाचो बशो भष् झषन्तस्य स्ध्वोः इति सूत्रस्य अर्थं लिखत।

६. एकाचो बशो भष् इति सूत्रे कति प्रत्याहाराः सन्ति?

## विश्ववाह्-शब्दः

विश्ववाह् इति शब्दः ण्विप्रत्ययान्तः। शब्दस्यास्य अर्थः जगत्पालकः भगवान् वा। ण्विप्रत्ययश्च कृदन्तः। अतः कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण अस्य शब्दस्य प्रातिपदिकसंज्ञा भवति। विश्ववाह्शब्दस्य सर्वनामस्थानप्रत्यययोगे लिह्शब्दवद् रूपाणि भवन्ति। भसंज्ञकप्रत्ययस्थले वैशिष्ट्यम् अवलोक्यते।

तथाहि विश्ववाह्-शब्दात् शस्प्रत्यये अनुबन्धलोपे विश्ववाह् अस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

## [ १५.४] इग्यणः सम्प्रसारणम्। (१.१.४५)

**सूत्रार्थः** — यणः स्थाने प्रयुज्यमानः य इक् स सम्प्रसारणसंज्ञः स्यात्।

**सूत्रव्याख्या** - अनेन सूत्रेण सम्प्रसारणसंज्ञा विधीयते। अतः संज्ञासूत्रम् इदम्। सूत्रे इक्, यणः, सम्प्रसारणम् चेति त्रीणि पदानि। इक् इति प्रथमैकवचनान्तं पदम्। यणः इति षष्ठ्येकवचनान्तं पदम्। सम्प्रसारणम् इति प्रथमैकवचनान्तं पदम्। यणः इत्यत्र अनुयोगिपदस्य अश्रवणात् षष्ठी स्थानेयोगा इति सूत्रेण स्थानपदार्थलाभः। सूत्रे यण् इत्यनेन य्, व्, र्, ल् चेत्येतेषाम्, इक् इत्यनेन इ, उ, ऋ, ऌ चेति चतुर्णां ग्रहणं भवति।

तेन यथासंख्यपरिभाषया य् इत्यस्य स्थाने यः इकारः, व् इत्यस्य स्थाने यः उकारः, र् इत्यस्य स्थाने यः ऋकारः, ल् इत्यस्य स्थाने यः ऌ तस्य सम्प्रसारणसंज्ञा भवति। यणः इत्यत्र षष्ठीश्रवणात् षष्ठी स्थानेयोगा इति सूत्रेण स्थानपदार्थलाभः। सूत्रस्य सरलार्थः तावत् यणः स्थाने यः इक् तस्य सम्प्रसारणसंज्ञा भवति इति।

एवं सम्प्रसारणसंज्ञाकरणात् अनन्तरम् अग्रिमं सूत्रं प्रवर्तते –

## [ १५.५] वाह ऊठ्। (६.४.१३२)

**सूत्रार्थः** – भस्य वाहः सम्प्रसारणम् ऊठ्।

**सूत्रव्याख्या** - अनेन सूत्रेण ऊठ् विधीयते। अतः विधिसूत्रम् इदम्। वाहः, ऊठ् चेति पदद्वयम् अत्र। भस्य इति सम्पूर्णं सूत्रम् अधिकृतम्। वसोः सम्प्रसारणम् इति सूत्रात् सम्प्रसारणम् इति पदम् अनुवर्तते। भस्य इति षष्ठ्येकवचनान्तं पदम्। वाह इत्यपि षष्ठ्येकवचनान्तं पदम्। सम्प्रसारणम्, ऊठ् चेति पदद्वयं प्रथमैकवचनान्तम्। ऊठ् इत्यत्र ठकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति। तेन ऊकारमात्रम् अवशिष्यते। सूत्रस्य अर्थः तावत् - भसंज्ञकस्य वाह्-इति शब्दस्य स्थाने सम्प्रसारणसंज्ञकः ऊठ् इति आदेशः भवति इति। अयं च आदेशः वाह्-इत्यत्र यः वकारः, तस्यैव स्थाने भवति इति।

**सूत्रार्थसमन्वयः** – विश्ववाह्शब्दस्य द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे विश्ववाह् अस् इति स्थितिः अस्ति। ततः यचि भम् इति सूत्रेण वाह्-इत्यंशस्य भसंज्ञा भवति। तदनन्तरं वाह्-शब्दघटकस्य वकारस्य स्थाने प्रस्तुतसूत्रेण सम्प्रसारणसंज्ञकः ऊठ् इति आदेशो भवति। तेन विश्व ऊ आह् अस् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १५.६] सम्प्रसारणाच्च (६.१.१०८)

**सूत्रार्थः** – सम्प्रसारणात् अचि पूर्वरूपम् एकादेशः।

**सूत्रव्याख्या** – अनेन सूत्रेण पूर्वरूपैकादेशो विधीयते। अतः विधिसूत्रम् इदम्। सम्प्रसारणात्, च चेति पदद्वयम् अत्र। सूत्रे इको यणचि इति सूत्रात् अचि इति पदमनुवर्तते। एकः पूर्वपरयोः इति सम्पूर्णं सूत्रम् अनुवर्तते। अमि पूर्वः इति सूत्रात् पूर्वः इति पदमनुवर्तते। सम्प्रसारणात् इति पञ्चम्येकवचनान्तं पदम्। च इति अव्ययपदम्। अचि इति सप्तम्येकवचनान्तं पदम्। एकः इति प्रथमैकवचनान्तं पदम्। पूर्वपरयोः इति षष्ठ्येकवचनान्तं पदम्। पूर्वः इति प्रथमैकवचनान्तं पदम्। पूर्वश्च परश्च इति विग्रहे इतरेतरद्वन्द्वसमासे पूर्वपरौ इति रूपम्। तयोः पूर्वपरयोः इति। सूत्रस्य अर्थः तावत् सम्प्रसारणात् अचि परे पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशः भवति इति।

**सूत्रार्थसमन्वयः** – विश्व ऊ आह् अस् इति अवस्थायां सम्प्रसारणसंज्ञकात् ऊ-इत्यस्मात् परम् आकाररूपे अचि परे प्रस्तुतसूत्रेण ऊकार-आकारयोः स्थाने पूर्वरूपैकादेशे ऊकारे विश्व ऊह् अस् इति भवति। ततः एत्येधत्यूठ्सु इति सूत्रेण वकारोत्तरस्य अकारस्य ऊठः ऊकारस्य च स्थाने वृद्धौ एकादेशे औकारे विश्वौह् अस् इति रूपं भवति। ततः वर्णमेलने विश्वौहस् इति जाते सकारस्य रुत्वे विसर्गे च कृते विश्वौहः इति रूपं सिद्धम्।



एवं सर्वनामस्थानसंज्ञकेषु प्रत्ययेषु परेषु सर्वत्रैव इयमेव प्रक्रिया साधारणी। सप्तमीबहुवचने तु लिह्-शब्दवत् प्रक्रिया ज्ञातव्या।

## पाठगतप्रश्नाः-२

७. सम्प्रसारणसंज्ञाविधायकं सूत्रं किम्? तस्य अर्थं लिखत।

८. सम्प्रसारणसंज्ञायाः एकं कार्यं लिखत।

९. सम्प्रसारणात् अचि परे पूर्वरूपैकादेशः भवति, पररूपैकादेशः वा?

१०. विश्ववाह्-शब्दस्य जसि, शसि च किं किं रूपं भवति?

११. वाह ऊठ् इति सूत्रस्य अर्थं लिखत।

१२. विश्व ऊ ह् अस् इत्यत्र अकार-ऊकारयोः स्थाने गुणः भवति, वृद्धिः वा? कथम्?

---

## अनडुह्-शब्दः

अनः शकटं वहति इति अनड्वान्। अर्थात् अनडुह्-शब्दस्य अर्थः शकटवहनकर्ता। अनस् इत्युपपदपूर्वकात् वह्धातोः अनसो डश्च इति सूत्रेण क्विप्प्रत्यये, सस्य स्थाने डादेशे, वचिस्वपियजादीनां किति इति सूत्रेण वकारस्य सम्प्रसारणे उकारे, पूर्वरूपे अनडुह् इति शब्दः निष्पद्यते।

अनडुह्-शब्दात् सुप्रत्यये अनुबन्धलोपे अनडुह् स् इति स्थिते अग्रिमं सूत्रम् आगच्छति –

## [ १५.७]  चतुरनडुहोरामुदात्तः (७.१.९८)

**सूत्रार्थः** – चतुरनडुहोः आम् स्यात् सर्वनामस्थाने परे।

**सूत्रव्याख्या** –सूत्रेण अनेन आम् इति आगमः विधीयते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे पदत्रयं वर्तते। चतुरनडुहोः आम् उदात्तः इति सूत्रगतपदच्छेदः। चतुरनडुहोः इति षष्ठीद्विवचनान्तं पदम्। आम् इति प्रथमैकवचनान्तं पदम्। उदात्तः इति प्रथमैकवचनान्तं पदम्। इतोऽत्सर्वनामस्थाने इति सूत्रात् सर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम् अत्र अनुवर्तते। तेन सूत्रस्य सरलार्थः भवति चतुर्-शब्दस्य, अनडुह्-शब्दस्य च स्थाने आम् इति आगमः भवति सर्वनामस्थानसंज्ञके प्रत्यये परे इति।

अयम् आम् इति आगमः मित् भवति। अत्र मकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति, तस्य लोपः इति सूत्रेण लोपश्च भवति। मित्त्वात् मिदचोऽन्त्यात्परः इति परिभाषया अयम् आगमः अन्त्यात् अचः परं भवति। अयञ्च आम् इति आगमः उदात्तः भवति। तस्य फलं स्वरप्रकरणे वर्तते। अधिकजिज्ञासवः सिद्धान्तकौमुदीग्रन्थं पश्यन्तु।

**सूत्रार्थसमन्वयः** – अनडुह् स् इति स्थितिः। अत्र सर्वनामस्थानसंज्ञकः प्रत्ययः परम् अस्ति। अतः तस्मिन् परे अनडुह्-शब्दस्य अन्त्यात् अचः परं प्रस्तुतेन सूत्रेण आम् इति आगमे अनुबन्धलोपे

अनडु आ ह् स् इति भवति। ततः इको यणचि इति सूत्रेण उकारस्य स्थाने यणि वकारे अनड् व् आ ह् स् इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १५.८] सावनडुहः (७.१.८२)

**सूत्रार्थः** – अनडुह्-शब्दस्य नुम् स्यात् सौ परे।

**सूत्रव्याख्या** –सूत्रेण अनेन नुम् इति आगमः विधीयते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। सौ अनडुहः इति सूत्रगतपदच्छेदः। सौ इति सप्तम्येकवचनान्तं पदम्। अनडुहः इति षष्ठ्येकवचनान्तं पदम्। आच्छीनद्योर्नुम् इति सूत्रात् नुम् इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। तेन सूत्रस्य सरलार्थः भवति अनडुह्-शब्दस्य स्थाने नुम् इति आगमः भवति सुप्रत्यये परे इति।

अयम् नुम् इति आगमः मित् भवति। नुमि नकारमात्रम् अवशिष्यते। मित्त्वात् मिदचोऽन्त्यात्परः इति परिभाषया अयम् आगमः अन्त्यात् अचः परं भवति।

**सूत्रार्थसमन्वयः** – अनड्वाह् स् इति स्थितिः। अत्र सुप्रत्ययः परम् अस्ति। अतः तस्मिन् परे सति प्रस्तुतसूत्रेण अन्त्यात् अचः आकारात् परं नुमागमे अनुबन्धलोपे अनड्वा न् ह् स् इति भवति। ततः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारस्य लोपे अनड्वान् ह् इति स्थितिः आगच्छति। ततः संयोगान्तस्य लोपः इति सूत्रेण संयोगान्ते विद्यमानस्य हकारस्य लोपे वर्णमेलने अनड्वान् इति रूपं सिद्धम्। अत्र संयोगान्तलोपः असिद्धः। तस्मात् न लोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपः न भवति।

अनुडुह्-शब्दात् सम्बोधनैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे अनडुह् स् इति स्थिते चतुरनडुहोरामुदात्तः इति सूत्रेण आमागमे प्राप्ते तस्य अपवादरूपेण अग्रिमं सूत्रम् आगच्छति -

## [ १५.९] अम् सम्बुद्धौ (७.१.९९)

**सूत्रार्थः** – चतुरनडुहोः अम् स्यात् सम्बुद्धौ परे।

**सूत्रव्याख्या** –अम् इति आगमविधानात् सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे अम् इति प्रथमैकवचनान्तं, सम्बुद्धौ इति सप्तम्येकवचनान्तं पदद्वयं राजते। अस्मिन् सूत्रे चतुरनडुहोरामुदात्तः इति सूत्रात् चतुरनडुहोः इति षष्ठीद्विवचनान्तं पदम् अनुवृत्तं भवति। तेन सूत्रस्य सरलार्थः भवति चतुर्-शब्दस्य अनडुह्शब्दस्य च स्थाने अम् इति आगमः भवति सम्बुद्धिसंज्ञके सुप्रत्यये परे इति।

अयं च अमागमः मित्त्वात् मिदचोऽन्त्यात्परः इति सूत्रेण अन्त्यात् अचः परं भवति।

**सूत्रार्थसमन्वयः** – अनडुह् स् इति स्थितिः। अत्र स् इति सम्बोधनैकवचने अस्ति। तेन एकवचनं सम्बुद्धिः इति सूत्रेण सुप्रत्ययः सम्बुद्धिसंज्ञकः। अतः तस्मिन् सम्बुद्धिसंज्ञके प्रत्यये परे सति प्रस्तुतसूत्रेण अनडुह्-शब्दस्य अन्त्यात् अचः परम् अमागमे अनुबन्धलोपे अनडु अ ह् स् इति स्थितिः आयाति। ततः अकाररूपे अचि परे उकारस्य स्थाने इको यणचि इति सूत्रेण यणादेशे वकारे अनड् व् अ ह् स् इति जाते सावनडुहः इति सूत्रेण अकारात् परं नुमागमे अनुबन्धलोपे अनड् व् अ न् ह् स् इति



भवति। ततः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारलोपे, संयोगान्तस्य लोपः इत सूत्रेण हकारस्य लोपे वर्णसम्मेलने अनड्वन् इति रूपं निष्पद्यते।

अनडुह् भ्याम् इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण अनडुह्-शब्दस्य पदसंज्ञा भवति। ततः अग्रिमं सूत्रम् आयाति-

## [ १५.१०] वसुस्रंसुध्वंस्वनडुहां दः (८.२.७२)

**सूत्रार्थः** – सान्तवस्वन्तस्य स्रंसादेः च दः स्यात् पदान्ते।

**सूत्रव्याख्या** –सूत्रेण अनेन द् इति आदेशः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। वसुस्रंसुध्वंस्वनडुहाम् इति षष्ठीबहुवचनान्तं पदम्। दः इति आदेशबोधकं प्रथमैकवचनान्तं पदम्। ससजुषो रुः इति सूत्रात् सः इति षष्ठ्येकवचनान्तः पदांशः अनुवर्तते। पदस्य इति अधिकृतं वचनविपरिणामेन पदानाम् इति भवति। वसुश्च स्रंसुश्च ध्वंसुश्च अनड्वान् च इति विग्रहे इतरेतरद्वन्द्वसमासे वसुस्रंसुध्वंस्वनडुहः इति रूपम्। तेषां वसुस्रंसुध्वंस्वनडुहाम् इति। अनुवृत्तं स इति षष्ठ्येकवचनान्तं पदं वसु इत्यनेन सहैव अन्वेति, स्रंसु इत्यत्र ध्वंसु इत्यत्र च दोषाभावात्, अनडुह् इत्यत्र असम्भवात्। तेन तदन्तविधौ सान्त इत्यर्थः लभ्यते। वसु इति प्रत्ययः शतृप्रत्ययस्थाने विधीयते। तेन स्थानिवद्भावेन वसु इत्यपि प्रत्ययसंज्ञकः। अतः प्रत्ययग्रहणे तदन्तग्रहणम् इति नियमेन तदन्तविधौ वस्वन्तस्य इति लभ्यते। स्रंसु, ध्वंसु, अनडुह् चेति त्रयमपि पदानाम् इत्यत्र विशेषणत्वेन अन्वेति। विशेषणत्वेन पुनः तदन्तविधिः भवति। तेन सूत्रस्य सरलार्थः भवति - सान्तवसुप्रत्ययान्तस्य, स्रंसुध्वंस्वनडुहान्तां पदानां स्थाने द इति आदेशः भवति इति। द इत्यत्र अकार उच्चारणार्थः। अयं च आदेशः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य वर्णस्य स्थाने एव भवति।

**सूत्रार्थसमन्वयः** – अनडुह् भ्याम् इति स्थितिः। अत्र व्यपदेशिवद्भावेन अनडुह् इति अनडुहान्तं पदम् अपि भवति। तेन प्रस्तुतसूत्रेण हकारस्य स्थाने द् इति आदेशे वर्णमेलने अनडुद्भ्याम् इति रूपं सिद्धम्।

## सुदिव्-शब्दः

दिव्-शब्दः नित्यस्त्रीलिङ्गः। तस्य अर्थः आकाशं स्वर्गो वा। सु शोभना द्यौः आकाशं स्वर्गो वा यस्य इति विग्रहे बहुव्रीहिसमासे सुदिव् इति शब्दः निष्पद्यते। तेन अयं शब्दः पुंलिङ्गको भवति। समासत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण सुदिव्-शब्दस्य प्रातिपदिकसंज्ञा भवति। ततः प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे सुदिव् स् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारलोपे प्राप्ते अग्रिमं सूत्रं प्रवर्तते –

## [ १५.११] दिव औत्। (७.१.८४)

**सूत्रार्थः** – दिव् इति प्रातिपदिकस्य औत् स्यात् सौ परे।

**सूत्रव्याख्या** – अनेन सूत्रेण औकार आदिश्यते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे दिव, औत् चेति पदद्वयं वर्तते। सावनडुहः इति सूत्रात् सौ इति पदमनुवर्तते। दिव इति षष्ठ्येकवचनान्तं पदम्।

औत् इति प्रथमैकवचनान्तं पदम्। सौ इति सप्तम्येकवचनान्तं पदम्। सूत्रार्थो भवति सुप्रत्यये परे सति दिव् इति प्रातिपदिकस्य स्थाने औत् इति आदेशः भवति इति।

**अवधेयः विषयः** – अस्मिन् सूत्रे दिव् इति अव्युत्पन्नं प्रातिपदिकं स्वीक्रियते। औत् इत्यत्र तकारः उच्चारणार्थः। यदि तकारस्यापि आदेशः स्यात् तदा अनेकाल्शित् सर्वस्य इति परिभाषया सम्पूर्णस्य दिव् इति शब्दस्य स्थाने एव आदेशः स्यात्। तत्तु अनिष्टम्।

सूत्रमिदम् अङ्गाधिकारे पठितम्। अतः दिव् इति प्रातिपदिकस्य स्थाने यथा आदेशः भवति तथैव दिव्-शब्दान्तस्य स्थाने अपि भवति, पदाङ्गाधिकारे तस्य च तदन्तस्य च इति परिभाषाबलात्। अयं च आदेशः अलोऽन्त्यस्य इति परिभाषया दिवः वकारस्य स्थाने एव भवति।

**सूत्रार्थसमन्वयः** – सुदिव् स् इति दशायां हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारलोपे प्राप्ते तं प्रबाध्य प्रस्तुतसूत्रेण वकारस्य स्थाने औ-इति आदेशे सुदिऔ स् इति भवति। ततः इको यणचि इति सूत्रेण इकारस्य औकाररूपे अचि परे यणादेशे सुद् य् औ स् इति जाते वर्णमेलने सकारस्य रुत्वे विसर्गे च कृते सुद्यौः इति रूपं सिद्धम्।

**विचारः** - अत्र सुदिव् स् इति स्थिते हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारलोपः, दिव औत् इति च सूत्रेण वकारस्य लोपः युगपत् प्राप्नोति। परन्तु नित्यत्वात् आदौ दिव औत् इति सूत्रमेव प्रवर्तते। नियमः अस्ति – कृताकृतप्रसङ्गी यो विधिः सः नित्यः। सुदिव् स् इत्यत्र सकारस्य लोपे कृते अकृते वा दिव औत् इति सूत्रं प्रवर्तते। परन्तु दिव औत् इति सूत्रेण वकारस्य स्थाने औकारादेशे कृते हलन्तत्वाभावात् हल्ङ्याब्भ्यो दीर्घात्... इति सूत्रेण सकारलोपः न प्राप्नोति। अतः दिव औत् इति विधिः नित्यविधिः। हल्ङ्याब्भ्यो इति अनित्यविधिः। अतः आदौ दिव औत् इति सूत्रेण वकारस्य स्थाने औ इति आदेशः एव भवति।

सुदिव् भ्याम् इति स्थिते अग्रिमं सूत्रं प्रवर्तते –

## [ १५.१२] दिव उत् (६.१.१३१)

**सूत्रार्थः** – दिवः अन्तादेशः उकारः स्यात् पदान्ते।

**सूत्रव्याख्या** – अनेन सूत्रेण उकार आदिश्यते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे दिवः, उत् चेति पदद्वयम्। एङः पदान्तादति इति सूत्रात् पदान्तात् इति पदस्य विभक्तिविपरिणामं कृत्वा पदान्ते इति पदम् अनुवर्तते। दिवः इति षष्ठ्येकवचनान्तं पदम्। उत् इति प्रथमैकवचनान्तं पदम्। पदान्ते इति सप्तम्येकवचनान्तं पदम्। पदस्य अन्तः पदान्तः इति षष्ठीतत्पुरुषः समासः। तस्मिन् पदान्ते इति। सूत्रस्य अस्य सरलार्थः तावत् पदान्ते स्थितस्य दिव्-शब्दस्य स्थाने उत् इति आदेशः भवति इति।

उत् इत्यत्र तकारः उच्चारणार्थः। अतः तस्य इत्संज्ञा न भवति। अयं च उ-इत्यादेशः अलोऽन्त्यस्य इति परिभाषया दिवः अन्त्यस्य अलः वकारस्य स्थाने भवति।

**सूत्रार्थसमन्वयः**– सुदिव् भ्याम् इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण सुदिव् इत्यस्य पदसंज्ञा भवति। ततः पदान्ते स्थितस्य वकारस्य स्थाने प्रस्तुतसूत्रेण उकाररूपे आदेशे सुदि उ भ्याम्

इति भवति। ततः इको यणचि इति सूत्रेण उकाररूपे अचि परे इकारस्य स्थाने यणादेशे सुद् य् उ भ्याम् इति जाते वर्णमेलने सुद्युभ्याम् इति रूपम्।

एवमेव भिस्प्रत्ययस्थले, भ्यस्प्रत्ययस्थले, सप्तम्येकवचने सुप्प्रत्ययस्थले एतादृशमेव कार्यं भवति।

## पाठगतप्रश्नाः-३

१३. सावनडुहः इति सूत्रेण किं विधीयते?

१४. अनडुह् भिस् इत्यत्र हकारस्य स्थाने केन सूत्रेण किम् आदिश्यते।

१५. दिव औत् इति सूत्रस्य किं कार्यम्? एकम् उदाहरणं लिखत।

१६. दिव औत् इति सूत्रे तकारस्य किं प्रयोजनम्?

१७. दिव औत् इति सूत्रं कस्मिन् अधिकारे पठ्यते?

१८. सुदिव् स् इत्यत्र हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रं कथं न प्रवर्तते?

१९. दिव उत् इति सूत्रस्यार्थं लिखत।

२०. उत् इति अन्तादेशः दिवः सम्पूर्णस्य स्थाने भवति, वकारस्य स्थाने वा?

२१. सुदिव् भ्याम् इत्यत्र सुदिव् इत्यस्य पदसंज्ञा केन सूत्रेण विधीयते?

## चतुर्-शब्दः

अयं शब्दः नित्यबहुवचनान्तः। अर्थात् एकवचने, द्विवचने च अस्य रूपं न प्राप्यते। किञ्च, त्रिषु अपि लिङ्गेषु अस्य शब्दस्य व्यवहारः भवति।

पुंलिङ्गे चतुर्-शब्दः

चतुर्-शब्दात् प्रथमाबहुवचनविवक्षायां जसि अनुबन्धलोपे चतुर् अस् इति स्थिते चतुरनडुहोरामुदात्तः इति सूत्रेण आम् इति आगमः भवति। आमः आकारमात्रम् अवशिष्यते। स च आम्- इति आगमः मिदचोऽन्त्यात्परः इति सूत्रेण अन्त्यात् अचः उकारात् परमेव भवति। तेन चतु आ र् अस् इति जाते इको यणचि इति सूत्रेण आकाररूपे अचि परे उकारस्य स्थाने यणादेशे वकारे चत् व् आ र् अस् इति जाते वर्णमेलने चत्वारः इति रूपं सिद्धम्।

चतुर्-शब्दात् द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे चतुर् अस् इति स्थिते वर्णमेलने चतुरः इति रूपम्। शसः सर्वनामस्थानसंज्ञकत्वाभावात् चतुरनडुहोरामुदात्तः इति सूत्रेण आमागमः न भवति।

चतुर्-शब्दात् भिसि, भ्यसि च सकारस्य रुत्वे विसर्गे च वर्णमेलने यथाक्रमं चतुर्भिः, चतुर्भ्यः चेति रूपं भवति।

चतुर्-शब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये चतुर् आम् इति स्थितिः भवति। चतुर्-शब्दः ह्रस्वान्तः, नद्यन्तः आबन्तो वा नास्ति। तस्मात् ह्रस्वनद्यापो नुट् इति सूत्रेण नुडागमस्य अप्राप्तौ अग्रिमं सूत्रं प्रवर्तते –

## [ १५.१३] षट्चतुर्भ्यश्च। (७.१.५५)

**सूत्रार्थः** – षट्चतुर्भ्यः आमः नुडागमः।

**सूत्रव्याख्या** - अनेन सूत्रेण आमः नुडागमो विधीयते। अतः विधिसूत्रम् इदम्। षट्चतुर्भ्यः, च चेति पदद्वयम् अस्मिन् सूत्रे। आमि सर्वनाम्नः सुट् इति सूत्रात् आमि इति सप्तम्यन्तं पदं विभक्तिविपरिणामेन षष्ठ्यन्ततया अनुवर्तते। ह्रस्वनद्यापो नुट् इति सूत्रात् नुट् इति पदम् अनुवर्तते। षट्चतुर्भ्यः इति पञ्चमीबहुवचनान्तं पदम्। च इति अव्ययपदम्। आमः इति षष्ठ्येकवचनान्तं पदम्। नुट् इति प्रथमैकवचनान्तं पदम्। षट् च चत्वारश्च इति विग्रहे इतरेतरद्वन्द्वसमासे षट्चत्वारः इति रूपम्। तेभ्यः षट्चतुर्भ्यः इति। सूत्रस्य स्पष्टार्थः तावत् षट्संज्ञकात् शब्दात् चतुर्-शब्दात् च परस्य आमः नुडागमः भवति इति।

नुटः टकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा भवति। उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तेन नुटः नकारमात्रम् अवशिष्यते। अयं नुट् इति आगमः टित् भवति। तेन आद्यन्तौ टकितौ इति सूत्रेण आमः आद्यवयवः भवति।

**सूत्रार्थसमन्वयः** – चतुर् आम् इति स्थिते प्रस्तुतसूत्रेण आमः नुडागमः भवति। अयं च आगमः टित् भवति। तस्मात् आद्यन्तौ टकितौ इति सूत्रेण आमः आद्यावयवः भवति। ततः नुटि कृते तस्य अनुबन्धलोपे चतुर् न् आम् इति जाते अग्रिमं सूत्रं प्रवर्तते-

## [ १५.१४] रषाभ्यां नो णः समानपदे। (८.४.१)

**सूत्रार्थः** – रेफषकाराभ्यां परस्य नस्य णः स्यात् एकपदे।

**सूत्रव्याख्या** -अनेन सूत्रेण नकारस्य स्थाने ण इति आदेशः विधीयते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् रषाभ्याम्, नः, णः, समानपदे चेति चत्वारि पदानि सन्ति। आमि सर्वनाम्नः सुट् इति सूत्रात् आमि इति सप्तम्यन्तं पदं विभक्तिविपरिणामेन षष्ठ्यन्ततया अनुवर्तते। ह्रस्वनद्यापो नुट् इति सूत्रात् नुट् इति पदम् अनुवर्तते। रषाभ्याम् इति पञ्चमीद्विवचान्तं पदम्। नः इति षष्ठ्येकवचनान्तं पदम्। णः इति प्रथमैकवचनान्तं पदम्। समानपदे इति सप्तम्येकवचनान्तं पदम्। रश्च षश्च इति विग्रहे इतरेतरद्वन्द्वसमासे रषौ इति रूपं, ताभ्यां रषाभ्याम् इति। समानञ्च तत् पदम् इति विग्रहे कर्मधारयसमासे समानपदम् इति रूपं, तस्मिन् समानपदे इति। सूत्रस्य अर्थो भवति समानपदे रेफात् षकारात् च परस्य नकारस्य स्थाने ण इति आदेशः भवति इति।

**विशेषः** – अस्मिन् सूत्रे समानपदरूपेण अखण्डपदमेव स्वीक्रियते। तेन अग्निर्नयति, चतुर्नवति इत्यादिषु रेफात् परं स्थितस्य नकारस्य णकारो न भवति।

**सूत्रार्थसमन्वयः**— चतुर् न् आम् इति स्थितिः अस्ति। इदं च समानपदम् अस्ति। प्रस्तुतसूत्रेण रेफात् परस्य नकारस्य णकारे कृते चतुर् ण् आम् इति भवति। ततः अचो रहाभ्यां द्वे इति सूत्रेण णकारस्य विकल्पेन द्वित्वे एकस्मिन् पक्षे चतुर्ण्णाम्, अपरस्मिन् च पक्षे चतुर्णाम् इति रूपं भवति।

चतुर्-शब्दात् सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये अनुबन्धलोपे चतुर् सु इति स्थिते सकाररूपे खरि परे खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य विसर्गे प्राप्ते अग्रिमं सूत्रं प्रवर्तते —

## [ १५.१५] रोः सुपि। (८.३.१६)

**सूत्रार्थः** — रोः एव विसर्गः सुपि।

**सूत्रव्याख्या** — अनेन सूत्रेण रु-इत्यस्यैव स्थाने विसर्ग इति आदेशः भवति इति नियम्यते। अतः नियमसूत्रम् इदम्। अस्मिन् सूत्रे रोः, सुपि चेति पदद्वयं वर्तते। खरवसानयोर्विसर्जनीयः इति सूत्रात् विसर्जनीयः इति पदम् अत्र अनुवर्तते। रोः इति षष्ठ्येकवचनान्तं पदम्। सुपि इति सप्तम्येकवचनान्तं पदम्। विसर्जनीयः इति प्रथमैकवचनान्तं पदम्। सूत्रस्य सरलार्थो भवति सप्तमीबहुवचने सुप्प्रत्यये परे रु-इत्यस्य स्थाने विसर्गरूप आदेशो भवति इति।

**विचारः** — सुप्प्रत्यये परे सति रु-इत्यस्य स्थाने विसर्गादेशः खरवसानयोर्विसर्जनीयः इति सूत्रेणैव सिद्ध आसीत्। पुनः अनेन सूत्रेण रु-इत्यस्य स्थाने विसर्गादेशो विहितः। अतः पूर्वतः सिद्धस्यैव विसर्गस्य पुनः सूत्रेणानेन विधानात् सूत्रमिदं नियमसूत्रम्। नियमः अस्ति सिद्धे सति आरभ्यमाणो विधिर्नियमाय कल्पते इति। अतः सुप्प्रत्यये परे सति रुसम्बन्धिरेफस्यैव स्थाने विसर्गादेशो भवति, न तु अन्यस्य रेफस्य स्थाने नियमः सूत्रेण अनेन विधीयते।

चतुर् सु इति स्थितौ चतुर् इत्यत्र रेफः रुसम्बन्धी नास्ति। अतः सूत्रेणानेन नियमकरणात् रेफस्य स्थाने विसर्गादेशो न भवति।

चतुर् सु इत्यत्र आदेशप्रत्यययोः इति सूत्रेण सकारस्य स्थाने षकाररूपः आदेशः भवति। तेन चतुर्षु इति रूपं सिद्ध्यति। ततः अचो रहाभ्यां द्वे इति सूत्रेण षकारस्य विकल्पेन द्वित्वं प्राप्नोति। ततः अग्रिमं सूत्रम् आगच्छति —

## [ १५.१६] शरोऽचि। (८.४.४९)

**सूत्रार्थः** — अचि परे शरः न द्वे स्तः।

**सूत्रव्याख्या**— अनेन सूत्रेण द्वित्वं निषिध्यते। अतः इदं निषेधसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। शरः, अचि इति सूत्रगतपदच्छेदः। नादिन्याक्रोशे पुत्रस्य इति सूत्रात् न इति अव्ययपदम् अनुवर्तते। अचो रहाभ्यां द्वे इति सूत्रात् द्वे इति पदम् अनुवर्तते। शरः इति षष्ठ्येकवचनान्तं पदम्। अचि इति सप्तम्येकवचनान्तं पदम्। न इति अव्ययपदम्। द्वे इति प्रथमाद्विवचनान्तं पदम्। सूत्रस्य अर्थो भवति अचि परे शरः द्वित्वं न भवति इति।



**सूत्रार्थसमन्वयः** – चतुर् षु इति स्थितिः। अत्र अचो रहाभ्यां द्वे इति सूत्रेण षकारस्य द्वित्वं प्राप्नोति। परन्तु अत्र षकाररूपात् शरः परम् उकाररूपः अच् अस्ति। अतः अचि परे शरः षकारस्य प्राप्तं द्वित्वं प्रस्तुतसूत्रेण निषिद्ध्यते। तेन चतुर्षु इत्येव रूपम्।

स्त्रीलिङ्गे चतुर्-शब्दः –

चतुर्-शब्दस्य स्त्रीलिङ्गे त्रिचतुरोः स्त्रियां तिसृचतसृ इति सूत्रेण चतसृ इति आदेशः भवति।

चतसृ अस् (जस्) इति स्थिते प्रथमयोः पूर्वसवर्णः इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते तं प्रबाध्य ऋतो ङिसर्वनामस्थानयोः इति सूत्रेण ऋकारस्य स्थाने गुणे प्राप्ते तं प्रबाध्य अचि र ऋतः इति सूत्रेण अजादौ अस् (जस्)-प्रत्यये परे सति ऋकारस्य स्थाने र् इति आदेशे चतस् र् अस् इति जाते सकारस्य रुत्वे विसर्गे वर्णमेलने च चतस्रः इति रूपम्।

चतसृ अस् (शस्) इत्यत्र सर्वनामस्थानसंज्ञकः प्रत्ययः परं नास्ति। तेन अत्र ऋतो ङिसर्वनामस्थानयोः इति सूत्रं न प्रवर्तते। तेन प्रथमयोः पूर्वसवर्णः इति सूत्रेण सवर्णदीर्घे प्राप्ते तं प्रबाध्य अचि र ऋतः इति सूत्रेण रेफादेशे पूर्ववत् प्रक्रियाकार्ये चतस्रः इति रूपम्।

चतसृ आम् इत्यत्र अचि र ऋतः इति सूत्रं प्रबाध्य नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन इति वार्तिकेन पूर्वविप्रतिषेधेन ह्रस्वनद्यापो नुट् इति सूत्रेण नुट् इति आगमे अनुबन्धलोपे चतसृ नाम् इति जाते नामि इति सूत्रेण ऋकारस्य दीर्घः प्राप्नोति। तस्य न तिसृचतसृ इति सूत्रेण निषेधः भवति। ततः ऋवर्णान्नस्य णत्वं वाच्यम् इति वार्तिकेन नकारस्य णकारे चतसृणाम् इति रूपम्।

चतुर्-शब्दस्य स्त्रीलिङ्गे रूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | - | - | चतस्रः |
| **द्वितीयायाम्** | - | - | चतस्रः |
| **तृतीयायाम्** | - | - | चतसृभिः |
| **चतुर्थ्याम्** | - | - | चतसृभ्यः |
| **पञ्चम्याम्** | - | - | चतसृभ्यः |
| **षष्ठ्याम्** | - | - | चतसृणाम् |
| **सप्तम्याम्** | - | - | चतसृषु |

## क्लीबलिङ्गे चतुर्-शब्दः

चतुर् अस् (जस्) इत स्थिते, जश्शसोः शिः इत्यनेन जसः स्थाने शि इत्यादेशे अनुबन्धलोपे, शि सर्वनामस्थानम् इत्यनेन तस्य सर्वनामस्थानसंज्ञायां, चतुरनडुहोरामुदात्तः इति सूत्रेण आम् इति आगमः भवति। आम् इति आगमः मित् भवति। तस्मात् मिदचोऽन्त्यात्परः इति सूत्रेण अन्त्यात् अचः उकारात् परम् आमागमः भवति। ततः अनुबन्धलोपे चतु आ र् इ इति जाते, आकाररूपे अचि परे इको यणचि इति सूत्रेण उकारस्य स्थाने यणि वकारे वर्णमेलने चत्वारि इति रूपं निष्पद्यते।

द्वितीयाविभक्तेः बहुवचने तथैव रूपाणि भवन्ति। अन्यत्र पुंलिङ्गवत् रूपाणि भवन्ति।

चतुर्-शब्दस्य क्लीबलिङ्गे रूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | - | - | चत्वारि |
| द्वितीयायाम् | - | - | चत्वारि |
| अन्यानि रूपाणि पुंलिङ्गवत् | | | |

## किम्-शब्दः-

किम्-शब्दः सर्वादिगणे पठितः। अतः सर्वादीनि सर्वनामानि इति सूत्रेण एतस्य सर्वनामसंज्ञा भवति। अयं विशेषणवाचकः शब्दः। तस्मात् त्रिषु अपि लिङ्गेषु अस्य शब्दस्य रूपाणि दृश्यन्ते।

## पुंलिङ्गे किम्-शब्दः

### [ १५.१७] किमः कः। (७.२.१०३)

**सूत्रार्थः** – किमः कः स्यात् विभक्तौ।

**सूत्रव्याख्या** - अनेन सूत्रेण क इति आदेशो विधीयते। अतः विधिसूत्रम् इदम्। किमः, कः चेति द्वे पदे अत्र। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति पदम् अत्र अनुवर्तते। किमः इति षष्ठ्येकवचनान्तं पदम्। कः इति प्रथमैकवचनान्तं पदम्। विभक्तौ इति सप्तम्येकवचनान्तं पदम्। सूत्रस्य अर्थो भवति किम्-इति शब्दस्य स्थाने क इति आदेशः भवति विभक्तौ परतः इति।

क इति अत्र अकारान्तः आदेशः (क् अ)। अतः अयम् आदेशः अनेकाल् भवति। तस्मात् अनेकाल्शित्सर्वस्य इति सूत्रेण सम्पूर्णस्य किम्-शब्दस्य स्थाने अयम् आदेशो भवति। एकविंशतौ एव विभक्तिषु परतः किम्-शब्दस्य स्थाने अनेन सूत्रेण क इति अकारान्त आदेशः भवति। तेन विभक्तौ परतः किम् इति मकारान्तः शब्दः अकारान्तः सम्पद्यते। तेन पुंलिङ्गे सर्वशब्दवत् रूपाणि भवन्ति।

**बाध्यबाधकभावः** – हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रस्य बाधकमिदं सूत्रम्।

**सूत्रार्थसमन्वयः** – किम्-शब्दात् पुंलिङ्गे प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे किम् स् इति स्थिते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण अपृक्तसंज्ञकस्य स्-इत्यस्य लोपे प्राप्ते तं प्रबाध्य प्रस्तुतसूत्रेण सम्पूर्णस्य किम्-शब्दस्य स्थाने क इत्यादेशे क स् इति जाते सकारस्य रुत्वे विसर्गे च कृते कः इति रूपम्।

अन्यानि रूपाणि पुंलिङ्गे सर्वशब्दस्य यथा भवन्ति तथैव ज्ञेयानि।

## स्त्रीलिङ्गे किम्-शब्दः

स्त्रीलिङ्गे किम्-शब्दात् विभक्तौ परतः किमः कः इति सूत्रेण क-इति अकारान्तः आदेशः भवति। तेन क इति अकारान्तः सम्पद्यते। ततः स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इति सूत्रेण इति सूत्रेण टाप्प्रत्यये

अनुबन्धलोपे क आ इति जाते अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे का इति रूपम्। एवं का इति जाते सर्वा-शब्दवत् रूपाणि भवन्ति। तेन सर्वाशब्दरूपाणां सिद्धये यानि सूत्राणि अपेक्षन्ते तानि सर्वाण्येव अत्र आवश्यकानि। तेन निष्कर्षः अयम् आयाति यत् किम्-शब्दस्य स्त्रीलिङ्गे सर्वाशब्दवत् रूपाणि भवन्ति इति।

स्त्रीलिङ्गे किम्-शब्दरूपाणि—

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | का | के | काः |
| **द्वितीयायाम्** | काम् | के | काः |
| **तृतीयायाम्** | कया | काभ्याम् | काभिः |
| **चतुर्थ्याम्** | कस्यै | काभ्याम् | काभ्यः |
| **पञ्चम्याम्** | कस्याः | काभ्याम् | काभ्यः |
| **षष्ठ्याम्** | कस्याः | कयोः | कासाम् |
| **सप्तम्याम्** | कस्याम् | कयोः | कासु |

## क्लीबलिङ्गे किम्-शब्दः

क्लीबलिङ्गे किम्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये किम् सु इति स्थिते स्वमोर्नपुंसकात् इति सूत्रेण सु-प्रत्ययस्य लुकि किम् इति रूपं निष्पद्यते। अत्र विभक्तेः लुकि सत्यपि प्रत्ययलक्षणेन किमः कः इति सूत्रेण क-इति आदेशः न भवति, प्रत्ययलोपे प्रत्ययलक्षणम् इत्यस्य न लुमताङ्गस्य इति सूत्रेण निषेधात्।

ततः औ-आदिप्रत्ययेषु परेषु किमः कः इत्यनेन क-आदेशे कृते सर्वाण्यपि रूपाणि ज्ञानशब्दवत् भवन्ति।

क्लीबलिङ्गे किम्-शब्दरूपाणि—

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | किम् | के | कानि |
| **द्वितीयायाम्** | किम् | के | कानि |
| अन्यानि रूपाणि पुंलिङ्गवत् | | | |

## पाठगतप्रश्नाः-४

२२. चतुरः इत्यत्र आमागमः कथं न भवति?

२३. नुडागमविधायकं सूत्रद्वयं लिखत।

२४. चतुर् न् आम् इत्यत्र णत्वं केन सूत्रेण?

२५. चतुर् सु इत्यत्र रेफस्य विसर्गादेशः कुतः न?

२६. रोः सुपि इत्यत्र सुप् इति प्रत्याहारः प्रत्ययो वा?

२७. शरोऽचि इति सूत्रेण किं निषिध्यते?

२८. किम् स् इति स्थिते किं सूत्रं प्रवर्तते?

२९. क इति आदेशः कस्य स्थाने भवति?

३०. किम्-शब्दस्य सर्वादिगणे पाठस्य एकं फलं लिखत।

## पाठसारः

हलन्तशब्दानाम् अजादौ विभक्तौ परतः तथा कार्याणि न भवन्ति। केवलं हलादौ सु, भ्याम्, भिस्, भ्यस्, सुप् चेति विभक्तौ परतः एव कार्याणि अधिकानि भवन्ति। कदाचित् भसंज्ञास्थले विशिष्टं कार्यं भवति।

लिह्-शब्दस्य हकारस्य स्थाने झलि पदान्ते च ढः इति आदेशः भवति। भकारादिप्रत्ययेषु परेषु हकारस्य स्थाने ढ् इति आदेशे कृते झलां जशोऽन्ते इति सूत्रेण ड् इति आदेशः भवति। सुप्प्रत्ययस्थले सति डः सि धुट् इति सूत्रेण विकल्पेन धुट् इति आगमः विकल्पेन भवति। तेन सुप्प्रत्ययस्थले रूपद्वयं भवति।

दुह्-शब्दः यतः दकारादिः वर्तते तस्मात् दादेर्धातोर्घः इति सूत्रेण दकारस्य स्थाने घकारः आदिश्यते। अत्र हलादौ विभक्तौ परतः दकारस्य स्थाने ध् इति आदेशः अपि भवति। हलादौ परे सति विहितस्य घकारस्य स्थाने झलां जशोऽन्ते इति सूत्रेण जश्त्वे गकारः भवति। सुप्रत्यये परे केवलं गकारस्य स्थाने विकल्पेन चर्-भावे कृते रूपद्वयं भवति।

विश्ववाह्-शब्दस्य सर्वनामस्थानसंज्ञके प्रत्यये परे लिह्-शब्दवत् रूपाणि भवन्ति। भसंज्ञकप्रत्ययस्थले तु सम्प्रसारणसंज्ञायाः ज्ञानं भवति। तदुत्तरम् ऊठ् इति सर्वनामसंज्ञककार्यं भवति। ऊठि परे सति एत्येधत्यूठ्सु इति सूत्रेण वृद्धिः भवति।

अनडुह्-शब्दस्य सर्वनामस्थानसंज्ञके प्रत्यये परे आम् इति आगमः भवति। सम्बुद्धिभिन्ने सुप्रत्यये परे सति नुम् इति आगमः अपि भवति। सम्बुद्धिसंज्ञके सुप्रत्यये परे सति अम् इति आगमः भवति। पदान्ते अनडुह्-शब्दस्य हकारस्य स्थाने द् इति आदेशः भवति।

सुदिव् इत्यत्र वकारस्य सुप्रत्यये परे दिव औत् इति सूत्रेण औ इति आदेशः भवति। अन्यत्र हलादौ प्रत्यये परे दिव उत् इति सूत्रेण उ-इत्यादेशः भवति।

चतुर्-शब्दस्य सर्वनामस्थानसंज्ञके जसि आमागमः भवति चतुरनडुहोरामुदात्तः इति सूत्रेण। शसि तु न भवति। आम्प्रत्ययस्थले तु षट्चतुर्भ्यश्च इति सूत्रेण नुडागमः भवति। तस्य च रषाभ्यां नो णः समानपदे इति सूत्रेण मूर्धन्यादेशः भवति। तस्य पुनः मूर्धन्यादेशस्य णकारस्य अचो रहाभ्यां द्वे इति सूत्रेण विकल्पेन द्वित्वं भवति। सुप्प्रत्ययस्थले तु द्वित्वस्य निषेधः शरोऽचि इति सूत्रेण निषिध्यते।

किम्-शब्दस्य स्थाने विभक्तौ परतः किमः कः इति सूत्रेण क इति सर्वादेशः भवति। अस्य रूपाणि सर्वाशब्दवत् भवन्ति।

## योग्यतावर्धनम्

अस्मिन् पाठे ये शब्दाः आलोचिताः तेषां रूपाणि अधः प्रदीयन्ते। शब्दरूपाणां कण्ठस्थीकरणाय अयं भागः छात्राणाम् उपकाराय भविष्यति।

१. लिह्-शब्दरूपाणि–

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | लिट्/लिड् | लिहौ | लिहः |
| **द्वितीयायाम्** | लिहम् | लिहौ | लिहः |
| **तृतीयायाम्** | लिहा | लिड्भ्याम् | लिड्भिः |
| **चतुर्थ्याम्** | लिहे | लिड्भ्याम् | लिड्भ्यः |
| **पञ्चम्याम्** | लिहः | लिड्भ्याम् | लिड्भ्यः |
| **षष्ठ्याम्** | लिहः | लिहोः | लिहाम् |
| **सप्तम्याम्** | लिहि | लिहोः | लिट्त्सु/लिट्सु |
| **सम्बोधने** | लिट्/लिड् | लिहौ | लिहः |

२. दुह्-शब्दरूपाणि–

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | धुक्/धुग् | दुहौ | दुहः |
| **द्वितीयायाम्** | दुहम् | दुहौ | दुहः |
| **तृतीयायाम्** | दुहा | धुग्भ्याम् | धुग्भिः |
| **चतुर्थ्याम्** | दुहे | धुग्भ्याम् | धुग्भ्यः |
| **पञ्चम्याम्** | दुहः | धुग्भ्याम् | धुग्भ्यः |
| **षष्ठ्याम्** | दुहः | दुहोः | दुहाम् |
| **सप्तम्याम्** | दुहि | दुहोः | धुक्षु |
| **सम्बोधने** | धुक्/धुग् | दुहौ | दुहः |

३. विश्ववाह्-शब्दरूपाणि–

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | विश्ववाट्/विश्ववाड् | विश्ववाहौ | विश्ववाहः |
| द्वितीयायाम् | विश्ववाहम् | विश्ववाहौ | विश्वौहः |
| तृतीयायाम् | विश्वौहा | विश्ववाड्भ्याम् | विश्ववाड्भिः |
| चतुर्थ्याम् | विश्वौहे | विश्ववाड्भ्याम् | विश्ववाड्भ्यः |
| पञ्चम्याम् | विश्वौहः | विश्ववाड्भ्याम् | विश्ववाड्भ्यः |
| षष्ठ्याम् | विश्वौहः | विश्वौहोः | विश्वौहाम् |
| सप्तम्याम् | विश्वौहि | विश्वौहोः | विश्ववाट्त्सु/विश्ववाट्सु |
| सम्बोधने | हे विश्ववाट्/विश्ववाड् | हे विश्ववाहौ | हे विश्ववाहः |

४. अनडुह्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | अनड्वान् | अनड्वाहौ | अनड्वाहः |
| द्वितीयायाम् | अनड्वाहम् | अनड्वाहौ | अनडुहः |
| तृतीयायाम् | अनडुहा | अनडुद्भ्याम् | अनडुद्भिः |
| चतुर्थ्याम् | अनडुहे | अनडुद्भ्याम् | अनडुद्भ्यः |
| पञ्चम्याम् | अनडुहः | अनडुद्भ्याम् | अनडुद्भ्यः |
| षष्ठ्याम् | अनडुहः | अनडुहोः | अनडुहाम् |
| सप्तम्याम् | अनडुहि | अनडुहोः | अनडुत्सु |
| सम्बोधने | हे अनड्वन् | हे अनड्वाहौ | हे अनड्वाहः |

५. सुदिव्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | सुद्यौः | सुदिवौ | सुदिवः |
| द्वितीयायाम् | सुदिवम् | सुदिवौ | सुदिवः |
| तृतीयायाम् | सुदिवा | सुद्युभ्याम् | सुद्युभिः |
| चतुर्थ्याम् | सुदिवे | सुद्युभ्याम् | सुद्युभ्यः |
| पञ्चम्याम् | सुदिवः | सुद्युभ्याम् | सुद्युभ्यः |
| षष्ठ्याम् | सुदिवः | सुदिवोः | सुदिवाम् |
| सप्तम्याम् | सुदिवि | सुदिवोः | सुद्युषु |
| सम्बोधने | हे सुद्यौः | हे सुदिवौ | हे सुदिवः |



६. पुंलिङ्गे चतुर्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | - | - | चत्वारः |
| द्वितीयायाम् | - | - | चतुरः |
| तृतीयायाम् | - | - | चतुर्भिः |
| चतुर्थ्याम् | - | - | चतुर्भ्यः |
| पञ्चम्याम् | - | - | चतुर्भ्यः |
| षष्ठ्याम् | - | - | चतुर्णाम्/चतुण्णाम् |
| सप्तम्याम् | - | - | चतुर्षु |

७. पुंलिङ्गे किम्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | कः | कौ | के |
| द्वितीयायाम् | कम् | कौ | कान् |
| तृतीयायाम् | केन | काभ्याम् | कैः |
| चतुर्थ्याम् | कस्मै | काभ्याम् | केभ्यः |
| पञ्चम्याम् | कस्मात् | काभ्याम् | केभ्यः |
| षष्ठ्याम् | कस्य | कयोः | केषाम् |
| सप्तम्याम् | कस्मिन् | कयोः | केषु |

## पाठान्तप्रश्नाः

१. लिह्शब्दस्य सप्तमीबहुवचने कति रूपाणि भवन्ति? तानि ससूत्रं साधयत।

२. दादेर्धातोर्घः इति सूत्रं व्याख्यात।

३. एकाचो बशो भष् झषन्तस्य स्ध्वोः इति सूत्रं व्याख्यात।

४. विश्वौहः इति रूपं साधयत।

५. सम्प्रसारणसंज्ञाविधायकं सूत्रं विलिख्य तस्याः फलं सोदाहरणं स्पष्टयत।

६. दिव औत् इति सूत्रं व्याख्यात।

७. नित्यविधिः कः? एकेन उदाहरणेन स्पष्टयत।

८. वसुस्रंसुध्वंस्वनडुहां दः इति सूत्रं व्याख्यात।

९. अनड्वान् इति रूपं साधयत।

१०. अनडुह्-शब्दस्य सम्बोधनैकवचने रूपं साधयत।

११. दिव उत् इति सूत्रं सोदाहरणं व्याख्यात।

१२. सुद्यौः इति रूपं साधयत।

१३. चतुर्-शब्दस्य आमि कति रूपाणि भवन्ति? तानि ससूत्रं साधयत।

१४. चतुर् सु इत्यत्र रेफस्य विसर्गः कथं न प्राप्नोति सकारणं स्पष्टयत।

## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण।

२. द्वे रूपे भवतः। ते तावत् लिट्त्सु, लिट्सु चेति।

३. दुह् इत्यत्र दकारादिः धातुः। तस्मात् अत्र हो ढः इति सूत्रं न प्रवर्तते। तस्य अपवादभूतेन दादेर्धातोर्घः इति सूत्रेण हकारस्य स्थाने घकारः भवति।

४. एकाचो बशो भष् झषन्तस्य स्ध्वोः इति सूत्रेण।

५. धात्ववयवस्य एकाचः झषन्तस्य बशो भष् से ध्वे पदान्ते च इति।

६. अच्, बश्, भष्, झष् चेति चतुर्णां प्रत्याहाराणाम् उल्लेखः दृश्यते।

### उत्तराणि-२

७. इग्यणः सम्प्रसारणम् इति। यणः स्थाने प्रयुज्यमानो यः इक् स सम्प्रसारणसंज्ञः स्यादिति सूत्रार्थः।

८. सम्प्रसारणाच्च इति सूत्रेण पूर्वरूपैकादेशः।

९. पूर्वरूपैकादेशः भवति, सम्प्रसारणाच्च इति सूत्रबलात्।

१०. जसि विश्ववाहः, शसि च विश्वौहः इति रूपम्।

११. भस्य वाहः सम्प्रसारणम् ऊठ् इति सूत्रार्थः।

१२. वृद्धिः भवति, एत्येधत्यूठ्सु इति सूत्रेण।

### उत्तराणि-३

१३. सुप्रत्यये परे अनडुह्-शब्दस्य अन्त्यात् अचः परं नुमागमः अनेन विधीयते।

१४. वसुस्रंसुध्वंस्वनडुहां दः इति सूत्रेण द् इति आदेशः विधीयते।

१५. सुप्रत्यये परे दिवः वकारस्य स्थाने औ इति आदेशविधानम्। सुद्यौः इति उदाहरणम् अत्र।

१६. तकारः अत्र केवलम् उच्चारणार्थः।

१७. अङ्गस्य इति सूत्रस्य अधिकारे पठ्यते।

१८. दिव औत् इति नित्यविधिना हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रस्य बाधः भवति।

१९. दिवः अन्तादेशः उकारः स्यात् पदान्ते इति सूत्रार्थः।

२०. उत् इति अन्तादेशः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य वकारस्य स्थाने एव भवति।

२१. स्वादिष्वसर्वनामस्थाने इति सूत्रेण।

**उत्तराणि-४**

२२. चतुर् अस् (शस्) इत्यत्र शस्प्रत्ययः सर्वनामस्थानसंज्ञकः नास्ति। तस्मात् चतुरनडुहोरामुदात्तः इति सूत्रेण अत्र न आमागमः।

२३. ह्रस्वनद्यापो नुट्, षट्चतुर्भ्यश्च चेति।

२४. रषाभ्यां नो णः समानपदे इति सूत्रेण।

२५. शरोऽचि इति सूत्रेण निषेधात्।

२६. सुप् इति प्रत्ययः अत्र।

२७. अचो रहाभ्यां द्वे इति सूत्रेण प्राप्तं शरः द्वित्वं निषिध्यते।

२८. किमः कः इति सूत्रं प्रवर्तते।

२९. अनेकाल्त्वात् अनेकाल्शित्सर्वस्य इति परिभाषया किम्-शब्दस्य सम्पूर्णस्य स्थाने भवति।

३०. किम्-शब्दस्य पुंलिङ्गे जसि प्रक्रियाकार्ये क अस् इति जाते जसः शी इति सूत्रेण जसः स्थाने शी इत्यादेशविधानम्। तेन के इति रूपं सिद्ध्यति।

**।।इति पञ्चदशः पाठः।।**

# १६

# हलन्तप्रकरणे इदम् राजन् इत्यादिशब्दानां रुपाणि

## प्रस्तावना

पूर्वस्मिन् पाठे लिहादयः सप्त शब्दाः आलोचिताः। साम्प्रतम् अस्मिन् पाठे इदम् इति एकः मकारान्तः शब्दः, राजन्, मघवन्, युवन्, पथिन्, पञ्चन्, अष्टन् चेति पञ्च नकारान्ताः शब्दाः आलोच्यन्ते। तेन अस्मिन् पाठे साकल्येन सप्त शब्दाः सन्ति। एतेषां शब्दानां यानि रूपाणि सन्ति तेषां साधनाय एकविंशतिसूत्राणि अत्र स्थापितानि। ग्रन्थान्तराणि पर्यालोच्य सरलया शैल्या सूत्राणि व्याख्यातानि। तेन अस्य पाठस्य अध्ययनेन सूत्राणां सामान्यं ज्ञानम्, उदाहरणेषु सूत्रार्थस्य कथं सङ्गतिर्भवति चेत्यादयः विषयाः बुद्धौ दृढा भविष्यन्ति।

## उद्देश्यानि -

अमुं पाठम् अधीत्य भवान् –

- इदम्-शब्दरूपाणि कथं साध्यन्ते इति सम्यग् अवगमिष्यति।
- राजन्-शब्दस्य सम्बोधने नकारस्य लोपः कथं न भवति इति बोद्धुं शक्ष्यति।
- नलोपः कुत्र कुत्र असिद्धः भवति इति ज्ञानं प्राप्स्यति।
- मघवत्-शब्दस्थले विकल्पेन तृ-आदेशे कृते कानि रूपाणि भवन्ति इति बोद्धुं पारयेत्।
- सम्प्रसारणं पूर्वस्य परस्य वेति निर्णयं प्राप्स्यति।
- पथिन्-शब्दरूपसिद्धिप्रक्रियां ज्ञास्यति।
- अष्टन्-शब्दस्य पक्षद्वये कानि रूपाणि कथं भवन्ति इति अवगमिष्यति।

### इदम्-शब्दः

इदम्-शब्दः सर्वादिगणे पठितः। अतः सर्वादीनि सर्वनामानि इति सूत्रेण तस्य सर्वनामसंज्ञा भवति। त्रिषु एव लिङ्गेषु अस्य प्रयोगः दृश्यते। सन्निकृष्टं वस्तुनं बोधयितुम् इदंशब्द उपयुज्यते। तथाहि प्रसिद्धः श्लोकः –

**इदमस्तु सन्निकृष्टे, समीपतरवर्ति चैतदो रूपम्।**
**अदसस्तु विप्रकृष्टे, तदिति परोक्षे विजानीयात्॥ इति॥**

## पुंलिङ्गे इदम्-शब्दः

### [ १६.१] इदमो मः। (७.२.१०८)

**सूत्रार्थः** – इदमः मस्य मः स्यात् सौ परे।

**सूत्रव्याख्या** - अनेन सूत्रेण म इति आदेशो विधीयते। अतः विधिसूत्रमिदम्। सूत्रेऽस्मिन् पदद्वयं वर्तते। इदमः इति षष्ठ्येकवचनान्तं पदम्। मः इति प्रथमैकवचनान्तं पदम्। तदोः सः सावनन्त्ययोः इति सूत्रात् सौ इति सप्तम्यन्तं पदमनुवर्तते। सूत्रार्थो भवति इदम्-शब्दस्य स्थाने म इति आदेशः स्यात् सुप्रत्यये परे इति। म इत्यत्र अकारः उच्चारणार्थः। तेन अयम् आदेशः अलोऽन्त्यस्य इति परिभाषया इदम्-शब्दस्य अन्त्यावयवः यः मकारः तस्यैव स्थाने भवति।

अनेन सूत्रेण मकारस्य स्थाने पुनः मकारः एव आदिश्यते। मकारस्य स्थाने पुनः मकारविधानं व्यर्थम्। तस्मात् अस्य तात्पर्यम् एवम् अवधेयम् – त्यदादीनामः इति सूत्रेण मकारस्य स्थाने अ-इति आदेशः यथा न स्यात्, मकारस्य मकाररूपेणैव यथा स्थितिः स्यात् तदर्थं सूत्रमिदं पाणिनिना प्रणीतम् इति। अतः त्यदादीनामः इति सूत्रस्य अपवादभूतमिदं शास्त्रम्।

**सूत्रार्थसमन्वयः** - तेन इदम्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे इदम् स् इति स्थिते त्यदादीनामः इति सूत्रेण मकारस्य स्थाने अकारादेशे प्राप्ते तं प्रबाध्य अनेन सूत्रेण मकारस्य स्थाने मकार एव विधीयते। तेन इदम् स् इत्येव तिष्ठति। ततः अग्रिमं सूत्रम् आगच्छति -

### [ १६.२] इदोऽय् पुंसि। (७.२.१११)

**सूत्रार्थः** – इदमः इदः अय् सौ पुंसि।

**सूत्रव्याख्या** -अनेन सूत्रेण अय्-इति आदेशो विधीयते। अतः विधिसूत्रम् इदम्। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। इदः इति षष्ठ्येकवचनान्तं पदम्। अय् इति प्रथमैकवचनान्तम् आदेशबोधकं पदम्। पुंसि इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे इदमो मः इति सूत्रात् इदमः इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। यः सौ इति सूत्रात् सौ इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। इदमः इत्यत्र अवयवषष्ठी। सूत्रार्थो भवति इदम्-शब्दस्य अवयवभूतः यः इद्-इति भागः तस्य स्थाने अय्-इति आदेशः स्यात् पुंलिङ्गे सुप्रत्यये परे इति।

अयं च अय् इति आदेशः अनेकाल्त्वात् अनेकाल्शित् सर्वस्य इति परिभाषया सम्पूर्णस्य इद्-इत्यस्य स्थाने एव भवति। अय् इत्यत्र यकारस्य प्रयोजनाभावात् हलन्त्यम् इति सूत्रेण इत्संज्ञा न भवति।

**सूत्रार्थसमन्वयः** - पुंलिङ्गे इदम् स् इति स्थिते प्रस्तुतसूत्रेण इदम्-शब्दस्य (इद् अम्) इद्भागस्य स्थाने अय् इति आदेशे अय् अम् स् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारस्य लोपे वर्णमेलने अयम् इति रूपं साधु।

इदम् औ इति स्थिते सुप्रत्ययस्य परत्वाभावात् इदमो मः इति सूत्रं न प्रवर्तते। तेन त्यदादीनामः इति सूत्रेण इदम्-शब्दस्य मकारस्य स्थाने अ-इति आदेशे इद अ औ इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.३] अतो गुणे। (६.१.९७)

**सूत्रार्थः** – अपदान्तात् अतः गुणे पररूपम् एकादेशः।

**सूत्रव्याख्या** - पररूपैकादेशविधानात् सूत्रम् इदं विधिसूत्रम्। सूत्रेऽस्मिन् पदद्वयं वर्तते। अतः इति पञ्चम्येकवचनान्तं पदम्। गुणे इति सप्तम्येकवचनान्तं पदम्। उस्यपदान्तात् इति सूत्रात् अपदान्तात् इति पञ्चम्येकवचनान्तं पदम् अनुवर्तते। तच्च अतः इति पञ्चम्यन्तपदेन सह अन्वेति। एकः पूर्वपरयोः इति सूत्रमिदम् अधिकृतम्। अत्र एकः इति प्रथमैकवचनान्तं पदम्। पूर्वपरयोः इति षष्ठीद्विवचनान्तं पदम्। एङि पररूपम् इति सूत्रात् पररूपम् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अदेङ् गुणः इति सूत्रेण अ ए ओ चेति त्रयाणां वर्णानां गुणसंज्ञा भवति। तेन सूत्रार्थो भवति अपदान्तात् अकारात् परम् अ, ए ओ चेति त्रिषु गुणसंज्ञकेषु वर्णेषु कश्चित् एकः तिष्ठति चेत् पूर्वपरयोः स्थाने एकः पररूपः आदेशः भवति इति।

इदं सूत्रम् अकः सवर्णे दीर्घः, वृद्धिरेचि चेत्यादीनां सूत्राणाम् अपवादभूतम्।

**सूत्रार्थसमन्वयः** - इद अ औ इति स्थिते अपदान्तात् दकारोत्तरं स्थितात् अकारात् गुणसंज्ञके अकारे परे सति पूर्वपरयोः स्थाने पररूपे अकारे इद औ इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.४] दश्च। (७.२.१०९)

**सूत्रार्थः** – इदमः दस्य मः स्यात् विभक्तौ।

**सूत्रव्याख्या** - सूत्रेणानेन म् इति आदेशो विधीयते। आदेशविधानात् विधिसूत्रमिदम्। सूत्रेऽस्मिन् पदद्वयं वर्तते। दः इति षष्ठ्येकवचनान्तं पदम्। च इति अव्ययपदम्। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। इदमो मः इति सूत्रं सम्पूर्णम् अनुवर्तते। अत्र इदमः इति षष्ठ्येकवचनान्तं पदम्। मः इति प्रथमैकवचनान्तं पदम्। अत्र मकारोत्तरः अकार उच्चारणार्थः। सूत्रार्थो भवति विभक्तौ परतः इदम्-शब्दस्य अवयवभूतः यः दकारः तस्य स्थाने म्- इति आदेशो भवति इति।

**सूत्रार्थसमन्वयः** - इद औ इति स्थिते विभक्तौ (औप्रत्यये) परे सति प्रस्तुतसूत्रेण दकारस्य स्थाने म्-इति आदेशे इम् अ औ इति जाते वृद्धिरेचि इति सूत्रेण वृद्धौ प्राप्तायां तं प्रबाध्य प्रथमयोः पूर्वसवर्णः इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते नादिचि इति सूत्रेण तन्निषेधे वृद्धिरेचि इति सूत्रेण अकार-औकारयोः स्थाने पुनः वृद्धौ एकादेशे इमौ इति रूपं सिद्धम्।

इदम्-शब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे इदम् अस् इति जाते त्यदादीनामः इति सूत्रेण मकारस्य स्थाने अकारे इद अ अस् इति भवति। ततः अतो गुणे इति सूत्रेण अपदन्तात् दकारोत्तरं स्थितात् अकारात् अकारे परे पररूपे अकारे इद अस् इति भवति। ततः दश्च इति सूत्रेण दकारस्य स्थाने म्-इति आदेशे इम् अ अस् > इम अस् इति जाते स्थानिवद्भावेन इम इत्यंशस्यापि सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञा भवति। ततः जसः शी इति सूत्रेण जस्-प्रत्ययस्य (अस्)

स्थाने शी इति आदेशो भवति। शी-इत्यत्र अनुबन्धलोपे ईकारमात्रम् अवशिष्यते। तेन इम ई इति अवस्थायाम् आद् गुणः इति सूत्रेण अकार-ईकारयोः स्थाने गुणे एकारे वर्णमेलने इमे इति रूपं सिद्धम्।

विशेषद्रष्टव्यम् – त्यदादिगणे (त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्) पठितानां शब्दानां सम्बोधने रूपाणि न भवन्ति। एतस्य तात्पर्यं तावत् इदम्-शब्दस्य सम्बोधने रूपाणि प्रथमाविभक्तौ यथा रूपाणि तथैव भवन्ति। परन्तु लोके तेषां प्रयोगः न दृश्यते।

इदम्-शब्दात् द्वितीयाविभक्तेः एकवचनविवक्षायाम् अम्प्रत्यये इदम् अम् इति स्थिते त्यदादीनामः इति सूत्रेण इदम्-शब्दस्य मकारस्य स्थाने अकारे इद अ अम् इति भवति। ततः अतो गुणे इति सूत्रेण अकारद्वयस्य स्थाने पररूपे इद अम् इति जाते, दश्च इति सूत्रेण दकारस्य स्थाने मकारे इम अम् इति भवति। ततः अमि पूर्वः इति सूत्रेण अकः मकारोत्तरस्य अकारस्य अम्सम्बन्धिनि अचि परे पूर्वरूपे इमम् इति रूपं साधु।

इदम्-शब्दात् द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे इदम् अस् इति स्थिते त्यदादीनामः इति सूत्रेण मकारस्य स्थाने अकारे इद अ अस् इति भवति। ततः अतो गुणे इति सूत्रेण पररूपे इद अस् इति भवति। ततः दश्च इति सूत्रेण दकारस्य स्थाने मकारे इम अस् इति जाते प्रथमयोः पूर्वसवर्णः इति सूत्रेण पूर्वसवर्णदीर्घे इमास् इति भवति। ततः तस्माच्छसो नः पुंसि इति सूत्रेण सकारस्य स्थाने नकारादेशे इमान् इति रूपं सिद्धम्।

इदम्-शब्दात् तृतीयैकवचनविवक्षायां टाप्रत्यये अनुबन्धलोपे इदम् आ इति स्थिते त्यदादीनामः इति सूत्रेण अकारे, अतो गुणे इति सूत्रेण पररूपे इद आ इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १६.५] अनाप्यकः। (७.२.११२)

**सूत्रार्थः** – अककारस्य इदमः इदः अन् आपि विभक्तौ।

**सूत्रव्याख्या** -सूत्रेणानेन अन् इति आदेशो विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अन् इति प्रथमैकवचनान्तम् आदेशबोधकं पदम्। आपि इति सप्तम्येकवचनान्तं पदम्। अकः इति षष्ठ्येकवचनान्तं पदम्। नास्ति कः यस्मिन् सः अक्, तस्य अकः इति बहुव्रीहिसमासः। इदमो मः इति सूत्रात् इदमः इति षष्ठ्यन्तं पदम् अनुवर्तते। षष्ठी चात्र अवयवार्थे वर्तते। इदोऽय् पुंसि इति सूत्रात् इदः इति षष्ठ्यन्तं पदम् अनुवर्तते। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति सप्तम्येकवचनान्तं पदम् अनुवर्तते।

सूत्रे आप् इत्यनेन प्रत्याहारः गृह्यते। टा इत्यस्य आकारम् आरभ्य सप्तमीबहुवचने सुप्प्रत्ययस्य पकारम् आदाय आप् इति प्रत्याहारः। तेन आप् इत्यनेन तृतीयाविभक्तितः सप्तमीविभक्तिं यावत् यावन्तः प्रत्ययाः सन्ति तेषां ग्रहणं भवति। तेन सूत्रस्य सरलार्थः भवति तृतीयादिविभक्तौ परे सति ककाररहितस्य इदम्-शब्दस्य अवयवभूतस्य इद्भागस्य स्थाने अन् इति आदेशो भवति इति। अयं च आदेशः अनेकाल् भवति। तेन अनेकाल्शित् सर्वस्य इति सूत्रेण सम्पूर्णस्य इद्भागस्य स्थाने भवति।

अकः इत्यस्य तात्पर्यं तावत् – अव्ययसर्वनाम्नामकच् प्राक्टेः इति सूत्रेण सर्वनामसंज्ञकस्य इदम्-शब्दस्य यः टिभागः अम् इति ततः पूर्वम् अकच् इति आदेशे अनुबन्धलोपे इदकम् इति भवति। एकदेशविकृतन्यायेन इदम् इत्यनेन अकच्सहितः इदकम् इत्यपि गृह्यते। अकः इति ग्रहणात् ककाररहितस्य इदमः इद्भागस्य अन् न भवति।

**सूत्रार्थसमन्वयः** - इद आ इति स्थिते प्रस्तुतसूत्रेण इद्भागस्य स्थाने अन् इति सर्वादेशे अन् अ आ इति जाते टाङसिङसामिनात्स्याः इति सूत्रेण टा-इत्यस्य स्थाने इनादेशे अन् अ इन इति जाते आद्गुणः इति सूत्रेण अकार-इकारयोः स्थाने गुणे एकारे वर्णमेलने अनेन इति रूपं सिद्धम्।

इदम्-शब्दात् तृतीयाद्विवचनविवक्षायां भ्याम्प्रत्यये इदम् भ्याम् इति स्थिते त्यदादीनामः इति सूत्रेण इदम्-शब्दस्य मकारस्य स्थाने अकारे, अतो गुणे इति सूत्रेण पररूपे इद भ्याम् इति भवति। ततः अनाप्यकः इति सूत्रेण इद्भागस्य स्थाने अन् इति सर्वादेशे प्राप्ते तस्य अपवादरूपेण अग्रिमं सूत्रं प्रवर्तते –

## [ १६.६] हलि लोपः। (७.२.११३)

**सूत्रार्थः** – अककारस्य इदमः इदः लोपः आपि हलादौ।

**सूत्रव्याख्या** - सूत्रेणानेन इद्भागस्य लोपः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे पदद्वयं वर्तते। हलि इति सप्तम्येकवचनान्तं पदम्। लोपः इति प्रथमैकवचनान्तं पदम्। अनाप्यकः इति सूत्रात् अकः इति षष्ठ्यन्तम्, इदमो मः इति सूत्रात् इदमः इति षष्ठ्येकवचनान्तं, इदोऽय् पुंसि इति सूत्रात् इदः इति षष्ठ्यन्तम्, अनाप्यकः इति सूत्रात् आपि इति सप्तम्यन्तं तथा अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति सप्तम्यन्तं पदम् अनुवर्तते। हलि इति विभक्तौ इति पदस्य विशेषणं भवति। हलि इति सप्तम्यन्तं पदम्, अल् च अस्ति। तेन यस्मिन्विधिस्तदादावल्ग्रहणे इति सूत्रेण तदादिविधौ हलादौ विभक्तौ इति अर्थः आयाति। सूत्रस्य अर्थः भवति ककाररहितस्य (अकच्प्रत्ययरहितस्य) इदम्-शब्दस्य अवयवभूतः यः इद्भागः तस्य लोपः भवति तृतीयादिहलादौ विभक्तौ परतः इति।

अनाप्यकः इति सूत्रस्य अपवादभूतम् इदं सूत्रम्।

**सूत्रार्थसमन्वयः** - इद भ्याम् इति स्थिते भ्याम् इति तृतीयाविभक्तेः द्विवचनम् अस्ति, हलादिरपि अस्ति। तस्मिन् परे सति अनाप्यकः इति सूत्रं प्रबाध्य हलि लोपः इति सूत्रेण इद्भागस्य लोपः प्राप्नोति। परन्तु अयं लोपः अलोऽन्त्यस्य इति परिभाषया इद्-इत्यत्र अन्तिमः यः दकारः तस्यैव स्थाने भवति। परन्तु नियमः अस्ति अनर्थके अलोऽन्त्यस्य इति परिभाषा न प्रवर्तते। (नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे इति।) कः सार्थकः कश्च अनर्थकः इति विषये अपि अस्ति कश्चित् विधिः – समुदायो हि अर्थवान्, तस्यैकदेशः अनर्थकः इति। अर्थात् यः समुदायः भवति स एव सार्थकः भवति। समुदायस्य एकदेशः यः भवति सः निरर्थकः भवति। अयं नियमः स्वीक्रियते चेत् इद् इति समुदायः अर्थवान् भवति, इद् इति समुदायस्य एकदेशः द्- इति भागः अनर्थकः। तस्मात् इद् इति सम्पूर्णस्य समुदायस्य सार्थकस्यैव लोपः भवति, न तु निरर्थकस्य इद्भागस्य अवयवभूतस्य दकारस्य। तेन इद्भागस्य सम्पूर्णस्य लोपे अ भ्याम् इति जाते सुपि च इति सूत्रेण अकारस्य दीर्घः प्राप्नोति। परन्तु

इदं सूत्रम् अत्र न प्रवर्तयितुं शक्यते। सुपि च इति सूत्रस्य अर्थः भवति यञादौ सुपि अदन्तस्य अङ्गस्य दीर्घः भवति इति। परन्तु अ भ्याम् इत्यत्र अकारः अदन्तः अङ्गः न भवति। तस्मात् अग्रिमं सूत्रं प्रवर्तते –

## [ १६.७] आद्यन्तवदेकस्मिन्। (१.१.२०)

**सूत्रार्थः** – एकस्मिन् क्रियमाणं कार्यम् आदौ इव अन्ते इव स्यात्।

**सूत्रव्याख्या** -सूत्रेणानेन एकस्मिन् आद्यन्तवदतिदेशः भवति। अतः अतिदेशसूत्रमिदम्। अतिदेशसूत्रस्य लक्षणं तावत् वतिघटितत्वम् अतिदेशत्वम् इति। सूत्रेऽस्मिन् पदद्वयं वर्तते। आद्यन्तवदिति अव्ययपदम्। एकस्मिन् इति सप्तम्येकवचनान्तं पदम्। आदिश्च अन्तश्च आद्यन्तौ इति इतरेतरद्वन्द्वसमासः। आद्यन्तयोरिव इति आद्यन्तवत्, तत्र तस्येव इति सूत्रेण वतिप्रत्ययः अत्र। सूत्रार्थो भवति आदौ इव अन्ते इव एकस्मिन्नपि कार्यं भवति इति।

आदिशब्दः अन्तशब्दश्च सापेक्षवाचकः। अर्थात् अन्यम् अपेक्षते शब्दद्वयम्। महाभाष्यकारः कथयति यस्मात्पूर्वं नास्ति परमस्ति स आदिरित्युच्यते। यस्मात्पूर्वमस्ति परञ्च नास्ति सोऽन्त इत्युच्यते इति। अर्थात् यस्मात् वर्णात् पूर्वं कोऽपि वर्णः नास्ति परन्तु परम् अस्ति स वर्णः आदिः इत्युच्यते। यस्मात् वर्णात् पूर्वं वर्णः अस्ति, परं कोऽपि वर्णः नास्ति सः अन्तः इत्युच्यते।

एतादृशे आदौ अन्ते च विधीयमानं कार्यम् एकस्मिन् वर्णे न प्राप्नोति। यतो हि एक एव वर्णः तिष्ठति चेत् स तस्मात् पूर्वं वा परं वा कस्यापि वर्णस्य अभावात् स आदिः अपि न भवति, अन्तः अपि न भवति। अतः एकस्मिन् वर्णे अपि यथा आद्यन्तवत् कार्यं स्यात् तदर्थं सूत्रमिदं प्रणीतं पाणिनिमहर्षिणा।

**सूत्रार्थसमन्वयः** - रामाभ्याम् इत्यादीनि इह उदाहरणानि। तथाहि राम भ्याम् इत्यत्र रामशब्दस्य अदन्तः अङ्गः (र् आ म् अ इति अकारात् पूर्वं वर्णानां स्थितिदर्शनात्) अस्ति। तस्मात् सुपि च इति सूत्रेण अकारस्य दीर्घे रामाभ्याम् इति रूपं भवति। एवमेव अ भ्याम् इति स्थिते केवलस्य अकारस्यापि प्रस्तुतसूत्रबलात् अदन्तात्वात् सुपि च इति सूत्रेण दीर्घे आभ्याम् इति रूपं सिद्धम्।

इदम्-शब्दात् तृतीयाबहुवचनविवक्षायां भिस्प्रत्यये इदम् भिस् इति स्थिते त्यदादीनामः इति सूत्रेण इदम्-शब्दस्य मकारस्य स्थाने अकारे, अतो गुणे इति पररूपे च कृते इद भिस् इति भवति। ततः हलि लोपः इति सूत्रेण इद्भागस्य लोपे अ भिस् इति जाते अतो भिस ऐस् इति सूत्रेण भिसः स्थाने ऐस् इति आदेशे प्राप्ते तस्य निषेधकरूपेण अग्रिमं सूत्रं प्रवर्तते -

## [ १६.८] नेदमदसोरकोः। (७.१.११)

**सूत्रार्थः** – अककारयोः इदमदसोः भिस ऐस् न।

**सूत्रव्याख्या** - सूत्रेणानेन भिसः स्थाने ऐस् इति आदेशः निषिद्ध्यते। अतः निषेधसूत्रमिदम्। सूत्रे अस्मिन् त्रीणि पदानि सन्ति। न इति अव्ययपदम्। इदमदसोः इति षष्ठीद्विवचनान्तं पदम्। षष्ठी चात्र सम्बन्धार्थे वर्तते। अकोः इत्यपि षष्ठीद्विवचनान्तं पदम्। अतो भिस ऐस् इति सूत्रात् भिसः इति षष्ठ्येकवचनान्तम्, ऐस् इति प्रथमान्तं च पदम् अनुवर्तते। इदम् च अदस् च इति विग्रहे

इतरेतरद्वन्द्वसमासे इदमदसौ इति रूपं, तयोः इदमदसोः इति। नास्ति कः ययोस्तौ अकौ, तयोः अकोः इति बहुव्रीहिसमासः। सूत्रार्थो भवति ककाररहितस्य इदम्-शब्दस्य अदस्-शब्दस्य च सम्बन्धी यः भिस्प्रत्ययः तस्य स्थाने ऐस् इति आदेशः न भवति इति।

तथाहि अ भिस् इति स्थिते प्रस्तुतसूत्रेण भिसः स्थाने ऐस् इति आदेशः निषिध्यते। ततः बहुवचने झल्येत् इति सूत्रेण झलादौ बहुवचने भिस्प्रत्यये परे अकारस्य एकारे ए भिस् इति जाते सकारस्य रुत्वे विसर्गे च कृते वर्णसम्मेलने एभिः इति रूपम्।

इदम्-शब्दस्य चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये अनुबन्धलोपे इदम् ए इति स्थिते त्यदादीनामः इति सूत्रेण मकारस्य अकारे, अतो गुणे इति सूत्रेण पररूपे इद ए इति स्थितिः आगच्छति। ततः सर्वनाम्नः स्मै (७.१.१४) इति सूत्रेण एकारस्य (ङेप्रत्ययस्य) स्थाने स्मै इति आदेशः, अनाप्यकः (७.२.११२) इति सूत्रेण इद्-भागस्य स्थाने अन् इति आदेशः च युगपत् प्राप्नोति। द्वयोः सूत्रयोः मध्ये अनाप्यकः इति परं सूत्रम्। तेन विप्रतिषेधे परं कार्यम् इति परिभाषया अनाप्यकः इति सूत्रेण अन् इति आदेशः प्राप्नोति। परन्तु तत्कार्यम् अनिष्टम्। तस्मात् परिभाषा प्रवर्तते –

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः इति। परिभाषाया अस्याः तात्पर्यं तावत् पूर्वसूत्रापेक्षया परनित्यान्तरङ्गापवादसूत्राणां, परसूत्रापेक्षया नित्यान्तरङ्गापवादसूत्राणां, नित्यसूत्रापेक्षया अन्तरङ्गापवादसूत्राणाम्, अन्तरङ्गसूत्रापेक्षया च अपवादसूत्रस्य बलवत्त्वं स्वीकर्तव्यम्।

इद ए इत्यत्र अनाप्यकः यद्यपि परसूत्रं तथापि सर्वनाम्नः स्मै इति सूत्रं नित्यसूत्रम्। परसूत्रात् नित्यसूत्रं बलवत् भवति। कस्मिंश्चित् कार्ये कृते अकृते वा यदि किमपि कार्यं प्रवर्तते तदा तत्सूत्रं नित्यसूत्रं भवति। तथाहि अनाप्यकः इति सूत्रेण अन् इति आदेशे कृते अपि सर्वनाम्नः स्मै इति सूत्रं प्रवर्तते, अन् इति आदेशे अकृते अपि स्मै इति आदेशः प्रवर्तते। परन्तु स्मै इति आदेशे कृते तस्य हलादित्वात् अनाप्यकः इति सूत्रं न प्रवर्तते। अतः सर्वनाम्नः स्मै इति नित्यसूत्रम्। तस्मात् अनेन सूत्रेण आदौ स्मै इति आदेशे इद स्मै इति जाते हलि लोपः इति सूत्रेण इद्भागस्य लोपे अस्मै इति रूपं सिद्धम्।

इदम्-शब्दात् पञ्चम्येकवचनविवक्षायां ङसिप्रत्यये अनुबन्धलोपे इदम् अस् इति स्थिते त्यदाद्यत्वे, पररूपे च इद अस् इति जाते ङसिङ्योः स्मात्स्मिनौ इति सूत्रेण ङसिप्रत्ययस्य स्थाने स्मात् इति आदेशे इद स्मात् इति भवति। ततः हलि लोपः इति सूत्रेण इदम्-शब्दस्य इद्भागस्य लोपे वर्णमेलने अस्मात् इति रूपं साधु।

इदम्-शब्दात् षष्ठ्येकवचनविवक्षायां ङस्प्रत्यये अनुबन्धलोपे इदम् अस् इति स्थिते पूर्ववत् त्यदाद्यत्वे पररूपे च कृते इद अस् इति जाते टाङसिङसामिनात्स्याः इति सूत्रेण अस्प्रत्ययस्य (ङस्प्रत्ययस्य) स्थाने स्य-इति आदेशे इद स्य इति भवति। ततः हलि लोपः इति सूत्रेण इदम्शब्दस्य इद्भागस्य लोपे वर्णसम्मेलने अस्य इति रूपं सिद्धम्।

इदम्-शब्दात् षष्ठीद्विवचनविवक्षायाम् ओस्प्रत्यये त्यदाद्यत्वे पररूपे च इद ओस् इति जाते अनाप्यकः इति सूत्रेण इद्भागस्य स्थाने अन् इति आदेशे अन् अ ओस् इति भवति। ततः ओसि च इति

सूत्रेण अकारस्य स्थाने एकारे अने ओस् इति जाते, एचोऽयवायावः इति सूत्रेण एकारस्य स्थाने अयादेशे अन् अय् ओस् इति जाते सकारस्य रुत्वे विसर्गे च कृते वर्णमेलने अनयोः इति रूपं सिध्यति।

इदम्-शब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये इदम् आम् इति स्थिते त्यदाद्यत्वे, पररूपे च इद आम् इति जाते, आमि सर्वनाम्नः सुट् इति सूत्रेण आम्प्रत्ययस्य सुट्-इति आगमे अनुबन्धलोपे, सुटः टित्त्वात् आद्यन्तौ टकितौ इति सूत्रेण तस्य आद्यावयवे इद स् आम् इति भवति। ततः हलादौ विभक्तौ परतः (साम्) हलि लोपः इति सूत्रेण इद्भागस्य लोपे अ साम् इति जाते बहुवचने झल्येत् इति सूत्रेण अकारस्य एकारे, आदेशप्रत्यययोः इति सूत्रेण सकारस्य मूर्धन्यादेशे षकारे एषाम् इति रूपं सिद्धम्।

इदम्-शब्दस्य सप्तम्येकवचनविवक्षायां ङिप्रत्यये अनुबन्धलोपे इदम् इ इति स्थिते त्यदाद्यत्वे पररूपे च कृते इद इ इति भवति। ततः ङसिङ्योः स्मात्स्मिनौ इति सूत्रेण इ इत्यस्य (ङिप्रत्ययस्य) स्थाने स्मिन् इत्यादेशे इद स्मिन् इति स्थितिः आगच्छति। ततः हलादौ स्मिन्-प्रत्यये परे हलि लोपः इति सूत्रेण इद्भागस्य लोपे वर्णमेलने अस्मिन् इति रूपं सिद्धम्।

इदम्-शब्दस्य सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये अनुबन्धलोपे इदम् सु इति स्थिते पूर्ववत् त्यदाद्यत्वे, पररूपे च कृते इद सु इति भवति। ततः हलादौ सुप्रत्यये परे हलि लोपः इति सूत्रेण इद्भागस्य लोपे अ सु इति जाते बहुवचने झल्येत् इति सूत्रेण अकारस्य एकारे, आदेशप्रत्यययोः इति सूत्रेण सकारस्य षकारे एषु इति रूपं सिद्धम्।

इदम्-शब्दस्य द्वितीयाविभक्तौ, टाप्रत्यये, ओस्प्रत्यये च कश्चित् विशेषः अवलोक्यते। तत्र रूपद्वयं भवति। अधिकजिज्ञासवः लघुसिद्धान्तकौमुदीग्रन्थं वैयाकरणसिद्धान्तकौमुदीग्रन्थं वा पश्यन्तु।

## स्त्रीलिङ्गे इदम्-शब्दः

स्त्रीलिङ्गे इदम्-शब्दात् सुप्रत्यये अनुबन्धलोपे इदम् स् इति स्थिते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.९] यः सौ। (७.२.११०)

**सूत्रार्थः** – इदमः दस्य यः।

**सूत्रव्याख्या** - सूत्रेणानेन य इति आदेशः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। यः इति प्रथमैकवचनान्तं, सौ इति सप्तम्येकवचनान्तम्। इदमो मः इति सूत्रात् इदमः, दश्च इति सूत्रात् दः चेति षष्ठ्येकवचनान्तं पदद्वयम् अनुवर्तते। इदमः इत्यत्र षष्ठी अवयवे वर्तते। दः इत्यत्र षष्ठी स्थानेयोगा इति परिभाषाबलात् स्थाने इति पदम् आगच्छति। य इत्यत्र अकारः उच्चारणार्थः। सूत्रार्थः भवति इदम्-शब्दस्य अवयवभूतस्य दकारस्य स्थाने य् इति आदेशः भवति इति।

**विशेषः** – पुंलिङ्गे क्लीबलिङ्गे च इदं सूत्रं न प्रवर्तते। तथाहि पुंलिङ्गे इदोऽय् पुंसि इति सूत्रेण इद्-भागस्य स्थाने अय् इति आदेशः भवति। क्लीबलिङ्गे स्वमोर्नपुंसकात् इति सूत्रेण सुप्रत्ययस्य लुक् भवति। लुकि सति न लुमताङ्गस्य इति सूत्रेण प्रत्ययलक्षणं न भवति।

**सूत्रार्थसमन्वयः** – इदम् स् इति स्थितिः। अत्र प्रस्तुतसूत्रेण सुप्रत्यये परे सति इदम्-शब्दस्य अवयवभूतस्य दकारस्य स्थाने य् इति आदेशे इय् अ म् स् इति भवति। ततः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण अपृक्तसंज्ञकस्य स्-इत्यस्य लोपे इयम् इति रूपम्।

अस्मिन् भागे इदम्-शब्दस्य स्त्रीलिङ्गे अन्यानि रूपाणि तथा क्लीबलिङ्गे रूपाणि साधितानि। जिज्ञासूनां छात्राणां कृते अयं भागः उपकाराय भवेत्।

## इदम्-शब्दस्य स्त्रीलिङ्गे अन्यानि रूपाणि -

इदम् औ इत्यत्र त्यदादीनामः इति सूत्रेण त्यदाद्यत्वे, पररूपे इद औ इति भवति। ततः स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इति सूत्रेण टापि, अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे इदा औ इति जाते दश्च इति सूत्रेण दकारस्य मकारे, औङ आपः इति सूत्रेण औकारस्य स्थाने शी-इत्यादेशे अनुबन्धलोपे इमा ई इति जाते, आद्गुणः इति सूत्रेण आकार-ईकारयोः स्थाने गुणे इमे इति रूपम्।

इदम्-शब्दात् जसि अनुबन्धलोपे इदम् अस् इति स्थिते पूर्ववत् प्रक्रियाकार्ये इमा अस् इति जाते प्रथमयोः पूर्वसवर्णः इति सूत्रेण प्राप्तः पूर्वसवर्णदीर्घः दीर्घाज्जसि च इति सूत्रेण निषिध्यते। ततः अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे सकारस्य रुत्वे विसर्गे च इमाः इति रूपम्।

इदम् अम् इति स्थिते पूर्ववत् प्रक्रियाकार्ये इमा अम् इति जाते अमि पूर्वः इति सूत्रेण पूर्वरूपैकादेशे इमाम् इति रूपम्।

इदम् अस् (शस्) इति स्थिते पूर्ववत् प्रक्रियाकार्ये इमा अस् इति जाते प्रथमयोः पूर्वसवर्णः इति सूत्रेण पूर्वसवर्णदीर्घे इमाः इति रूपम्।

इदम् आ (टा) इति स्थिते त्यदाद्यत्वे पररूपे, अजाद्यतष्टाप् इत्यनेन टापि प्रक्रियाकार्ये इदा आ इति जाते अनाप्यकः इति सूत्रेण इदम्-शब्दस्य इद्-भागस्य स्थाने अन्-इति आदेशे अना आ इति भवति। ततः आङि चापः इति सूत्रेण नकारोत्तरस्य आकारस्य स्थाने एकारे अने आ इति जाते, एचोऽयवायावः इति सूत्रेण एकारस्य स्थाने अयादेशे वर्णमेलने अनया इति रूपम्।

इदम् भ्याम् इत्यत्र त्यदाद्यत्वे पररूपे इद भ्याम् इति जाते, अजाद्यतष्टाप् इत्यनेन टापि प्रक्रियाकार्ये इदा भ्याम् इति जाते हलि लोपः इति सूत्रेण इद्-भागस्य लोपे आभ्याम् इति रूपम्।

इदम् भिस् इत्यत्रापि पूर्ववत् प्रक्रियाकार्ये इदा भिस् इति जाते हलि लोपः इति सूत्रेण इद्-भागस्य लोपे, सकारस्य रुत्वे विसर्गे च आभिः इति रूपम्।

इदम्-शब्दात् ङेप्रत्यये अनुबन्धलोपे इदम् ए इति स्थिते त्यदाद्यत्वे पररूपे, टापि अनुबन्धलोपे सवर्णदीर्घे च इदा ए जाते इदम् इति शब्दस्य सर्वादिगणे पाठात् एकदेशविकृतन्यायेन इदा इत्यस्यापि सर्वनामसंज्ञायां सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रेण एकारस्य स्थाने स्याट् इति आगमे तस्य टित्त्वात् आद्यावयवे अनुबन्धलोपे, आपः ह्रस्वे च इद स्या ए इति जाते वृद्धिरेचि इति सूत्रेण वृद्धौ इद स्यै इति जाते, हलि लोपः इति सूत्रेण इद्-भागस्य लोपे वर्णमेलने अस्यै इति रूपम्।

इदम् अस् (ङसि) इति स्थिते पूर्ववत् प्रक्रियाकार्ये इदा अस् इति जाते, पूर्ववत् सर्वनामसंज्ञायां कृतायां, स्याडागमे, आपः ह्रस्वे च कृते इद स्या अस् इति जाते अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे इद स्यास् इति जाते, हलि लोपः इत्यनेन इद्भागस्य लोपे, सकारस्य रुत्वे विसर्गे च कृते वर्णमेलने अस्याः इति रूपम्।

इदम् ओस् इति स्थिते पूर्ववत् प्रक्रियाकार्ये इदा ओस् इति जाते, अनाप्यकः इति सूत्रेण इद्-भागस्य स्थाने अनादेशे अन् आ ओस् इति जाते आङि चापः इति सूत्रेण आपः एकारे अने ओस् इति जाते, एचोऽयवायावः इति सूत्रेण एकारस्य स्थाने अयादेशे, सकारस्य रुत्वे विसर्गे च कृते अनयोः इति रूपम्।

इदम् आम् इति स्थिते पूर्ववत् प्रक्रियाकार्ये इदा आम् इति जाते सर्वनामसंज्ञायाम् आमि सर्वनाम्नः सुट् इति सूत्रेण सुडागमे अनुबन्धलोपे इदा स् आम् इति जाते, साम् इति हलादौ प्रत्यये परे सति हलि लोपः इति सूत्रेण इद्-भागस्य लोपे आसाम् इति रूपम्।

इदम् इ (ङि) इति स्थिते पूर्ववत् प्रक्रियाकार्ये इदा इ जाते ङेराम्नद्याम्नीभ्यः इति सूत्रेण ङिप्रत्ययस्य स्थाने आम्-इत्यादेशे सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रेण आमः स्याडागमे अनुबन्धलोपे, आपः ह्रस्वे च इद स्या आम् इति भवति। ततः हलि लोपः इत्यनेन इद्-भागस्य लोपे अ स्या आम् इति जाते, अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे अस्याम् इति रूपम्।

इदम् सु (सुप्) इति स्थिते पूर्ववत् प्रक्रियाकार्ये इदा सु इति जाते, हलादौ सुप्प्रत्यये परे सति हलि लोपः इति सूत्रेण इद्-भागस्य लोपे आसु इति रूपं सिद्धम्।

स्त्रीलिङ्गे इदम्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | इयम् | इमे | इमाः |
| **द्वितीयायाम्** | इमाम् | इमे | इमाः |
| **तृतीयायाम्** | अनया | आभ्याम् | आभिः |
| **चतुर्थ्याम्** | अस्यै | आभ्याम् | आभ्यः |
| **पञ्चम्याम्** | अस्याः | आभ्याम् | आभ्यः |
| **षष्ठ्याम्** | अस्याः | अनयोः | आसाम् |
| **सप्तम्याम्** | अस्याम् | अनयोः | आसु |

## क्लीबलिङ्गे इदम्-शब्दस्य रूपाणि

क्लीबलिङ्गे इदम्-शब्दात् सुप्रत्यये स्वमोर्नपुंसकात् इति सूत्रेण सुप्रत्ययस्य लोपे इदम् इति रूपम्।

इदम् औ इति स्थिते त्यदाद्यत्वे, पररूपे च कृते इद औ इति स्थितिः भवति। ततः नपुंसकाच्च इति सूत्रेण औ-इत्यस्य स्थाने अनेकाल्शित् सर्वस्य इति परिभाषया शी इति सर्वादेशे अनुबन्धलोपे इद ई

इति भवति। ततः आद्गुणः इति सूत्रेण गुणे एकारे, दश्च इति सूत्रेण दकारस्य स्थाने मकारे इमे इति रूपम्।

इदम् अस् (जस्) इति स्थिते पूर्ववत् प्रक्रियाकार्ये इद अस् इति जाते, जश्शसोः शिः इति सूत्रेण जसः स्थाने शि-इत्यादेशे अनुबन्धलोपे इद इ इति भवति। ततः मिदचोऽन्त्यात्परः इति परिभाषाबलात् नपुंसकस्य झलचः इत्यनेन इदः अन्त्यात् अचः परं नुमागमे अनुबन्धलोपे इद न् इ इति जाते, सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधाया दीर्घे इदान् इ इति भवति। ततः दश्च इति सूत्रेण दकारस्य स्थाने मकारे इमानि इति रूपम्।

द्वितीयाविभक्तौ अपि एवमेव रूपाणि भवन्ति। अन्यत्र इदम्-शब्दस्य पुंलिङ्गे यथा रूपसिद्धिः तथैव भवति।

क्लीबलिङ्गे इदम्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | इदम् | इमे | इमानि |
| द्वितीयायाम् | इदम् | इमे | इमानि |
| अन्यानि रूपाणि पुंलिङ्गवत् | | | |

## पाठगतप्रश्नाः-१

१. इदमो मः इति कस्यापवादः?

२. अतो गुणे इति सूत्रस्यार्थं लिखत।

३. इदमः दकारस्य स्थाने मकारविधायकं सूत्रं किम्? तस्य अर्थं लिखत।

४. अनाप्यकः इति सूत्रे आप् इत्यनेन कस्य ग्रहणम्?

५. अलोऽन्त्यस्य इति परिभाषा कुत्र न प्रवर्तते?

६. आद्यन्तवदेकस्मिन् इत्यस्य एकं फलं लिखत।

७. आद्यन्तशब्दाभ्यां किम् अवगम्यते?

८. यः सौ इति सूत्रस्य अर्थं लिखत।

## राजन्-शब्दः

राजृ दीप्तौ इति अत्र धातुः। राजते दीप्यते इति अर्थे राज्धातोः कनिन्प्रत्यये राजन् इति शब्दः निष्पद्यते। राजन्शब्दस्य अर्थः नृपः। राजन्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे राजन् स् इति स्थिते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (६.१.६८) इति सूत्रेण सुलोपः, सर्वनामस्थाने

चाऽसम्बुद्धौ (६.४.८) इति सूत्रेण उपधादीर्घश्च युगपत् प्राप्नोति। तत्र परत्वात् उपधादीर्घे राजान् स् ति जाते ततः सुलोपे राजान् इति भवति। ततः न लोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपे राजा इति रूपं निष्पद्यते।

राजन् औ इति स्थिते सर्वनामस्थाने चाऽसम्बुद्धौ इति सूत्रेण उपधादीर्घे वर्णमेलने राजानौ इति रूपम्।

राजन्-शब्दात् जस्प्रत्यये अनुबन्धलोपे राजन् अस् इति स्थिते सर्वनामस्थाने चाऽसम्बुद्धौ इति सूत्रेण उपधादीर्घे सकारस्य रुत्वे विसर्गे च कृते राजानः इति रूपम्।

राजन्-शब्दात् सम्बोधनैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे राजन् स् इति स्थिते एकवचनं सम्बुद्धिः इति सूत्रेण सु-इत्यस्य सम्बुद्धिसंज्ञायां सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधायाः दीर्घः न भवति। ततः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारस्य लोपे राजन् इति स्थितिः आयाति। अत्र नकारः पदान्ते तिष्ठति। तस्मात् सः नकारः प्रातिपदिकान्तः भवति। तेन च न लोपः प्रातिपदिकान्तस्य इति सूत्रेण नलोपः प्राप्नोति। तत्तु अनिष्टम्। अतः तस्य निषेधकरणाय अग्रिमं सूत्रं प्रवर्तते –

## [ १६.१० ] न ङिसम्बुद्ध्योः। (८.२.८)

**सूत्रार्थः –** नस्य लोपः न ङौ सम्बुद्धौ च।

**सूत्रव्याख्या -** अनेन सूत्रेण नकारलोपस्य निषेधः क्रियते। अतः निषेधसूत्रम् इदम्। अस्मिन् सूत्रे न, ङिसम्बुद्ध्योः चेति पदद्वयं वर्तते। तत्र न इति अव्ययं पदम्। ङिसम्बुद्ध्योः इति सप्तमीद्विवचनान्तं पदम्। न लोपः प्रातिपदिकान्तस्य इति सूत्रात् न इति लुप्तषष्ठीकं पदम्, लोपः इति प्रथमान्तं च पदम् अनुवर्तते। ङिसम्बुद्ध्योः इत्यत्र इतरेतरद्वन्द्वसमासः। ङिश्च सम्बुद्धिश्च इति विग्रहे ङिसम्बुद्धी इति रूपं, तयोः ङिसम्बुद्ध्योः इति। सूत्रार्थो भवति ङिप्रत्यये सम्बुद्धिसंज्ञके प्रत्यये च परे नकारस्य लोपः न भवति इति।

**उदाहरणम् –** ङौ परे इत्यस्य उदाहरणं वेदे एव प्राप्यते। एतस्य उदाहरणं तावत् परमे व्योमन् इति। अत्र प्रत्ययलक्षणेन ङिप्रत्ययं परं स्वीकृत्य तस्मिन् परे सति व्योमन् इत्यत्र नकारस्य लोपः प्रस्तुतसूत्रेण निषिध्यते।

सम्बुद्धौ परे इत्यस्य उदाहरणं तावत् हे राजन् इति।

**सूत्रार्थसमन्वयः -** राजन् इति स्थिते सम्बुद्धिसंज्ञकः सुप्रत्ययः यद्यपि लुप्तः, तथापि प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रेण सम्बुद्धिसंज्ञकः सुप्रत्ययः परम् अस्ति इति मत्वा तस्मिन् परे सति नकारस्य नलोपः प्रातिपदिकान्तस्य इति सूत्रेण लोपे प्राप्ते प्रस्तुतसूत्रेण निषेधे राजन् इत्येव रूपं भवति।

राजन्-शब्दात् अम्प्रत्यये सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधादीर्घे वर्णसम्मेलने राजानम् इति रूपम्।

राजन्-शब्दात् शसि अनुबन्धलोपे राजन् अस् इति स्थिते यचि भम् इति सूत्रेण अजादौ प्रत्यये परे राजन्-इत्यस्य भसंज्ञायाम् अल्लोपोऽनः इति सूत्रेण अन्-भागस्य (राज् अन्) अकारस्य लोपे राज् न् अस् इति जाते स्तोः श्चुना श्चुः इति सूत्रेण नकारस्य श्चुत्वे ञकारे राज् ञ् अस् इति जाते सस्य रुत्वे विसर्गे च कृते वर्णमेलने राज्ञः इति रूपम्।

राजन्शब्दात् टाप्रत्यये अनुबन्धलोपे राजन् आ इति स्थिते पूर्ववत् राजन् इत्यस्य भसंज्ञायाम् अल्लोपोऽनः इति सूत्रेण अनः अकारस्य लोपे राज् न् आ इति जाते, स्तोः श्चुना श्चुः इति सूत्रेण नकारस्य श्चुत्वे ञकारे वर्णमेलने राज्ञा इति रूपम्।

राजन् भ्याम् इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण राजन् इत्यस्य पदसंज्ञा भवति। ततः नलोपः प्रातिपदिकान्तस्य इत्यनेन नकारस्य लोपः भवति। तेन राज भ्याम् इति स्थितिः भवति। अस्यां स्थितौ सुपि च इति सूत्रेण अदन्तस्य अङ्गस्य दीर्घः प्राप्नोति। ततः अग्रिमं सूत्रं प्रवर्तते –

## [ १६.११] नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति। (८.२.२)

**सूत्रार्थः –** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपः असिद्धः, नान्यत्र।

**सूत्रव्याख्या -** षड्विधेषु पाणिनीयसूत्रेषु इदं नियमसूत्रम्। सिद्धे सति आरभ्यमाणो विधिः नियमविधिः भवति। अस्मिन् सूत्रे नलोपः, सुप्स्वरसंज्ञातुग्विधिषु, कृति चेति पदत्रयं वर्तते। नलोपः इति प्रथमैकवचनान्तं पदम्। सुप्स्वरसंज्ञातुग्विधिषु इति सप्तमीबहुवचनान्तं पदम्। कृति इति सप्तम्येकवचनान्तं पदम्। पूर्वत्रासिद्धम् इति सूत्रात् असिद्धम् इति प्रथमान्तं पदम् अनुवर्तते। नलोपः इत्यत्र षष्ठीतत्पुरुषसमासः। नस्य लोपः इति अत्र विग्रहवाक्यम्। सुप्स्वरसंज्ञातुग्विधिषु इत्यत्र द्वन्द्वगर्भषष्ठीतत्पुरुषसमासः। सुप् च स्वरश्च संज्ञा च तुक् च इति विग्रहे इतरेतरद्वन्द्वसमासे सुप्स्वरसंज्ञातुकः इति रूपम्। सुप्स्वरसंज्ञातुकां विधयः सुप्स्वरसंज्ञातुग्विधयः इति षष्ठीतत्पुरुषः समासः। तेषु सुप्स्वरसंज्ञातुग्विधिषु इति। कृति इति तुक् इत्यनेन सह एव अन्वेति, अन्यत्र असम्भवात्। सूत्रार्थो भवति सुब्विधौ, स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपः असिद्धः भवति, अन्यत्र न इति सूत्रार्थः। पूर्वत्रासिद्धम् इति सूत्रेण एव असिद्धस्य सिद्धौ सूत्रमिदं नियमयति सुबादिविधौ एव नलोपः असिद्धः, अन्यत्र न इति।

**उदाहरणम् –**

**सुब्विधिः** – सुबाश्रयविधौ नलोपः असिद्धः भवति। अयं सुबाश्रयविधिः द्विविधः भवति – सुपः स्थाने विधिः, सुपि परे विधिः चेति। आदौ राजभिरिति उदाहरणम्। द्वितीयस्य तु राजभ्याम्, राजभ्यः इत्यादीनि उदाहरणानि।

**संज्ञाविधिः –** दण्डिदत्तौ दत्तदण्डिनौ चेत्यादीनि इह उदाहरणानि।

कृति तुग्विधिः – कृति परतः यः तुक् तस्मिन् विधेये नलोपः असिद्धः भवति। वृत्रहभ्यां वृत्रहभिः चेत्यादीनि इह उदाहरणानि।

**सूत्रार्थसमन्वयः** - सुब्विधौ नलोपः असिद्धः इति नियमकरणात् राज भ्याम् इत्यत्र नलोपः प्रातिपदिकान्तस्य इति सूत्रेण विहितः नलोपः असिद्धः भवति। तेन सुपि च इति सूत्रेण दीर्घः न प्रवर्तते। सुपि च इति विधिः सुब्विधिः वर्तते। तेन नकारस्य यद्यपि लोपः जातः, तथापि प्रस्तुतसूत्रबलात् तस्य असिद्धत्वात् सुपि च इति सूत्रं नकारमेव पश्यति। तेन अङ्गस्य अदन्तत्वाभावात् सुपि च इति सूत्रेण दीर्घः न प्रवर्तते। अतः राजभ्याम् इत्येव रूपम्।

सूत्रेण अनेन नियमकरणात् राजाश्वः इत्यत्र नलोपः असिद्धः न भवति। तथाहि अत्र राज्ञः अश्वः इति विग्रहे राजन् अश्व इति जाते नकारस्य लोपे राज अश्व इति जाते अकः सवर्णे दीर्घः इति सूत्रेण दीर्घे राजाश्व इति जाते ततः सुबुत्पत्तौ राजाश्वः इति रूपम्। सवर्णदीर्घविधेः सुब्विधौ अनन्तर्भावात् तस्मिन् कर्तव्ये नलोपः असिद्धः न भवति। तेन सवर्णदीर्घः भवत्येव।

## पाठगतप्रश्नाः-२

९. राजन् स् इति स्थिते किं सूत्रम् आदौ प्रवर्तते?

१०. सम्बोधने राजन् इत्यत्र नलोपः कुतः न?

११. न ङिसम्बुद्ध्योः इति सूत्रस्य अर्थं लिखत।

१२. राज भ्याम् इत्यवस्थायां सुपि च इति सूत्रं कुतो न प्रवर्तते?

१३. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति इति सूत्रस्य अर्थं लिखत।

१४. राजन्-शब्दस्य सप्तम्येकवचने रूपद्वयं किम्?

१५. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति इति सूत्रे नियमकरणात् किं न भवति?

## मघवत्-शब्दः

मह पूजायाम् इति अत्र धातुः। मह्यते पूज्यते इत्यर्थे कनिन्प्रत्यये प्रक्रियाकार्ये मघवन् इति शब्दः निष्पद्यते। अर्थात् मघवन्-शब्दस्य अर्थः भवति पूज्यः इति। इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः। वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः इति अमरकोशवचनात् मघवन्-शब्दः इन्द्रवाचकः।

## [ १६.१२] मघवा बहुलम्। (६.४.१२८)

**सूत्रार्थः** – मघवन्-शब्दस्य वा तृ इति अन्तादेशः।

**सूत्रव्याख्या** - सूत्रेणानेन तृ इति अन्तादेशः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे पदद्वयं वर्तते। मघवा इत्यत्र षष्ठ्यर्थे प्रथमा विभक्तिः। बहुलम् इत्यपि प्रथमैकवचनान्तं पदम्। अर्वणस्त्रसावनञः इति सूत्रात् तृ इति प्रथमान्तं पदमनुवर्तते। वस्तुतः अत्र प्रथमाविभक्तेः लुक् विहितः।

तृ इत्यत्र ऋकारः अनुनासिकः। तस्मात् उपदेशेऽजनुनासिक इत् इति सूत्रेण तस्य इत्संज्ञा भवति। सूत्रार्थो भवति मघवन्-शब्दस्य स्थाने विकल्पेन तृ इति अन्तादेशः भवति इति।

अयम् आदेशः अलोऽन्त्यस्य इति परिभाषया मघवन्-शब्दस्य नकारस्य स्थाने भवति। अयम् आदेशः अनेकाल् भवति। तेन यद्यपि अनेकाल्शित्सर्वस्य इति सूत्रेण सम्पूर्णस्य मघवन्-शब्दस्य स्थाने प्राप्नोति तथापि नानुबन्धकृतमनेकाल्त्वम् इति परिभाषाबलात् सर्वादेशः न भवति। परिभाषायाः अर्थस्तावत् अनुबन्धेन युक्तं किमपि अनेकाल् न भवति इति।

**सूत्रार्थसमन्वयः** – मघवन्-शब्दस्य नकारस्य स्थाने प्रस्तुतसूत्रेण विकल्पेन तृ इति अन्तादेशे अनुबन्धलोपे मघवत् इति शब्दः निष्पद्यते। अर्थात् यस्मिन् पक्षे तृ-इति अन्तादेशः न भवति तस्मिन् पक्षे मघवन् इति शब्दः। यस्मिन् च पक्षे तृ-इति अन्तादेशः भवति तस्मिन् पक्षे मघवत् इति शब्दः।

मघवत्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे मघवत् स् इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

## [ १६.१३] उगिदचां सर्वनामस्थानेऽधातोः। (७.१.७०)

**सूत्रार्थः** – अधातोः उगितः नलोपिनः अञ्चतेः च नुम् स्यात् सर्वनामस्थाने परे।

**सूत्रव्याख्या** - सूत्रेण अनेन नुम् इति आगमः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे उगिदचाम्, सर्वनामस्थाने, अधातोः चेति त्रीणि पदानि सन्ति। उगिदचाम् इति षष्ठीबहुवचनान्तं पदम्। सर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम्। अधातोः इति षष्ठ्येकवचनान्तं पदम्। इदितो नुम् धातोः इति सूत्रात् नुम् इति प्रथमैकवचनान्तं पदम् अत्र अनुवर्तते। उगिदचाम् इत्यत्र बहुव्रीहिगर्भेतरेतरद्वन्द्वसमासः। उक् इत् येषां ते उगितः इति बहुव्रीहिसमासः। उगितश्च अच् च उगिदचः, तेषाम् उगिदचाम् इति इतरेतरद्वन्द्वसमासः। सूत्रार्थः भवति सर्वनामस्थाने (सु, औ, जस्, अम्, औट्) परे अधातोः उगितः (उ, ऋ, ऌ चेति इत् यस्य) नलोपिनः अञ्चुधातोः स्थाने नुमागमः भवति इति।

सूत्रे अच् शब्देन अच्प्रत्याहारः न स्वीकर्तव्यः। अत्र अच्पदेन नकारलोपी अञ्चु गतिपूजनयोः इति धातुः स्वीक्रियते। अधातोः इति उगितामेव विशेषणं, न तु अञ्चुधातोः। यतो हि अञ्चु इति धातुः। धातोः अधातुः विशेषणं न भवति।

यस्य शब्दस्य उकारः, ऋकारः, ऌकारः वा इत्संज्ञकः, किञ्च स शब्दः धातुसंज्ञकः न भवति चेत् तस्य शब्दस्य स्थाने तथा नलोपिनः अञ्चुधातोः स्थाने नुम् इति आगमः भवति। नुमः मकारः हलन्त्यम् इति सूत्रेण इत्संज्ञकः। उकारश्च उच्चारणार्थः। तेन नकारमात्रम् अवशिष्यते। अयं च आगमः मित्। तस्मात् मिदचोऽन्त्यात्परः इति सूत्रेण अयम् आगमः अन्त्यात् अचः पर एव भवति।

**सूत्रार्थसमन्वयः** - मघवत् स् इति स्थितिः। अत्र मघवत् इति उगित् वर्तते। यतः अत्र नकारस्य स्थाने मघवा बहुलम् इति सूत्रेण तृ इति आदेशः जातः। तृ इत्यत्र ऋकार इत्संज्ञकः। ऋकारश्च उक्प्रत्याहारे अन्तर्भवति। सुप्रत्ययः सुडनपुंसकस्य इति सूत्रेण सर्वनामस्थानसंज्ञकः। तस्मिन् सर्वनामस्थानसंज्ञके सुप्रत्यये परे मघवत्-शब्दस्य प्रस्तुतेन सूत्रेण नुमागमः अन्त्यात् अचः परः भवति। तेन मघव न् त् स् इति भवति। ततः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण अपृक्तसंज्ञकस्य

सकारस्य लोपे मघवन् त् इति भवति। ततः संयोगान्तस्य लोपः इति सूत्रेण तकारस्य लोपे मघवन् इति जाते प्रत्ययलक्षणेन सुप्रत्ययः परम् अस्ति इति मत्वा सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण मघवन् इत्यत्र उपधादीर्घे मघवान् इति रूपं सिद्धम्।

मघवत्-शब्दस्य प्रथमाद्विवचनविवक्षायाम् औप्रत्यये मघवत् औ इति स्थिते प्रस्तुतसूत्रेण नुमागमे अनुबन्धलोपे मघव न् त् औ इति जाते नश्चापदान्तस्य झलि इति सूत्रेण नकारस्य अनुस्वारे मघवं त् औ इति जाते, अनुस्वारस्य ययि परसवर्णः इति सूत्रेण अनुस्वारस्य परसवर्णे नकारे मघवन्तौ इति रूपं सिद्धम्।

मघवत्-शब्दस्य सम्बोधनैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे मघवत् स् इति जाते उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे अनुबन्धलोपे मघवन् त् स् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण अपृक्तसंज्ञकस्य सकारस्य लोपे मघवन् त् इति जाते संयोगान्तस्य लोपः इति सूत्रेण संयोगान्ते स्थितस्य तकारस्य लोपे मघवन् इति भवति। ततः सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधायाः दीर्घः न भवति, सूत्रे असम्बुद्धौ इति निर्देशात्। अत्र च सुप्रत्ययः सम्बुद्धिसंज्ञकः अस्ति, एकवचनं सम्बुद्धिः इति सूत्रबलात्। तेन मघवन् इति रूपम्।

मघवत्-शब्दस्य तृतीयाद्विवचनविवक्षायां भ्याम्प्रत्यये मघवत् भ्याम् इति स्थिते झलां जशोऽन्ते इति सूत्रे तकारस्य जश्त्वे दकारे मघवद्भ्याम् इति रूपम्। भ्यस्प्रत्यये परे अपि अनेनैव सूत्रेण तकारस्य दकारः भवति।

मघवत्-शब्दात् सुपि अनुबन्धलोपे मघवत् सु इति जाते वर्णसम्मेलने मघवत्सु इति रूपम्।

मघवा बहुलम् इति सूत्रेण यः तृ-इति आदेशः विकल्पेन विहितः, तस्य अभावपक्षे सर्वनामस्थानसंज्ञके प्रत्यये परे राजन्शब्दवत् रूपाणि भवन्ति इति।

मघवन्-शब्दस्य द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे मघवन् अस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

## [ १६.१४] श्वयुवमघोनामतद्धिते (६.४.१३३)

**सूत्रार्थः** — अन्नन्तानां भानाम् एषाम् अतद्धिते सम्प्रसारणम्।

**सूत्रव्याख्या** - अनेन सूत्रेण सम्प्रसारणं विधीयते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् श्वयुवमघोनाम्, अतद्धिते चेति पदद्वयं वर्तते। अल्लोपोऽनः इति सूत्रात् अनः इति षष्ठ्येकवचनान्तं पदम् अनाम् इति वचनविपरिणामेन अन्वेति। भस्य इति सूत्रम् अधिकृतम्। तस्य च वचनविपरिणामेन भानाम् इति भवति। वसोः सम्प्रसारणम् इति सूत्रात् सम्प्रसारणम् इति प्रथमैकवचनान्तं विधेयं पदम् अनुवर्तते। श्वा च युवा च मघवा च इति विग्रहे इतरेतरद्वन्द्वसमासे श्वयुवमघवानः इति रूपं, तेषां श्वयुवमघोनाम् इति इतरेतरद्वन्द्वसमासः। न तद्धितः अतद्धितः इति नञ्तत्पुरुषसमासः, तस्मिन् अतद्धिते इति। अतद्धितपदेन तद्धितभिन्नस्य तद्धितसदृशस्य प्रत्ययस्य ग्रहणं भवति। अनाम् इति भानाम् इत्यस्य विशेषणम्। विशेषणत्वात् तदन्तविधौ अन्नन्तानाम् इति लभ्यते। सूत्रार्थो भवति अन्नन्तानां भसंज्ञकानां श्वन्, युवन्,

मघवन् चेति शब्दानां तद्धितभिन्ने प्रत्यये परे सम्प्रसारणं भवति इति सूत्रार्थः। (नञ् - नञ् द्विविधः – पर्युदासः, प्रसज्यश्चेति। अत्र सूत्रे पर्युदासप्रतिषेधः स्वीकृतः। तद्भिन्नः तत्सदृशः पर्युदासः भवति।)

**सूत्रार्थसमन्वयः** - मघवन् अस् इति स्थितिः। अत्र मघवन् शब्दः अन्नन्तः अस्ति, यचि भम् इति सूत्रेण भसंज्ञकः अपि अस्ति। एतस्मात् शब्दात् परं तद्धितभिन्नः शस्प्रत्ययः अपि अस्ति। अतः प्रस्तुतसूत्रेण मघवन्-शब्दस्य वकारस्य सम्प्रसारणे उकारे मघ उ अ न् अस् इति जाते सम्प्रसारणाच्च इति सूत्रेण उकार-अकारयोः स्थाने पूर्वरूपे उकारे मघ उ न् अस् इति भवति। ततः आद् गुणः इति सूत्रेण अकार-उकारयोः स्थाने गुणे एकादेशे मघोन् अस् इति जाते वर्णमेलने मघोनस् इति जाते सकारस्य रुत्वे विसर्गे च मघोनः इति रूपम्।

एवं भसंज्ञास्थले सर्वत्रैव अनेन सूत्रेण सम्प्रसारणं भवति। अन्यत्र भ्यामादिप्रत्ययस्थले राजन्-शब्दवत् नकारस्य न लोपः प्रातिपदिकान्तस्य इति सूत्रेण लोपः भवति।

## पाठगतप्रश्नाः-३

१६. उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रस्य अर्थं लिखत।

१७. उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रे अच्-इत्यनेन कस्य ग्रहणम्?

१८. मघवा बहुलम् इति सूत्रेण किं विधीयते?

१९. मघोनः इत्यत्र सम्प्रसारणं केन सूत्रेण?

२०. मघवन्-शब्दस्य प्रथमैकवचने रूपद्वयं किम्?

## युवन्-शब्दः

यु मिश्रणामिश्रणयोः इति धातोः कनिन्प्रत्यये युवन् इति शब्दः निष्पद्यते। युवन्-शब्दस्य अर्थः युवकः, श्रेष्ठः वेति। सर्वनामस्थानसंज्ञके प्रत्यये परे अस्य राजन्-शब्दवत् रूपाणि।

राजन् अस् (शस्) इति स्थिते श्वयुवमघोनामतद्धिते इति सूत्रेण वकारस्य सम्प्रसारणे उकारे यु उ अन् अस् इति भवति। ततः सम्प्रसारणाच्च इति सूत्रेण उकार-अकारयोः स्थाने पूर्वरूपे यु उन् अस् इति भवति। ततः अकः सवर्णे दीर्घः इति सूत्रेण उकारद्वयस्य स्थाने सवर्णदीर्घे यून् अस् इति स्थितिः आगच्छति। अस्यां स्थितौ श्वयुवमघोनामतद्धिते इति सूत्रेण पुनः यकारस्य स्थाने सम्प्रसारणे कृते इकारः प्राप्नोति। परन्तु तत् अनिष्टं भवति। अतः अग्रिमं सूत्रम् आगच्छति -

### [ १६.१५] न सम्प्रसारणे सम्प्रसारणम्। (६.१.३७)

**सूत्रार्थः** – सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात्।

**सूत्रव्याख्या** -अनेन सूत्रेण सम्प्रसारणं निषिद्ध्यते। अतः निषेधसूत्रम् इदम्। अस्मिन् सूत्रे न, सम्प्रसारणे, सम्प्रसारणं चेति त्रीणि पदानि सन्ति। न इति अव्ययपदम्। सम्प्रसारणे इति

सप्तम्येकवचनान्तं पदं, सम्प्रसारणम् इति प्रथमैकवचनान्तं पदम्। अत्र सम्प्रसारणे इति सप्तमीनिर्देशात् तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषया पूर्वस्य इति पदम् उपतिष्ठते। सूत्रार्थो भवति सम्प्रसारणे कृते पूर्वस्य यणः सम्प्रसारणं न भवति इति।

**सूत्रार्थसमन्वयः** – यून् अस् इति स्थितौ यकारस्य सम्प्रसारणे प्राप्ते अनेन सूत्रेण तन्निषिध्यते। यतो हि युवन् अस् इति स्थिते वकारस्य पूर्वं सम्प्रसारणं विहितम्। एकवारं सम्प्रसारणरूपं कार्यं कृतम्। तस्मात् पुनः पूर्वस्य यणः यकारस्य सम्प्रसारणं प्रस्तुतसूत्रेण निषिद्ध्यते। तेन वर्णमेलने यूनः इति रूपं सिद्धम्।

विचारः – अधुना शङ्का उत्पद्यते युवन् अस् इति स्थितौ श्वयुवमघोनामतद्धिते इति सूत्रेण यकारस्यापि सम्प्रसारणं प्राप्नोति, वकारस्यापि। कस्य पूर्वं सम्प्रसारणं विधेयं, कस्य वा परम् इति निर्दिष्टं नास्ति। तस्मात् पूर्वं यकारस्य सम्प्रसारणं क्रियताम्, ततः परस्य वकारस्य। तेन न सम्प्रसारणे सम्प्रसारणम् इति सूत्रेण निषेधः अपि न कर्तव्यः भवति। एतस्य समाधानरूपेण उच्यते यदि आदौ पूर्वस्य सम्प्रसारणं क्रियते पश्चात् परस्य तदा सूत्रमिदं व्यर्थं भवति। यतो हि सूत्रस्य अस्य अर्थः भवति सम्प्रसारणे कृते पूर्वस्य यणः सम्प्रसारणं न भवति इति। परन्तु आदौ पूर्वस्य एव यणः सम्प्रसारणे कृते कथं सूत्रमिदं प्रवर्तेत? तस्मात् सूत्रमिदं ज्ञापयति यत् आदौ परस्य यण एव सम्प्रसारणं भवति इति। एवं नियमे कृते परस्य यणः सम्प्रसारणे कृते ततः पूर्वस्य प्राप्तं सम्प्रसारणं प्रस्तुतसूत्रेण निषिद्ध्यते।

## पथिन्-शब्दः

पतन्ति गच्छन्ति जना यत्र स इत्यर्थे पत् इति धातोः पतस्थश्च (उ० ४-१२ सू०) इति इनिप्रत्यये तकारस्य च थकारादेशे पथिन् इति शब्दः निष्पद्यते। पथिन्-शब्दस्य अर्थः मार्गः इति। तथाहि उच्यते अमरकोशे भूमिवर्गे "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इति। (श्लोकः - १४)।

पथिन्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे पथिन् स् इति स्थिते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.१६] पथिमथ्यृभुक्षामात् (७.१.८५)

**सूत्रार्थः** – एषाम् आकारः अन्तादेशः स्यात् सौ परे।

**सूत्रव्याख्या** - अनेन सूत्रेण आकाररूपः अन्तादेशः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे पथिमथ्यृभुक्षाम्, आत् चेति पदद्वयं वर्तते। पथिमथ्यृभुक्षाम् इति षष्ठीबहुवचनान्तं पदम्। आत् इति प्रथमैकवचनान्तं पदम्। सावनडुहः इति सूत्रात् सौ इति सप्तम्यन्तं पदम् अत्र अनुवर्तते। पथिमथ्यृभुक्षाम् इत्यत्र इतरेतरद्वन्द्वसमासः। पन्थाश्च मन्थाश्च ऋभुक्षाश्चेति विग्रहे पथिमथ्यृभुक्षाणः इति रूपं, तेषां पथिमथ्यृभुक्षाम् इति। सूत्रार्थो भवति सुप्रत्यये परे सति पूर्वस्य पथिन्, मथिन् तथा ऋभुक्षिन् शब्दस्य आकाररूपः अन्तादेशः भवति इति। अयं यः अन्तादेशः सः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः नकारस्य स्थाने एव भवति।



**सूत्रार्थसमन्वयः** – पथिन् स् इति जाते सुप्रत्यये परे सति पूर्वस्य पथिन्-शब्दस्य यः अन्त्यः अल् तस्य स्थाने आकारे पथि आ स् इति भवति। ततः अग्रिमं सूत्रम् आरभ्यते –

## [ १६.१७] इतोऽत् सर्वनामस्थाने (७.१.८६)

**सूत्रार्थः** – पथ्यादेः इकारस्य अकारः स्यात् सर्वनामस्थाने परे।

**सूत्रव्याख्या** - अनेन सूत्रेण अकाररूपः आदेशः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे इतः, अत्, सर्वनामस्थाने चेति त्रीणि पदानि सन्ति। इतः इति षष्ठ्येकवचनान्तं पदम्। अत् इति प्रथमैकवचनान्तं पदम्। सर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम्। पथिमथ्यृभुक्षामात् इति सूत्रात् पथिमथ्यृभुक्षाम् इति षष्ठीबहुवचनान्तं पदम् अनुवर्तते। सूत्रार्थो भवति सर्वनामस्थानसंज्ञके प्रत्यये परे पथिन्, पथिन्, ऋभुक्षिन् चेति त्रयाणां शब्दानाम् इकारस्य स्थाने अत् इति आदेशः भवति इति। अस्मिन् सूत्रे इतः, अत् च उभयत्रापि तपरकरणं मुखसुखार्थम्।

**उदाहरणम्** – पथि आ स् इति स्थितिः। अत्र स् (सु) सर्वनामस्थानसंज्ञकः। तस्मिन् परे सति पथिन्-शब्दावयवस्य इकारस्य प्रस्तुतसूत्रेण ह्रस्वः अकारः आदिश्यते। तेन पथ् अ आ स् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.१८] थो न्थः (७.१.८७)

**सूत्रार्थः** – पथिमथोः थस्य न्थादेशः सर्वनामस्थाने।

**सूत्रव्याख्या** - सूत्रेण अनेन न्थ इति आदेशः विधीयते। अतः विधिसूत्रम् इदम्। अत्र थः, न्थः चेति पदद्वयम्। थः इत्यत्र षष्ठ्येकवचनम्। न्थः इति प्रथमैकवचनान्तं पदम्। अत्र अकारः उच्चारणार्थः। पथिमथ्यृभुक्षामात् इति सूत्रात् पथिमथिग्रहणम् अनुवर्तते। ऋभुक्षिग्रहणम् अत्र न सम्भवति, तत्र थकारस्य अभावात्। इतोऽत्सर्वनामस्थाने इति सूत्रात् सर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। सूत्रार्थो भवति पथिन्-शब्दस्य मथिन्-शब्दस्य च थस्य न्थ इति आदेशः भवति सर्वनामस्थाने परे इति। न्थ इत्यत्र अकारः उच्चारणार्थः।

**सूत्रार्थसमन्वयः** –पथ् अ आ स् इति स्थितिः। अत्र सर्वनामस्थानसंज्ञकः सुप्रत्ययः (स्) परम् अस्ति। तस्मिन् परे सति प्रस्तुतसूत्रेण पथिन्-शब्दावयवस्य थकारस्य न्थ् इति आदेशे पन्थ् अ आ स् इति जाते अकः सवर्णे दीर्घः इति सूत्रेण अकार-आकारयोः स्थाने आकाररूपदीर्घैकादेशे पन्थास् इति जाते सस्य रुत्वे विसर्गे च पन्थाः इति रूपम्।

पथिन्-शब्दात् द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे पथिन् अस् इति स्थितिः। अत्र शस्प्रत्ययः सर्वनामस्थानसंज्ञकः नास्ति। तस्मात् तस्मिन् परे इतोऽत्सर्वनामस्थाने, सर्वनामस्थाने चाऽसम्बुद्धौ चेति सूत्रद्वयं न प्रवर्तते। ततः अग्रिमं सूत्रं प्रवर्तते –

## [ १६.१९] भस्य टेर्लोपः। (७.१.८८)

**सूत्रार्थः** – भस्य पथ्यादेः टेः लोपः।



**सूत्रव्याख्या** - अनेन सूत्रेण टेर्लोपः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे भस्य, टेः, लोपः चेति पदद्वयं वर्तते। भस्य, टेः चेति पदद्वयं षष्ठ्येकवचनान्तम्। लोपः इति प्रथमैकवचनान्तम्। पथिमथ्यृभुक्षामात् इति सूत्रात् पथिमथ्यृभुक्षाम् इति षष्ठीबहुवचनान्तं पदम् अनुवर्तते। सूत्रार्थो भवति भसंज्ञकस्य पथिन्-शब्दस्य, मथिन्-शब्दस्य तथा ऋभुक्षिन्-शब्दस्य टेः लोपः भवति इति।

**सूत्रार्थसमन्वयः** – पथिन् अस् इति स्थितिः। अत्र यचि भम् इति सूत्रेण पथिन्-शब्दः भसंज्ञकः। तस्मात् प्रस्तुतसूत्रेण पथिन् इत्यत्र टिभागस्य इन्-इत्यस्य लोपे पथ् अस् इति जाते सकारस्य रुत्वे विसर्गे च कृते पथः इति रूपम्।

भ्याम् इत्यादिषु यत्र स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञा भवति तत्र नलोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपः भवति।

## पाठगतप्रश्नाः-४

२१. न सम्प्रसारणे सम्प्रसारणम् इति सूत्रस्य अर्थं लिखत।

२२. न सम्प्रसारणे सम्प्रसारणम् इत्यनेन किं ज्ञाप्यते?

२३. पथिन् इत्यत्र इकारस्य आकारः केन सूत्रेण विधीयते?

२४. इतोऽत्सर्वनामस्थाने इत्यस्य अर्थं लिखत।

२५. कदा पथिन्-शब्दस्य थकारस्य स्थाने न्थ् इति आदेशः भवति?

२६. भस्य टेर्लोपः इति सूत्रस्य एकमुदाहरणं लिखत।

## पञ्चन्-शब्दः

पञ्चन्-शब्दः नकारान्तः सङ्ख्यावाचकः नित्यबहुवचनान्तश्च। तेन एकवचने द्विवचने च अस्य शब्दस्य रूपाणि न प्राप्यन्ते। त्रिषु अपि लिङ्गेषु अस्य समानमेव रूपं भवति।

पञ्चन्-शब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे पञ्चन् अस् इति जाते अग्रिमं सूत्रं प्रवर्तते –

### [१६.२०] ष्णान्ता षट्। (१.१.२४)

**सूत्रार्थः** – षान्ता नान्ता च संख्या षट्संज्ञा स्यात्।

**सूत्रव्याख्या** - अनेन सूत्रेण षट्-संज्ञा विधीयते। अतः संज्ञासूत्रम् इदम्। अस्मिन् सूत्रे ष्णान्ता, षट् चेति पदद्वयं वर्तते। पदद्वयम् अपि प्रथमैकवचनान्तम्। बहुगणवतुडति संख्या इति सूत्रात् सङ्ख्या इति प्रथमान्तं पदम् अत्र अनुवर्तते। ष्णान्ता इत्यत्र द्वन्द्वगर्भबहुव्रीहिसमासः। ष् च नश्च इति विग्रहे इतरेतरद्वन्द्वसमासे ष्णौ इति रूपम्। नकारोत्तरम् अकारः उच्चारणार्थः अत्र। ष्टुना ष्टुः इति सूत्रेण

नकारस्य णकारः अत्र। ष्णौ अन्तौ यस्याः सा इति विग्रहे बहुव्रीहिसमासे ष्णान्ता इति रूपम्। सूत्रार्थो भवति षकारान्ता नकारान्ता च सङ्ख्या षट्संज्ञा भवति इति।

**सूत्रार्थसमन्वयः** - पञ्चन् इति शब्दः सङ्ख्यावाचकः, नकारान्तश्च। तस्मात् अनेन सूत्रेण अस्य पञ्चन्-शब्दस्य षट्संज्ञा भवति।

षट्संज्ञावशात् पञ्चन् अस् इत्यत्र पञ्चन्-शब्दस्य षट्संज्ञावशात् षड्भ्यो लुक् इति सूत्रेण जस्प्रत्ययस्य लुक् भवति। ततः न लोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपे पञ्च इति रूपम्।

एवं भिसादिप्रत्यये परे पञ्चन्-शब्दस्य स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञा भवति। ततः न लोपः प्रातिपदिकान्तस्य इति सूत्रेण लोपः भवति।

पञ्चन्-शब्दात् षष्ठीबहुवचनविवक्षायाम् आम्प्रत्यये पञ्चन् आम् इति स्थिते पञ्चन्-शब्दस्य षट्संज्ञावशात् षट्चतुर्भ्यश्च इति सूत्रेण आमः नुडागमः भवति। नुटि न् इत्येव अवशिष्यते। नुट् इति आगमः टित् भवति। तस्मात् आद्यन्तौ टकितौ इति परिभाषया आमः आद्यावयवः भवति। तेन पञ्चन् न् आम् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.२१] नोपधायाः। (६.४.७)

**सूत्रार्थः** – नान्तस्य उपधायाः दीर्घः नामि।

**सूत्रव्याख्या** -अनेन सूत्रेण दीर्घः विधीयते। अतः षड्विधेषु पाणिनीयसूत्रेषु सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे न, उपधायाः चेति पदद्वयम् अस्ति। न इति षष्ठ्येकवचनान्तं पदम्। अत्र षष्ठीविभक्तेः लुक् विहितः। उपधायाः इति षष्ठ्येकवचनान्तं पदम्। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। नामि इति सूत्रात् नामि इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। अङ्गस्य इति सम्पूर्णं सूत्रम् अधिकृतम्। न इति अङ्गस्य इत्यत्र विशेषणरूपेण अन्वेति। तस्मात् येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधौ नान्तस्य इति लभ्यते। सूत्रार्थो भवति नान्तस्य अङ्गस्य उपधायाः दीर्घः भवति नामि परे इति।

**सूत्रार्थसमन्वयः**– पञ्चन् नाम् इति स्थितौ पञ्चन् इति नान्तम् अङ्गं वर्तते। तस्मात् परं नाम् इति वर्तते। अतः नामि परे प्रस्तुतसूत्रेण उपधायाः चकारोत्तरस्य अकारस्य दीर्घे पञ्चान् नाम् इति जाते स्वादिष्वसर्वनामस्थाने इति सूत्रेण पञ्चान् इत्यस्य पदसंज्ञायां न लोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपे पञ्चानाम् इति रूपं सिद्धम्।

**विशेषः**- पञ्चन् नाम् इत्यत्र नलोपः प्रातिपदिकान्तस्य (८.२.७) इति सूत्रेण अपि नकारस्य लोपः प्राप्नोति। परन्तु तदा पूर्वत्रासिद्धम् इति परिभाषाबलात् नामि (६.४.३) इति सूत्रदृष्ट्या न लोपः प्रातिपदिकान्तस्य इति सूत्रम् असिद्धं भवति। तस्य असिद्धत्वात् नामि इति सूत्रेण दीर्घः न भवति। तस्मात् नोपधायाः इति पृथक् सूत्रं विहितम्। तेन दीर्घः विहितः।

### अष्टन्-शब्दः

अयं शब्दः नकारान्तः संख्यावाचकः नित्यबहुवचनान्तश्च वर्तते।

अष्टन्-शब्दात् प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे अष्टन् अस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते –

## [ १६.२२] अष्टन आ विभक्तौ। (७.२.८४)

**सूत्रार्थः** – अष्टन्-शब्दस्य आत्वं वा स्यात् हलादौ विभक्तौ।

**सूत्रव्याख्या** - षड्विधेषु पाणिनीयसूत्रेषु विधिसूत्रम् एतत्। अनेन आत्वं विधीयते। अस्मिन् सूत्रे अष्टनः, आ, विभक्तौ चेति पदत्रयं वर्तते। अष्टनः इति षष्ठ्येकवचनान्तं पदम्, आ इति प्रथमैकवचनान्तं पदं, विभक्तौ इति सप्तम्येकवचनान्तं पदम्। रायो हलि इति सूत्रात् हलि इति सप्तम्यन्तं पदम् अपकृष्यते। तच्च विभक्तौ इत्यस्य विशेषणम्। अतो यस्मिन् विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ हलादौ विभक्तौ इत्यर्थः लभ्यते। सूत्रार्थो भवति हलादौ विभक्तौ परतः अष्टन्-शब्दस्य आकार आदेशः भवति इति। अयं च आकारः अलोऽन्त्यस्य इति परिभाषया अष्टन्-शब्दस्य अन्त्यस्य अलः नकारस्य स्थाने भवति।

**विशेषः** – सूत्रेण अनेन यत् आत्वं विधीयते स विकल्पेन भवति, अष्टनो दीर्घात् इति सूत्रे दीर्घग्रहणसामर्थ्यात्। तथाहि यदि अष्टन आ विभक्तौ इति सूत्रेण अष्टन आत्वं नित्यं स्यात् तदा सर्वत्र दीर्घस्य प्राप्तौ तस्य व्यावृत्तये दीर्घग्रहणं व्यर्थं स्यात्। परन्तु सूत्रेण अनेन आत्वस्य वैकल्पिकत्वं स्वीक्रियेत चेत् आत्वाभावपक्षे अष्टभिरित्यस्य व्यावृत्तये दीर्घग्रहणं सार्थकं भवति। अतः अष्टनो दीर्घात् इति सूत्रे दीर्घग्रहणम् अष्टन आत्वस्य वैकल्पिकत्वे ज्ञापकं भवति।

इदं सूत्रं हलादौ विभक्तौ परत एव प्रवर्तते। जस्प्रत्ययस्य शस्प्रत्ययस्य च अनुबन्धलोपे अस् इति भवति। तेन अयम् अजादिः भवति। अतः सूत्रमिदं न प्रवर्तेत। ततः अग्रिमं सूत्रं प्रवर्तते –

## [ १६.२३] अष्टाभ्य औश् (७.१.२१)

**सूत्रार्थः** – कृताकारात् अष्टनः जश्शसोः औश्।

**सूत्रव्याख्या** -अनेन सूत्रेण औश् इति आदेशः विधीयते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे अष्टाभ्यः, औश् चेति पदद्वयं वर्तते। अष्टाभ्यः इति अष्टाशब्दप्रकृतिकपञ्चम्यन्तं पदम्। अष्टन्-शब्दस्य पञ्चमीबहुवचने अष्टाभ्यः, अष्टभ्यः चेति रूपद्वयम्। परन्तु अत्र सूत्रे अष्टन्-शब्दस्य पञ्चमीबहुवचने यद् रूपम् अष्टाभ्यः इति तन्न गृह्यते। अष्टा इति शब्दस्य पञ्चमीबहुवचने यद् रूपम् अष्टाभ्यः इति तत् स्वीक्रियते। अष्टा इति शब्दः कृताकारस्य अष्टन्शब्दस्य अनुकरणम्। औश् इति प्रथमान्तं विधेयबोधकं पदम्। जश्शसोः शिः इति सूत्रात् जशशसोः इति षष्ठीद्विवचनान्तं पदम् अनुवर्तते। सूत्रार्थो भवति कृताकाराद् अष्टन्-शब्दात् जश्शसोः औश् इति आदेशः भवति इति।

औश् इत्यत्र औकारमात्रं शिष्यते। अयञ्च आदेशः शित् भवति। तस्मात् अनेकाल्शित् सर्वस्य इति सूत्रेण सम्पूर्णस्य जस्प्रत्ययस्य शस्प्रत्ययस्य च स्थाने भवति।

**विचारः** – अत्र एका शङ्का उत्पद्यते - अष्टन आ विभक्तौ इति सूत्रेण हलादौ विभक्तौ परतः अष्टन्-शब्दस्य नकारस्य स्थाने आकारः विहितः। जस्प्रत्ययः, शस्प्रत्ययश्च अनुबन्धलोपकरणाद् अनन्तरम् अजादिरेव भवति। तस्मात् अजादौ विभक्तौ परतः अष्टन्-शब्दस्य स्थाने आकाररूपः अन्तादेशः कथमपि न प्राप्नोति। यदि न सम्भवति तदा अष्टाभ्यः औश् इत्यनेन जस्शसोः औश् इति आदेशः कथं स्यादिति प्रश्नः। अस्योत्तरं तावत् – अष्टाभ्यः इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति इति। एतस्य तात्पर्यं तावत् यदि सूत्रकारस्य आकारादेशरहितात् अष्टन्-शब्दात् परयोः जश्शसोः औश्-विधानम् अनुमतं स्यात् तदा अष्टनो दीर्घात्, अष्टन आ विभक्तौ इतिवत् अष्टाभ्यः औश् इत्यत्रापि अष्टाभ्यः औश् इति सूत्रकरणमुचितं स्यात्। तेन एकमात्राया लाघवमपि स्यात्। प्रसिद्धिरस्ति – एकमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः इति। एवम् अष्टाभ्य औश् इति वक्तव्ये सूत्रकारेण कृताकारसहितस्य अष्टाभ्यः इत्यस्य तद् ग्रहणं कृतं तेन ज्ञाप्यते यद् जश्शसोः विषये अपि आत्वं भवति इति।

तेन अयं सिद्धान्तः समायाति यत् जश्शसोः परयोः अष्टन्शब्दस्य आकारान्तादेशविधाने सूत्रं किमपि नास्ति। केवलम् अष्टाभ्यः औश् इति सूत्रे आत्वनिर्देशात् तत्रापि आत्वं भवति इति विज्ञायते।

**सूत्रार्थसमन्वयः** – अष्टन् अस् (जस्) इति स्थितिः। अत्र अष्टाभ्य औश् इति सूत्रे आत्वनिर्देशात् अष्टन्शब्दस्य स्थाने आकाररूपे अन्तादेशे कृते अष्ट आ अस् इति भवति। ततः अष्टाभ्य औश् इति सूत्रेण जस्प्रत्ययस्य स्थाने औश्-इत्यादेशे अनुबन्धलोपे अष्ट आ औ इति जाते अकः सवर्णे दीर्घः इति सूत्रेण अकार-आकारयोः स्थाने दीर्घैकादेशे अष्टा औ इति भवति। ततः वृद्धिरेचि इति सूत्रेण आकार-औकारयोः स्थाने औकाररूपवृद्धौ एकादेशे वर्णमेलने अष्टौ इति रूपं सिद्धम्।

अष्टन्-शब्दात् हलादौ भ्यस्प्रत्यये भिस्प्रत्यये च परे अष्टन आ विभक्तौ इति सूत्रेण नकारस्य स्थाने आकारे सवर्णदीर्घे च कृते अष्टा भ्यस्, अष्टा भिस् इति स्थिते सकारस्य रुत्वे विसर्गे च कृते वर्णसम्मेलने अष्टाभ्यः, अष्टाभिः चेति यथाक्रमं रूपम्।

अष्टन्-शब्दात् आम्प्रत्यये अष्टन् आम् इति स्थितिः। अष्टन्-शब्दः ष्णान्ता षट् इति सूत्रेण षट्संज्ञकः। तस्मात् षट्चतुर्भ्यश्च इति सूत्रेण आमः नुट्- इति आगमे अनुबन्धलोपे, नुटः टित्त्वात् आमः आद्यावयवे अष्टन् नाम् इति जाते हलादौ नामि परे अष्टन आ विभक्तौ इति सूत्रेण नकारस्य आकारे सवर्णदीर्घे च कृते वर्णसम्मेलने अष्टानाम् इति रूपम्।

अष्टन्-शब्दात् सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये अनुबन्धलोपे अष्टन् सु इति जाते अष्टन आ विभक्तौ इति सूत्रेण नकारस्य आकारे सवर्णदीर्घे च अष्टासु इति रूपम्।

अष्टन आ विभक्तौ इति सूत्रेण आकारविधानस्य वैकल्पिकत्वात् यस्मिन् पक्षे आत्वं न भवति तत्र पञ्चन्-शब्दवत् रूपाणि ज्ञातव्यानि।

आम्प्रत्ययस्थले उभयपक्षे अपि अष्टानाम् इत्येव रूपम्। परन्तु प्रक्रियायां भेदः परिलक्ष्यते।

## पाठगतप्रश्नाः-५

२७. षट्संज्ञाविधायकं सूत्रं किम्?

२८. पञ्चानाम् इत्यत्र उपधादीर्घविधायकं सूत्रं किम्?

२९. नोपधायाः इति सूत्रस्य अर्थं लिखत।

३०. अष्टाभ्य औश् इति सूत्रस्य अर्थं लिखत।

३१. अष्टन आ विभक्तौ इति सूत्रेण विधीयमानं कार्यं वैकल्पिकमित्यत्र किं ज्ञापकम्?

३२. अष्टाभ्य औश् इति सूत्रे अष्टाभ्यः इति आत्वनिर्देशेन किं ज्ञाप्यते?

## पाठसारः

इदम्-शब्दस्य सन्निकृष्टं वस्तुनं बोधयितुं व्यवहारः भवति। अस्य शब्दस्य आलोचनाकाले केचन विषयाः दृक्पथमायान्ति। तथाहि सुप्रत्यये परे इदमः मकारस्य स्थाने त्यदादीनामः इति अकारः यथा न स्यात् तदर्थं मकार एव आदिष्टः भवति। ततः इदमः इद्भागस्य स्थाने अय् इति आदेशः भवति। औ इत्यारभ्य शस् प्रत्ययं यावत् कोऽपि प्रत्ययः परं तिष्ठति चेत् इदमः दकारस्य स्थाने म इति आदेशः भवति। आपि विभक्तौ परे (टा इत्यारभ्य सुप्प्रत्ययं यावत्) इदमः इद्भागस्य स्थाने अन् इति आदेशः भवति। परन्तु हलादौ आपि परे इदमः इद्भागस्य लोपः भवति। किञ्च, इदम्-शब्दात् परं भिसः स्थाने ऐसादेशः न भवति इति चेति विषयाः ज्ञायन्ते।

राजन्-शब्दात् प्रथमैकवचने सुप्रत्यये परे सति सकारस्य लोपः भवति। नकारस्यापि न लोपः प्रातिपदिकान्तस्य इति सूत्रेण लोपः भवति। परन्तु सम्बोधनैकवचने सुप्रत्यये परे सति सुप्रत्ययस्य लोपे नकारस्य लोपः न भवति, न ङिसम्बुद्ध्योः इति सूत्रेण निषेधात्। किञ्च, राजन् भिस् इत्यत्र नलोपः यद्यपि पूर्वत्रासिद्धम् इत्यनेन असिद्धः भवति, तथापि नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति इति सूत्रेण तस्य असिद्धत्वस्य निषेधः भवति। राजभिः इत्यत्र सुपि च इति सूत्रं न प्रवर्तते।

मघवन्-शब्दस्य नकारस्य स्थाने विकल्पेन तृ इति अन्तादेशः भवति। तेन शब्दद्वयं भवति – मघवन्, मघवत् चेति। यस्मिन् पक्षे तृ इति अन्तादेशः भवति तत्र पक्षे निष्पन्नः मघवत्-शब्दः उगित् भवति। तेन उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण सर्वनामस्थानसंज्ञके प्रत्यये परे नुमागमः भवति। यस्मिन् पक्षे तृ इति आदेशः न भवति, तस्मिन् पक्षे मघवन् इति शब्दः उगित् न भवति। तेन नुमागमः न भवति। तत्र मघवा इति रूपम्। उभयत्रापि सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधाया दीर्घः भवति। तृत्वपक्षे भ्यामादिप्रत्ययस्थले झलां जशोऽन्ते इति सूत्रेण तकारस्य स्थाने जश्त्वं विधीयते। तृत्वाभावपक्षे

भसंज्ञास्थले तु वकारस्य स्थाने श्वयुवमघोनामतद्धिते इति सूत्रेण सम्प्रसारणं भवति। भ्यामादिप्रत्ययस्थले तु न लोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपः भवति।

युवन्-शब्दस्य आलोचनावेलायाम् अनेकत्र सम्प्रसारणे प्राप्ते अन्त्यस्य यणः पूर्वं सम्प्रसारणं भवति। ततः न सम्प्रसारणे सम्प्रसारणम् इति सूत्रेण पूर्वस्य प्राप्तं सम्प्रसारणं निषिद्ध्यते इति सिद्धान्तः आगतः।

पथिन्-शब्दस्य विचारावसरे दृष्टं यत् सुप्रत्यये परे सति पथिन्-शब्दस्य नकारस्य स्थाने आकाररूपः अन्तादेशः विहितः। सर्वनामस्थानसंज्ञके प्रत्यये परे पथिन्-शब्दस्य इकारस्य स्थाने अकाररूपः अन्तादेशः विहितः, थकारस्य स्थाने न्थ् इति आदेशः च विहितः। भसंज्ञास्थले तु पथिन्-शब्दस्य टिभागस्य लोपः विहितः।

पञ्चन्-शब्दस्य आलोचनाकाले नकारान्तस्य षकारान्तस्य च संख्यावाचकशब्दस्य षट्संज्ञा भवति इति ज्ञायते। षट्संज्ञायां सत्यां जश्शसोः लुक्, षट्चतुर्भ्यश्च इति सूत्रेण नुट् इति आगमः च भवति इति विज्ञायते। किञ्च, नामि परे नान्तस्य उपधायाः दीर्घे नोपधायाः इति सूत्रेण दीर्घे पञ्चानाम् इति रूपं साधितम्।

अष्टन्-शब्दस्थले अष्टन आ विभक्तौ इति सूत्रेण विहितम् आत्वं भिसादिहलादौ विभक्तौ परतः विकल्पेन भवति इति उक्तम्। ततः अष्टाभ्य औश् इति सूत्रे अष्टाभ्य इति वक्तव्ये अष्टाभ्यः इति कृतात्वनिर्देशेन जश्शसोः विषये अपि आत्वं प्रवर्तते इति समाहितम्। यस्मिन् पक्षे आत्वं न भवति तत्र पञ्चन्-शब्दवत् रूपं भवति।

## योग्यतावर्धनम् –

अस्मिन् पाठे ये शब्दाः आलोचिताः तेषां रूपाणि अधः प्रदीयन्ते। शब्दरूपाणां कण्ठस्थीकरणाय अयं भागः छात्राणाम् उपकाराय भविष्यति।

१. पुंलिङ्गे इदम्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | अयम् | इमौ | इमे |
| **द्वितीयायाम्** | इमम् | इमौ | इमान् |
| **तृतीयायाम्** | अनेन | आभ्याम् | एभिः |
| **चतुर्थ्याम्** | अस्मै | आभ्याम् | एभ्यः |
| **पञ्चम्याम्** | अस्मात् | आभ्याम् | एभ्यः |
| **षष्ठ्याम्** | अस्य | अनयोः | एषाम् |

| **सप्तम्याम्** | अस्मिन् | अनयोः | एषु |
|---|---|---|---|

२. राजन्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | राजा | राजानौ | राजानः |
| **द्वितीयायाम्** | राजानम् | राजानौ | राज्ञः |
| **तृतीयायाम्** | राज्ञा | राजभ्याम् | राजभिः |
| **चतुर्थ्याम्** | राज्ञे | राजभ्याम् | राजभ्यः |
| **पञ्चम्याम्** | राज्ञः | राजभ्याम् | राजभ्यः |
| **षष्ठ्याम्** | राज्ञः | राज्ञोः | राज्ञाम् |
| **सप्तम्याम्** | राज्ञि, राजनि | राज्ञोः | राजसु |
| **सम्बोधने** | राजन् | राजानौ | राजानः |

३. मघवन्-शब्दरूपाणि-

**१.१.** तृत्वपक्षे -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | मघवान् | मघवन्तौ | मघवन्तः |
| **द्वितीयायाम्** | मघवन्तम् | मघवन्तौ | मघवतः |
| **तृतीयायाम्** | मघवता | मघवद्भ्याम् | मघवद्भिः |
| **चतुर्थ्याम्** | मघवते | मघवद्भ्याम् | मघवद्भ्यः |
| **पञ्चम्याम्** | मघवतः | मघवद्भ्याम् | मघवद्भ्यः |
| **षष्ठ्याम्** | मघवतः | मघवतोः | मघवताम् |
| **सप्तम्याम्** | मघवति | मघवतोः | मघवत्सु |
| **सम्बोधने** | मघवन् | मघवन्तौ | मघवन्तः |

**१.२.** तृत्वाभावपक्षे –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | मघवा | मघवानौ | मघवानः |
| **द्वितीयायाम्** | मघवानम् | मघवानौ | मघोनः |
| **तृतीयायाम्** | मघोना | मघवद्भ्याम् | मघवद्भिः |

| चतुर्थ्याम् | मघोने | मघवद्भ्याम् | मघवद्भ्यः |
|---|---|---|---|
| पञ्चम्याम् | मघोनः | मघवद्भ्याम् | मघवद्भ्यः |
| षष्ठ्याम् | मघोनः | मघोनोः | मघोनाम् |
| सप्तम्याम् | मघोनि | मघोनोः | मघवसु |
| सम्बोधने | मघवन् | मघवानौ | मघवानः |

४. युवन्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | युवा | युवानौ | युवानः |
| द्वितीयायाम् | युवानम् | युवानौ | यूनः |
| तृतीयायाम् | यूना | युवभ्याम् | युवभिः |
| चतुर्थ्याम् | यूने | युवभ्याम् | युवभ्यः |
| पञ्चम्याम् | यूनः | युवभ्याम् | युवभ्यः |
| षष्ठ्याम् | यूनः | यूनोः | यूनाम् |
| सप्तम्याम् | यूनि | यूनोः | युवसु |
| सम्बोधने | युवन् | युवानौ | युवानः |

५. पथिन्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | पन्थाः | पन्थानौ | पन्थानः |
| द्वितीयायाम् | पन्थानम् | पन्थानौ | पथः |
| तृतीयायाम् | पथा | पथिभ्याम् | पथिभिः |
| चतुर्थ्याम् | पथे | पथिभ्याम् | पथिभ्यः |
| पञ्चम्याम् | पथः | पथिभ्याम् | पथिभ्यः |
| षष्ठ्याम् | पथः | पथोः | पथाम् |
| सप्तम्याम् | पथि | पथोः | पथिषु |
| सम्बोधने | पन्थाः | पन्थानौ | पन्थानः |

६. पञ्चन्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | - | - | पञ्च |
| द्वितीयायाम् | - | - | पञ्च |
| तृतीयायाम् | - | - | पञ्चभिः |

| चतुर्थ्याम् | - | - | पञ्चभ्यः |
|---|---|---|---|
| पञ्चम्याम् | - | - | पञ्चभ्यः |
| षष्ठ्याम् | - | - | पञ्चानाम् |
| सप्तम्याम् | - | - | पञ्चसु |

७. अष्टन्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने | |
|---|---|---|---|---|
| | | | आत्वपक्षे | अनात्वपक्षे |
| प्रथमायाम् | - | - | अष्टौ | अष्ट |
| द्वितीयायाम् | - | - | अष्टौ | अष्ट |
| तृतीयायाम् | - | - | अष्टाभिः | अष्टभिः |
| चतुर्थ्याम् | - | - | अष्टाभ्यः | अष्टभ्यः |
| पञ्चम्याम् | - | - | अष्टाभ्यः | अष्टभ्यः |
| षष्ठ्याम् | - | - | अष्टानाम् | अष्टानाम् |
| सप्तम्याम् | - | - | अष्टासु | अष्टसु |

## पाठान्तप्रश्नाः

१. अयम् इति रूपं साधयत।

२. अनाप्यकः इति सूत्रं सोदाहरणं व्याख्यात।

३. हलि लोपः इति सूत्रं सोदाहरणं व्याख्यात।

४. अनर्थके अलोऽन्त्यस्य इति परिभाषा न प्रवर्तते –सोदाहरणं स्पष्टयत।

५. आद्यन्तवदेकस्मिन् इति सूत्रं सोदाहरणं व्याख्यात।

६. अस्मै इति रूपं साधयत।

७. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति इति सूत्रं व्याख्यात।

८. उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रं व्याख्यात।

९. मघोनः इति रूपं साधयत।

१०. न सम्प्रसारणे सम्प्रसारणम् इति सूत्रं साधयत।

११. यूनः इति रूपं साधयत।

१२. पन्थाः इति रूपं साधयत।

१३. पञ्चानाम् इति रूपं साधयत।

१४. अष्टन आ विभक्तौ इति सूत्रं व्याख्यात।

१५. अष्टाभ्य औश् इति सूत्रं व्याख्यात।

## पाठगतप्रश्नानामुत्तराणि

### उतत्राणि-१

१. त्यदादीनामः इति सूत्रस्य अपवादः।

२. अपदान्तात् अतो गुणे पररूपम् एकादेशः स्यात् इति सूत्रार्थः।

३. दश्च इति। इदमः दस्य मः स्याद् विभक्तौ इति सूत्रार्थः।

४. आप् इत्यनेन प्रत्याहारः स्वीक्रियते। स च टा इति आकारम् आरभ्य सुपः पकारपर्यन्तम्।

५. अभ्यासविकारं परित्यज्य अनर्थके न प्रवर्तते।

६. आद्यन्तवदेकस्मिन् इति सूत्रेण अन्तवद्भावे कृते अ भ्याम् इत्यत्र अकारान्तत्वेन सुपि च इति सूत्रेण दीर्घे आभ्याम् इति भवति।

७. यस्मात्पूर्वं नास्ति परम् अस्ति स आदिरित्युच्यते। यस्मात् पूर्वम् अस्ति परं च नास्ति सः अन्तः इत्युच्यते।

८. इदमः दस्य यः स्यात् इति सूत्रार्थः।

### उतत्राणि-२

९. परत्वात् सर्वनामस्थाने चासम्बुद्धौ इति सूत्रमेव आदौ प्रवर्तते, न तु हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रम्।

१०. न ङिसम्बुद्ध्योः इति सूत्रेण निषेधात्।

११. नस्य लोपः न ङौ सम्बुद्धौ च इति सूत्रार्थः।

१२. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति इति सूत्रेण सुब्विधौ नलोपः असिद्धः इति नियमकरणात् राज भ्याम् इत्यत्र सुपि च इति सूत्रं न प्रवर्तते।

१३. सुब्विधौ, स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपः असिद्धः, नान्यत्र इति सूत्रार्थः।

१४. राज्ञि, राजनि चेति रूपद्वयम्।

१५. राजभ्याम् इत्यत्र सुपि च इति दीर्घः, राजभिः इत्यत्र अतो भिस ऐस् इति सूत्रेण ऐस्-भावः तथा राजभ्यः इत्यत्र बहुवचने झल्येत् इति सूत्रेण ऐ इत्यादेशः न भवति।

**उतत्राणि-३**

१६. अधातोः उगितः नलोपिनः अञ्चतेश्च नुम् स्यात् सर्वनामस्थाने परे इति सूत्रार्थः।

१७. अच् इत्यनेन नकारलोपी अञ्चु गतिपूजनयोः इति धातुः स्वीक्रियते।

१८. विकल्पेन तृ इति अन्तादेशः विधीयते।

१९. श्वयुवमघोनामतद्धिते इति सूत्रेण।

२०. मघवान्, मघवा चेति।

**उतत्राणि-३**

२१. सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात् इति सूत्रार्थः।

२२. अन्त्यस्य यणः पूर्वं सम्प्रसारणं भवति इति विज्ञायते।

२३. इतोऽत्सर्वनामस्थाने इति सूत्रेण।

२४. पथ्यादेरिकारस्य अकारः स्यात् सर्वनामस्थाने परे इति सूत्रार्थः।

२५. सर्वनामस्थानसंज्ञके प्रत्यये परे।

२६. पथः।

**उतत्राणि-४**

२७. ष्णान्ता षट् इति।

२८. नोपधायाः इति सूत्रम्।

२९. नान्तस्य उपधायाः दीर्घः नामि इति सूत्रार्थः।

३०. कृताकारात् अष्टनो जश्शसोः औश् स्यात् इति सूत्रार्थः।

३१. अष्टनो दीर्घात् इति सूत्रे दीर्घग्रहणात्।

३२. जश्शसोः विषये अपि आत्वं भवति इति ज्ञाप्यते।

**।।इति षोडशः पाठः।।**

# १७

# हलन्तप्रकरणे तत् इत्यादिशब्दानां रूपाणि

## प्रस्तावना

अस्मिन् पाठे तद्, युष्मद्, अस्मद् चेति त्रयाणां शब्दानां रूपाणि साधितानि। तदर्थं नवदश सूत्राणि अत्र व्याख्यातानि। सूत्रव्याख्यावसरे पूर्वत्र स्वीकृतः नियमः अत्रापि अनुसृतः। संस्कृतवाङ्मये तच्छब्दस्य, अस्मच्छब्दस्य, युष्मच्छब्दस्य च बहुधा प्रयोगः दृश्यते। वैयाकरणास्तु शब्दसाधनतत्पराः। अतः प्रसिद्धानाम् एतेषां त्रयाणां शब्दानां यानि रूपाणि सन्ति, तेषां सिद्धिप्रक्रिया तैः अवश्यं ज्ञातव्या। अस्मच्छब्दस्य युष्मच्छब्दस्य च रूपसाधने यानि सूत्राणि पाणिनिना विरचितानि, न तथा अन्यस्य कस्यापि शब्दस्य कृते। अष्टादश सूत्राणि एतयोः शब्दयोः रूपाणां सिद्धये अत्र स्थापितानि। तानि सूत्राणि छात्राणां सुबोधाय सरलया शैल्या अत्र व्याख्यातानि। अतः प्राथमिकछात्राणां नास्ति कश्चित् भयावसरः।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- तच्छब्दसाधनप्रक्रियां ज्ञास्यति।
- युष्मदस्मच्छब्दयोः युगपत् साधनप्रक्रियाविधिं बोद्धुं शक्नुयात्।
- युष्मदस्मच्छब्दयोः स्थाने कदा के के आदेशाः भवन्ति इति वीक्षिष्यति।
- एताभ्यां शब्दाभ्यां परं कदा विभक्तेः स्थाने आदेशाः भवन्ति, के च ते इति अवगच्छेत्।
- टिलोपपक्षः, अन्त्यलोपपक्षः चेति पक्षद्वये रूपाणि कथं सिद्ध्यन्ति इति जानीयात्।
- साम आकम् इति सूत्रे सुट्-सहित-आमः ग्रहणे कारणं विजानीयात्।

### तद्-शब्दः

तनादिगणीयात् विस्तारार्थकात् तन्-धातोः औणादिके अदिप्रत्यये प्रक्रियाकार्ये तद् इति रूपम्। अयं शब्दः सर्वादिगणे पठितः, सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञकः। परोक्षं वस्तु बोधयितुं तद्-शब्दस्य व्यवहारः भवति।

## पुंलिङ्गे तद्-शब्दः

तद्-शब्दात् पुंलिङ्गे प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे तद् स् इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

### [ १७.१] तदोः सः सावनन्त्ययोः। (७.२.१०६)

**सूत्रार्थः** – त्यदादीनां तकारदकारयोः अनन्त्ययोः सः स्यात्सौ।

**सूत्रव्याख्या** -अनेन सूत्रेण तकारदकारयोः स्थाने स इति आदेशो विधीयते। अतः विधिसूत्रम् इदम्। तदोः, सः, सौ, अनन्त्ययोः चेति चत्वारि पदानि अत्र। त्यदादीनामः इति सूत्रात् त्यदादीनाम् इति पदम् अनुवर्तते। त्यदादीनाम् इति षष्ठ्येकवचनान्तं पदम्। अनन्त्ययोः, तदोः चेति षष्ठीद्विवचनान्ते पदे। स इति प्रथमैकवचनान्तं पदम्। सौ इति सु-शब्दस्य सप्तम्येकवचने रूपम्। त्यद् आदिर्येषाम् इति विग्रहे तद्गुणसंविज्ञानबहुव्रीहौ त्यदादयः इति रूपं, तेषां त्यदादीनाम् इति। त च द च इति विग्रहे इतरेतरद्वन्द्वसमासे तदौ इति रूपं, तयोः तदोरिति। अन्त्यं च अन्त्यं च अन्त्ये इति इतरेतरद्वन्द्वसमासः, न अन्त्ये अनन्त्ये इति नञ्तत्पुरुषसमासः, तयोः अनन्त्ययोः इति। सूत्रार्थो भवति त्यदादिगणे पठितानां शब्दानाम् अनन्त्यस्य तकारस्य दकारस्य च स्थाने स इति आदेशो भवति इति।

**सूत्रार्थसमन्वयः** - तद्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे तद् स् इति स्थिते त्यदादीनामः इति सूत्रेण दकारस्य स्थाने अ इत्यादेशे त अ स् इति जाते अतो गुणे इति सूत्रेण पररूपे त स् इति भवति। ततः सुप्रत्यये परे सति प्रस्तुतसूत्रेण त्यदादिगणे पठितस्य तद्-शब्दस्य अनन्त्यस्य तकारस्य स्थाने सकारे स स् इति जाते सकारस्य रुत्वे विसर्गे च कृते सः इति रूपम्।

अवधेयविषयः – विभक्तौ परतः तद्-शब्दस्य दकारस्य स्थाने त्यदादीनामः इति सूत्रेण अकारः भवति, अतो गुणे इति सूत्रेण च पररूपे त इति अकारान्तः शब्दः निष्पद्यते। तद्-शब्दस्य सर्वादिगणे पाठात् एकदेशविकृतन्यायेन त इत्यस्यापि सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञा भवति। तेन सुप्रत्ययं परित्यज्य सर्वेषामेव रूपाणां सिद्धिप्रक्रिया पुंलिङ्गे सर्वशब्दवत् भवति।

## स्त्रीलिङ्गे तद्-शब्दः

स्त्रीलिङ्गे तद्-शब्दात् सुप्रत्यये अनुबन्धलोपे तद् स् इति स्थिते त्यदादीनामः इति सूत्रेण त्यदाद्यत्वे, पररूपे, अजाद्यतष्टाप् इति सूत्रेण टापि, सवर्णदीर्घे च ता स् इति जाते तदोः सः सावनन्त्ययोः इति सूत्रेण तकारस्य सकारे, हल्ङ्याब्भ्यो .... इति सूत्रेण सकारस्य लोपे सा इति रूपम्।

एवम् अन्यत्रापि त्यदाद्यत्वे, पररूपे, टापि सवर्णदीर्घे च ता इति जाते सर्वादीनि सर्वनामानि इति सूत्रेण तस्य सर्वनामसंज्ञा भवति। रूपाणि च स्त्रीलिङ्गे सर्वाशब्दवत् भवन्ति।

स्त्रीलिङ्गे तद्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | सा | ते | ताः |
| द्वितीयायाम् | ताम् | ते | ताः |
| तृतीयायाम् | तया | ताभ्याम् | ताभिः |
| चतुर्थ्याम् | तस्यै | ताभ्याम् | ताभ्यः |
| पञ्चम्याम् | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठ्याम् | तस्याः | तयोः | तासाम् |
| सप्तम्याम् | तस्याम् | तयोः | तासु |

## क्लीबलिङ्गे तद्-शब्दः

क्लीबलिङ्गे तद्-शब्दात् सुप्रत्यये स्वमोर्नपुंसकात् इति सूत्रेण सुप्रत्ययस्य लोपे तद् इति जाते वाऽवसाने इति सूत्रेण दकारस्य स्थाने विकल्पेन चर्वे तत्, तद् चेति रूपद्वयं सिद्ध्यति। यतः सुप्रत्ययस्य लुक् अत्र सञ्जातः, तस्मात् तदोः सः सावनन्त्ययोः इति सूत्रेण तकारस्य स्थाने सकारो न भवति।

तद् औ इति जाते त्यदाद्यत्वे पररूपे, त औ इति जाते नपुंसकाच्च इति सूत्रेण औ इत्यस्य स्थाने शी-इत्यादेशे अनुबन्धलोपे त ई इति जाते आद्गुणः इति सूत्रेण गुणे वर्णमेलने ते इति रूपम्।

तद् जस् इति स्थिते पूर्ववत् प्रक्रियाकार्ये त अस् इति जाते, जश्शसोः शिः इति सूत्रेण जसः स्थाने शि-इत्यादेशे अनुबन्धलोपे त इ इति भवति। ततः मिदचोऽन्त्यात्परः इति परिभाषया परिष्कृतेन नपुंसकस्य झलचः इति सूत्रेण अन्त्यात् अचः परं नुमागमे अनुबन्धलोपे त न् इ इति जाते, सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधादीर्घे वर्णमेलने तानि इति रूपम्।

द्वितीयाविभक्तौ अपि एवमेव रूपाणि भवन्ति। अन्यत्र ज्ञानशब्दवत् रूपाणि भवन्ति।

क्लीबलिङ्गे तद्-शब्दरूपाणि-

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | तत् | ते | तानि |
| द्वितीयायाम् | तत् | ते | तानि |
| अन्यानि रूपाणि पुंलिङ्गवत् | | | |

## पाठगतप्रश्नाः-१

१. तदोः सः सावनन्त्ययोः इति सूत्रस्य अर्थं लिखत।

२. तदोः सः सावनन्त्ययोः इति सूत्रेण विधीयमानः स् इति आदेशः कस्य स्थाने भवति?

३. तदोः सः सावनन्त्ययोः इति सूत्रे अनन्त्ययोः इत्यत्र कः समासः?

४. कस्य बोधनाय तद्-शब्दः उपयुज्यते?

## युष्मदस्मच्छब्दौ –

युष्मदस्मच्छब्दयोः त्रिषु अपि लिङ्गेषु समानमेव रूपम्। प्रयोगो यथा – त्वं पुमान्, अहं पुमान्। त्वं युवतिः, अहं युवतिः। त्वं दैवतम्, अहं दैवतम्। युष्मद्-शब्दात् अस्मद्-शब्दात् च प्रथमाविभक्तेः एकवचनविवक्षायां सुप्रत्यये युष्मद् सु, अस्मद् सु इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

### [ १७.२] ङे प्रथमयोरम्। (७.१.१२८)

**सूत्रार्थः** – युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोः च अमादेशः।

**सूत्रव्याख्या** – अनेन सूत्रेण अम्-इति आदेशो विधीयते। अतः विधिसूत्रमिदम्। सूत्रे अस्मिन् त्रीणि पदानि सन्ति। ङे, प्रथमयोः, अम् इति सूत्रगतपदच्छेदः। युष्मदस्मद्भ्यां ङसोऽश् इति सूत्रात् युष्मदस्मद्भ्याम् इति पदम् अनुवर्तते। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। ङे इति वस्तुतः षष्ठ्येकवचनान्तं पदं, षष्ठीविभक्तेः अत्र लुक्। प्रथमयोः इति षष्ठीद्विवचनान्तं पदम्। अम् इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे निष्पन्नं युष्मदस्मदे इति इतरेतरद्वन्द्वसमासनिष्पन्नं पदम्, ताभ्यां युष्मदस्मद्भ्याम् इति। प्रथमा च प्रथमा च इति प्रथमे, अत्र इतरेतरद्वन्द्वसमासः, तयोः प्रथमयोः इति एकशेषः। अतः प्रथमयोरित्यत्र प्रथमा, प्रथमा चेति शब्दद्वयम्। आदिमस्य प्रथमाशब्दस्य प्रथमाविभक्तिरित्यर्थः। द्वितीयस्य च प्रथमाशब्दस्य द्वितीयाविभक्तिरित्यर्थः। सूत्रार्थो भवति युष्मद्-शब्दात् अस्मद्-शब्दात् च परस्य ङे-इत्येतस्य प्रथमाद्वितीयाविभक्त्योः स्थाने अम् इति आदेशो भवति इति।

अम् इत्यत्र मकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञा न भवति, न विभक्तौ तुस्माः इति सूत्रेण निषेधात्।

**उदाहरणम्** –युष्मद् सु, अस्मद् सु इति स्थिते सुप्रत्ययस्य प्रथमाविभक्तौ अन्तर्गतत्वात् प्रस्तुतसूत्रेण तस्य स्थाने अम् इत्यादेशे युष्मद् अम्, अस्मद् अम् इति भवति। ततः अग्रिमं सूत्रं प्रवर्तते –

### [ १७.३] त्वाहौ सौ (७.२.९४)

**सूत्रार्थः** – युष्मदस्मदोः मपर्यन्तस्य त्वाहौ आदेशौ स्तः।

**सूत्रव्याख्या** – सूत्रेण अनेन त्व, अह चेति आदेशौ विधीयेते। अतः इदं विधिसूत्रम्। त्वाहौ, सौ चेति पदद्वयमत्र। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदमनुवर्तते। मपर्यन्तस्य इति सूत्रमधिक्रियते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति षष्ठ्येकवचनान्तं पदम्। सौ इति सप्तम्येकवचनान्तं पदम्। त्वाहौ इति प्रथमाद्विवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। मं यावत् इति मपर्यन्तः इति मयूरव्यंसकादिवत्समासः, तस्य। त्वश्च अहश्च त्वाहौ इति इतरेतरद्वन्द्वसमासः। सूत्रार्थो भवति सुप्रत्यये



परे सति युष्मद्-शब्दस्य अस्मद्-शब्दस्य च मपर्यन्तस्य स्थाने यथाक्रमं त्व अह चेति आदेशौ भवतः इति।

निष्कर्षः - युष्मद् इत्यत्र युष्म् इति भागस्य स्थाने त्व इति आदेशः, अस्मद् इत्यत्र अस्म् इति भागस्य स्थाने अह इति आदेशश्च भवति।

**सूत्रार्थसमन्वयः** – युष्मद् अम् अस्मद् अम् इति स्थिते स्थानिवद्भावेन अमादेशं सुप्रत्ययरूपेण स्वीकृत्य तस्मिन् परे सति प्रस्तुतसूत्रेण मपर्यन्तभागस्य स्थाने त्व, अह चेति आदेशे त्व अद् अम्, अह अद् अम् इति भवति। ततः अग्रिमं सूत्रं प्रवर्तते –

## [ १७.४] शेषे लोपः। (७.२.९०)

**सूत्रार्थः** – युष्मदस्मदोः टिलोपः।

**सूत्रव्याख्या** –सूत्रेणानेन लोपः विधीयते। अतः इदं विधायकम्। अस्मिन् सूत्रे शेषे, लोपः चेति पदद्वयम्। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। मपर्यन्तस्य इति सम्पूर्णं सूत्रमधिक्रियते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति अधिकृतं षष्ठ्यन्तं पदं पञ्चम्यन्ततया विपरिणम्यते। शेषे इति सप्तम्येकवचनान्तं पदम्। लोपः इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। मं यावत् इति मपर्यन्तः इति मयूरव्यंसकादिवत्समासः, तस्य। सूत्रार्थो भवति युष्मद्-शब्दस्य अस्मद्-शब्दस्य यः मपर्यन्तभागः युष्म्, अस्म् इति तस्मात् परं यः अन्तिमः अद् इति भागः तस्य लोपः भवति इति।

अवधेयविषयः – अनेन सूत्रेण युष्मदस्मदोः अद्-भागस्य लोपः भवति। अयम् अद्भागः टिसंज्ञक एव भवति। अतः लघुसिद्धान्तकौमुद्याम् एतस्य सूत्रस्य एवम् अर्थः लिखितः एतयोष्टिलोपः स्याद्।

अत्र पक्षद्वयं वर्तते। केषाञ्चित् मते प्रस्तुतसूत्रेण अद्-भागस्य अन्तिमदकारस्य लोपः भवति। केषाञ्चित् मते सम्पूर्णस्य अद् इति भागस्य लोपः भवति। पक्षद्वयेनापि लक्ष्यसिद्धिर्भवति।

**सूत्रार्थसमन्वयः**– अन्त्यलोपपक्षे त्व अद् अम्, अह अद् अम् इति स्थिते अतो गुणे इति सूत्रेण पररूपैकादेशे त्वद् अम्, अहद् अम् इति स्थिते प्रस्तुतसूत्रेण अन्त्यदकारस्य लोपे त्व अम् अह अम् इति जाते अमि पूर्वः इति सूत्रेण पूर्वरूपे त्वम् अहम् इति रूपं सिद्ध्यति।

अद्भागस्य लोपपक्षे त्व अद् अम्, अह अद् अम् इति स्थिते प्रस्तुतसूत्रेण अद्भागस्य लोपे त्व अम्, अह अम् इति स्थिते अमि पूर्वः इति सूत्रेण पूर्वरूपैकादेशे त्वम्, अहम् इति रूपं सिद्ध्यति।

युष्मद् औ अस्मद् औ इति स्थिते ङेप्रथमयोरम् इति सूत्रेण औ-इत्यस्य स्थाने अम्-इत्यादेशे युष्मद् अम्, अस्मद् अम् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १७.५] युवावौ द्विवचने। (७.२.९२)

**सूत्रार्थः** – द्वयोः उक्तौ युष्मदस्मदोः मपर्यन्तस्य युवावौ स्तः विभक्तौ।



**सूत्रव्याख्या** -युव आव चेति आदेशविधानात् सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे युवावौ, द्विवचने चेति पदद्वयं वर्तते। अत्र अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति पदमनुवर्तते। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। मपर्यन्तस्य इति सम्पूर्णं सूत्रमधिक्रियते। विभक्तौ इति सप्तम्येकवचनान्तं पदम्। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति अधिकृतं षष्ठ्यन्तं पदं पञ्चम्यन्ततया विपरिणम्यते। युवावौ इति प्रथमाद्विवचनान्तं पदम्। द्विवचने इति सप्तम्येकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। मं यावत् इति मपर्यन्तः इति मयूरव्यंसकादिवत्समासः, तस्य। युव च आवौ चेति विग्रहे इतरेतरद्वन्द्वसमासे युवावौ इति पदम्। द्वयोः वचनं द्विवचनं, तस्मिन् द्विवचने इति षष्ठीतत्पुरुषसमासः। सूत्रार्थो भवति द्वित्वे उक्ते युष्मद्-शब्दस्य अस्मद्-शब्दस्य यः मपर्यन्तभागः युष्म्, अस्म् इति तयोः स्थाने यथाक्रमं युव, आव चेति आदेशौ भवतः विभक्तौ परतः इति।

**सूत्रार्थसमन्वयः** – युष्मद्-शब्दात्, अस्मद्-शब्दात् च प्रथमाविभक्तेः द्विवचनविवक्षायां यथाक्रमं युष्मद् औ, अस्मद् औ इति जाते ङेप्रथमयोरम् इति सूत्रेण औ-इत्यस्य स्थाने अम्-इत्यादेशे युष्मद् अम्, अस्मद् अम् इति स्थिते युवावौ द्विवचने इति सूत्रेण युष्मदस्मदोः मपर्यन्तस्य स्थाने यथाक्रमं युव, आव चेति आदेशे युव अद् अम्, आव अद् अम् इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १७.६] प्रथमायाश्च द्विवचने भाषायाम् (७.२.८८)

**सूत्रार्थः** – औङि युष्मदस्मदोः आत्वं स्यात् लोके।

**सूत्रव्याख्या** – अनेन सूत्रेण आत्वं विधीयते। अतः विधिसूत्रम् इदम्। प्रथमायाः, च, द्विवचने, भाषायाम् चेति पदानि अत्र। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति पदमनुवर्तते। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। विभक्तौ इति सप्तम्येकवचनान्तं पदम्। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। प्रथमायाः इति षष्ठ्येकवचनान्तं पदम्। च इति अव्ययपदम्। द्विवचने इति सप्तम्येकवचनान्तं पदम्। भाषायाम् इति सप्तम्येकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। द्वयोः वचनं द्विवचनं, तस्मिन् द्विवचने इति षष्ठीतत्पुरुषसमासः। सूत्रार्थो भवति लोके प्रथमाविभक्तेः द्विवचनं परं तिष्ठति चेत् युष्मद्-शब्दस्य, अस्मद्-शब्दस्य च स्थाने आकारः आदेशः भवति इति।

अयम् आ इति आदेशः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः दकारस्य स्थाने भवति।

**सूत्रार्थसमन्वयः** - युव अद् अम्, आव अद् अम् इति स्थितिः। अत्र स्थानिवद्भावेन अमादेशम् औप्रत्ययरूपेण बुद्ध्वा तस्मिन् औप्रत्यये परे सति प्रस्तुतसूत्रेण दकारस्य स्थाने आ-इत्यादेशे युव अ आ अम्, आव अ आ अम् इति भवति। ततः अतो गुणे इति सूत्रेण पररूपे युव आम्, आव आम् इति जाते, अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घैकादेशे युवाम्, आवाम् चेति रूपं सिद्धम्।

युष्मद्-शब्दात्, अस्मद्-शब्दात् च प्रथमाविभक्तेः बहुवचनविवक्षायां यथाक्रमं युष्मद् जस्, अस्मद् जस् इति स्थिते ङेप्रथमयोरम् इति सूत्रेण जस्-इत्यस्य स्थाने अम्-इत्यादेशे युष्मद् अम्, अस्मद् अम् इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १७.७] यूयवयौ जसि। (७.२.९३)

**सूत्रार्थः** – युष्मदस्मदोः मपर्यन्तस्य यूयवयौ स्तः जसि परे।

**सूत्रव्याख्या** – अनेन सूत्रेण यूय, वय चेति आदेशौ विधीयेते। अतः विधिसूत्रम् इदम्। यूयवयौ जसि चेति द्वे पदे अत्र। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। मपर्यन्तस्य इति सम्पूर्णं सूत्रमनुवर्तते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति षष्ठ्येकवचनान्तं पदम्। यूयवयौ इति प्रथमाद्विवचनान्तं पदम्। जसि इति सप्तम्येकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। द्वयोः वचनं द्विवचनं, तस्मिन् द्विवचने इति षष्ठीतत्पुरुषसमासः। मं यावत् इति विग्रहे मयूरव्यंसकादिवत्समासे मपर्यन्तः इति रूपं, तस्य। यूय च वय चेति विग्रहे इतरेतरद्वन्द्वसमासे यूयवयौ इति रूपम्। सूत्रार्थो भवति युष्मद्-शब्दस्य अस्मद्-शब्दस्य यः मपर्यन्तभागः युष्म् इति, अस्म् इति तयोः स्थाने यथाक्रमं यूय, वय चेति आदेशौ भवतः जसि परे इति।

**सूत्रार्थसमन्वयः** – युष्मद् अम्, अस्मद् अम् इति स्थितिः। अत्र स्थानिवद्भावेन अम्-इत्यस्य जस्प्रत्ययरूपेण बोधः कर्तव्यः। अतः तस्मिन् परे सति प्रस्तुतसूत्रेण मपर्यन्तस्य स्थाने यथाक्रमं यूय, वय चेति आदेशे यूय अद् अम्, वय अद् अम् इति स्थितिः भवति। ततः शेषे लोपः इति सूत्रेण टिलोपपक्षे टेः अदः लोपे यूय अम्, वय अम् इति जाते, अमि पूर्वः इति सूत्रेण पूर्वरूपे यूयम्, वयम् चेति रूपद्वयं सिद्ध्यति।

शेषे लोपः इति सूत्रेण अन्त्यलोपपक्षे यूय अद् अम्, वय अद् अम् इत्यवस्थायाम् अतो गुणे इति सूत्रेण पररूपैकादेशे यूयद् अम्, वयद् अम् इति जाते शेषे लोपः इत्यनेन अन्त्यस्य दकारस्य लोपे यूय अम्, वय अम् इति भवति। ततः अमि पूर्वः इति सूत्रेण पूर्वरूपे यथाक्रमं यूयम्, वयम् चेति रूपद्वयं सिद्धम्।

## पाठगतप्रश्नाः-२

५. युष्मदस्मद्भ्यां परं कुत्र अम् इति आदेशः भवति?

६. त्वाहौ आदेशौ कुत्र भवतः?

७. शेषे लोपः इत्यत्र पक्षद्वयं लिखत।

८. युवावौ द्विवचने इति सूत्रस्य अर्थं लिखत।

९. युष्मद्-शब्दात् जसि केन सूत्रेणः कः आदिश्यते?

१०. प्रथमायाश्च द्विवचने भाषायाम् इति सूत्रेण किं भवति?

युष्मद्-शब्दात्, अस्मद्-शब्दात् च द्वितीयाविभक्तेः एकवचनविवक्षायां यथाक्रमं युष्मद् अम्, अस्मद् अम् इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

## [ १७.८] त्वमावेकवचने। (७.२.९७)

**सूत्रार्थः** – एकस्य उक्तौ युष्मदस्मदोः मपर्यन्तस्य त्वमौ स्तः विभक्तौ।

**सूत्रव्याख्या** – अनेन सूत्रेण त्व, म चेति आदेशौ विधीयेते। अतः विधिसूत्रम् इदम्। त्वमौ एकवचने चेति द्वे पदे अत्र। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति पदमनुवर्तते। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। मपर्यन्तस्य इति सम्पूर्णं सूत्रमनुवर्तते। विभक्तौ इति सप्तम्येकवचनान्तं पदम्। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति षष्ठ्येकवचनान्तं पदम्। त्वमौ इति प्रथमाद्विवचनान्तं पदम्। एकवचने इति सप्तम्येकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। एकस्य वचनम् एकवचनं, तस्मिन् एकवचने इति षष्ठीतत्पुरुषसमासः। त्व च म चेति विग्रहे इतरेतरद्वन्द्वसमासे त्वमौ चेति रूपम्। सूत्रार्थः भवति विभक्तौ परे सति एकत्वसंख्यायाम् उक्तायां युष्मद्-शब्दस्य, अस्मद्-शब्दस्य च मपर्यन्तस्य स्थाने यथाक्रमं त्व, म चेति आदेशौ भवतः इति।

**सूत्रार्थसमन्वयः** – युष्मद् अम्, अस्मद् अम् इत्यत्र अम् इति द्वितीयाविभक्तेः एकवचनम्। अतः तस्मिन् परे सति युष्मदस्मद्-शब्दयोः मपर्यन्तस्य स्थाने यथाक्रमम् अनेन सूत्रेण त्व, म चेति आदेशे त्व अद् अम्, म अद् अम् इति भवति। ततः अग्रिमं सूत्रं प्रवर्तते-

## [ १७.९] द्वितीयायाञ्च। (७.२.८७)

**सूत्रार्थः** – युष्मदस्मदोः आत्स्यात् द्वितीयायां विभक्तौ परतः।

**सूत्रव्याख्या** – अनेन सूत्रेण आत्त्वं विधीयते। अतः विधिसूत्रम् इदम्। द्वितीयायाम्, च चेति पदद्वयमत्र। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति पदमनुवर्तते। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। विभक्तौ इति सप्तम्येकवचनान्तं पदम्। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। द्वितीयायाम् इति सप्तम्येकवचनान्तं पदम्। च इति अव्ययपदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। तेन सूत्रार्थो भवति द्वितीयाविभक्तिः परं भवति चेद् अपि युष्मद्-शब्दस्य, अस्मद्-शब्दस्य च स्थाने आत् इति आदेशः भवति इति।

अनेन सूत्रेण आत् इति आदेशः विधीयते। आत् इत्यत्र आ-इत्यंशमात्रम् अवशिष्यते। स च आ-इत्यादेशः अलोऽन्त्यस्य इति परिभाषया दकारस्य स्थाने भवति।

**सूत्रार्थसमन्वयः** - त्व अद् अम्, म अद् अम् इति स्थितिः अत्र द्वितीयाविभक्तिः परम् अस्ति। तस्मात् प्रस्तुतसूत्रेण दकारस्य स्थाने आ इत्यादेशे त्व अ आ अम्, म अ आ अम् इति भवति। ततः अतो गुणे इति सूत्रेण पररूपे त्व आ अम्, म आ अम् इति स्थितिः आगच्छति। तदा अकः सवर्णे दीर्घः इति

सूत्रेण सवर्णदीर्घैकादेशे त्वा अम्, मा अम् इति जाते अमि पूर्वः इति सूत्रेण पूर्वरूपे त्वाम्, माम् चेति रूपद्वयं सिद्धम्।

युष्मद्-शब्दात् अस्मद्-शब्दात् च द्वितीयाविभक्तेः द्विवचनविवक्षायाम् औट्प्रत्यये अनुबन्धलोपे युष्मद् औ, अस्मद् औ इति स्थिते ङेप्रथमयोरम् इति सूत्रेण औप्रत्ययस्य स्थाने अमादेशे युष्मद् अम्, अस्मद् अम् इति जाते, युवावौ द्विवचने इति सूत्रेण युष्मदस्मदोः मपर्यन्तभागस्य स्थाने यथाक्रमं युव, आव चेति आदेशे युव अद् अम्, आव अद् अम् इति जाते द्वितीयायाञ्च इति सूत्रेण दकारस्य स्थाने आ-इत्यादेशे युव अ आ अम्, आव अ आ अम् इति स्थितिः भवति। ततः अतो गुणे इति सूत्रेण पररूपे, अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे युवा अम्, आवा अम् इति जाते, अमि पूर्वः इति सूत्रेण पूर्वरूपैकादेशे युवाम्, आवाम् चेति रूपद्वयं सिद्धम्।

अवधेयः विषयः - युष्मद्-शब्दस्य अस्मद्-शब्दस्य च प्रथमाविभक्तेः द्विवचने, द्वितीयाविभक्तेश्च द्विवचने समानमेव रूपं – युवाम्, आवाम् चेति। रूपसाम्ये अपि रूपसिद्धौ आकारविधायकसूत्रे भेदः दृश्यते। प्रथमाविभक्तौ प्रथमायाश्च द्विवचने भाषायाम् इति सूत्रेण, द्वितीयायाञ्च इति सूत्रेण आकारः आदिश्यते।

युष्मद्-शब्दस्य अस्मद्-शब्दस्य च द्वितीयाबहुवचनविवक्षायां शस्प्रत्यये अनुबन्धलोपे युष्मद् अस्, अस्मद् अस् इति स्थिते ङेप्रथमयोरम् इति सूत्रेण शस्प्रत्ययस्य स्थाने अमादेशे प्राप्ते अग्रिमं सूत्रं प्रवर्तते –

## [ १७.१०] शसो न। (७.१.२९)

**सूत्रार्थः** – युष्मदस्मद्भ्यां शसः नः स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण शस्प्रत्ययस्य स्थाने न-इत्यादेशः विधीयते। अतः विधिसूत्रम् इदम्। शसः, न चेति द्वे पदे अत्र। युष्मदस्मद्भ्यां ङसोऽश् इति सूत्रात् युष्मदस्मद्भ्याम् इति पदमनुवर्तते। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। शसः इति षष्ठ्येकवचनान्तं पदम्। न इति प्रथमैकवचनान्तं पदम्। न इत्यत्र सुविभक्तेः छान्दसः लुक् विहितः। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्। ततः पञ्चमीविभक्तेः द्विवचने युष्मदस्मद्भ्याम् इति। सूत्रार्थः भवति युष्मद्-शब्दात् अस्मद्-शब्दात् परस्य शस्प्रत्ययस्य स्थाने 'न' इति आदेशः भवति इति।

अनेन सूत्रेण विधीयमानः न इति आदेशः अलोऽन्त्यस्य इति परिभाषया अन्त्यस्य अलः सकारस्य स्थाने प्राप्नोति स्म। परन्तु आदेः परस्य इति परिभाषया असः (शसः) अकारस्य स्थाने भवति।

**बाध्यबाधकभावः** – ङेप्रथमयोरम् इति सूत्रेण शस्-विभक्तेः स्थाने अमादेशे प्राप्ते इदं सूत्रम् आरब्धम्। अतः ङेप्रथमयोरम् इति सूत्रस्य बाधकमिदं सूत्रम्।

**सूत्रार्थसमन्वयः** - युष्मद् अस्, अस्मद् अस् इति जाते अनेन सूत्रेण असः (शसः) अकारस्य स्थाने न-इति आदेशे युष्मद् न् स्, अस्मद् न् स् इति जाते द्वितीयायाञ्च इति सूत्रेण दकारस्य स्थाने आ इति आदेशे युष्म आ न् स्, अस्म आ न् स् इति जाते, अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे युष्मा न्

स्, अस्मा न् स् इति जाते, संयोगान्तस्य लोपः इति सूत्रेण सकारस्य लोपे वर्णमेलने युष्मान्, अस्मान् चेति रूपद्वयं सिद्ध्यति।

अवधेयविषयः – संयोगान्तस्य लोपः इति सूत्रं नलोपः प्रातिपदिकान्तस्य इति सूत्रदृष्ट्या असिद्धम्। अतः युष्मान्, अस्मान् इत्यत्र नकारस्य नलोपः प्रातिपदिकान्तस्य इति सूत्रेण लोपः न भवति। अपि च युष्मान् इत्यत्र नकारस्य अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णकाररूपः आदेशः प्राप्तः। परन्तु पदान्तस्य इति सूत्रेण तस्य निषेधो भवति।

युष्मद्-शब्दात्, अस्मद्-शब्दात् च तृतीयाविभक्तेः एकवचनविवक्षायां टाप्रत्यये अनुबन्धलोपे यथाक्रमं युष्मद् आ, अस्मद् आ इति स्थिते त्वमावेकवचने इति सूत्रेण युष्म् इति स्थाने त्व इति, अस्म् इति स्थाने म इति आदेशे त्व अद् आ, म अद् आ इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १७.११]   योऽचि। (७.२.८९)

**सूत्रार्थः** – युष्मदस्मदोः यकारादेशः स्यात् अनादेशे अजादौ परतः।

**सूत्रव्याख्या** – अनेन सूत्रेण युष्मदस्मदोः स्थाने यकारः आदिश्यते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् पदद्वयं वर्तते। यः, अचि इति सूत्रगतपदच्छेदः। युष्मदस्मदोरनादेशे इति सम्पूर्णं सूत्रम् अत्र अनुवर्तते। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति पदमनुवर्तते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। अनादेशे, विभक्तौ, अचि चेति सप्तम्येकवचनान्तानि पदानि। यः इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। न आदेशः अनादेशः इति नञ्तत्पुरुषः समासः, तस्मिन् अनादेशे इति। सूत्रार्थो भवति आदेशरहिते अजादौ विभक्तौ परतः युष्मद्-शब्दस्य अस्मद्-शब्दस्य च स्थाने य्-इति आदेशः भवति इति।

अनेन सूत्रेण विधीयमानस्य य इति आदेशस्य अन्तिमः अकारः उच्चारणार्थकः। तेन य् इत्येव आदेशः। अयं च आदेशः अलोऽन्त्यस्य इति परिभाषया युष्मद्-अस्मदोः दकारस्य स्थाने भवति। किञ्च, यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया अजादौ इति रूपं लभ्यते।

**सूत्रार्थसमन्वयः** – त्व अद् आ, म अद् आ इति स्थितिः। अत्र टा इति विभक्तिः अजादिः वर्तते। किञ्च, तत्र आदेशः अपि नास्ति। अतः तस्मिन् अनादेशे अजादौ विभक्तौ तस्मात् प्रस्तुतसूत्रेण दकारस्य स्थाने य् इत्यादेशे त्व अ य् आ, म अ य् आ इति जाते अतो गुणे इति सूत्रेण पररूपे वर्णमेलने त्वया, मया चेति रूपद्वयं सिद्धम्।

**अनादेशपदविचारः** - सूत्रे अनादेशे इति पदम् अस्ति। अनादेशे इति पदेन एतादृशः अर्थः आयाति – तादृशौ अजादौ विभक्तौ परतः युष्मद्-शब्दस्य, अस्मद्-शब्दस्य च स्थाने य्-इति आदेशो भवति, या अजादिविभक्तिः आदेशघटिता न भवति। तस्मादेव युष्मत्, अस्मत् इत्यादिषु य्-इति आदेशो न भवति। कारणं तावत् युष्मत्, अस्मत् चेति पञ्चमीबहुवचने रूपम्। तत्र भ्यस्-इति प्रत्ययस्य स्थाने पञ्चम्या अत् इति सूत्रेण अत् इति आदेशः भवति। अत् इति या अजादिविभक्तिः सा आदेशेन निष्पन्ना अस्ति।

युष्मद्-शब्दात्, अस्मद्-शब्दात् च तृतीयाविभक्तेः द्विवचनविवक्षायां भ्याम्प्रत्यये यथाक्रमं युष्मद् भ्याम्, अस्मद् भ्याम् इति स्थिते युवावौ द्विवचने इति सूत्रेण युष्मदस्मदोः मपर्यन्तस्य स्थाने युव अद् भ्याम्, आव अद् भ्याम् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १७.१२] युष्मदस्मदोरनादेशे। (७.२.८६)

**सूत्रार्थः** – युष्मदस्मदोः आत् स्यात् अनादेशे हलादौ परतः।

**सूत्रव्याख्या** – अनेन सूत्रेण युष्मदस्मदोः स्थाने आ-इत्यादेशः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे युष्मदस्मदोः, अनादेशे चेति पदद्वयं वर्तते। युष्मदस्मदोरनादेशे इति सम्पूर्णं सूत्रम् अत्र अनुवर्तते। रायो हलि इति सूत्रात् हलि इति पदम् अनुवर्तते। अष्टन आ विभक्तौ इति सूत्रात् विभक्तौ इति आ इति पदञ्चात्र अनुवर्तते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। अनादेशे, हलि, विभक्तौ चेति त्रीणि पदानि सप्तम्येकवचनान्तानि। हलि इति पदं विभक्तौ इति पदस्य विशेषणम्। तेन यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया हलादौ इत्यर्थः लभ्यते। आ इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। न आदेशः अनादेशः इति नञ्तत्पुरुषः समासः, तस्मिन् अनादेशे इति। सूत्रार्थः भवति आदेशभिन्ने हलादौ विभक्तौ परतः युष्मद्-शब्दस्य अस्मद्-शब्दस्य च स्थाने आ-इति आदेशः भवति इति।

अनेन सूत्रेण विधीयमानः आदेशः अलोऽन्त्यस्य इति परिभाषया युष्मदस्मदोः दकारस्य स्थाने भवति।

**सूत्रार्थसमन्वयः** – युव अद् भ्याम्, आव अद् भ्याम् इति स्थितिः। अत्र भ्याम् इति प्रत्ययः हलादिः वर्तते। किञ्च, तत्र कश्चित् आदेशः अपि न विहितः। अतः तस्मिन् अनादेशे हलादौ विभक्तौ परतः दकारस्य स्थाने आ-इत्यादेशे युव अ आ भ्याम्, आव अ आ भ्याम् इति भवति। ततः अकार-आकारयोः स्थाने अतो गुणे इति सूत्रेण पररूपे युव आ भ्याम्, आव आ भ्याम् इति भवति। ततः अकः सवर्णे दीर्घः इति सूत्रेण अकाराकारयोः स्थाने सवर्णदीर्घैकादेशे युवाभ्याम्, आवाभ्याम् चेति रूपद्वयं सिद्धम्।

युष्मद्-शब्दात् अस्मद्-शब्दात् च तृतीयाबहुवचनविवक्षायां भिस्प्रत्यये युष्मद् भिस्, अस्मद् भिस् इति स्थिते युष्मदस्मदोरनादेशे इति सूत्रेण दकारस्य स्थाने आकारे युष्म आ भिस्, अस्म आ भिस् इति जाते अकः सवर्णे दीर्घः इति सूत्रेण अकार-आकारयोः स्थाने सवर्णदीर्घैकादेशे सकारस्य रुत्वे विसर्गे च कृते युष्माभिः, अस्माभिः चेति रूपद्वयं सिद्धम्।

## पाठगतप्रश्नाः-३

११. त्वमावेकवचने इत्यस्य अर्थं लिखत।

१२. युष्मदस्मदोः द्वितीयायां विभक्तौ परतः आत् इति आदेशः केन सूत्रेण भवति?

१३. शसो न इति सूत्रं कस्य अपवादभूतम्?

१४. शसो न इति सूत्रेण विधीयमानं कार्यं कस्य स्थाने भवति?

१५. युष्मदस्मदोरनादेशे इति सूत्रस्यार्थं लिखत।

१६. त्वया इत्यत्र यकारादेशविधायकं सूत्रं किम्?

१७. युष्मा न् स् इति स्थिते सकारस्य लोपः केन सूत्रेण भवति?

---

युष्मद्-शब्दात्, अस्मद्-शब्दात् च चतुर्थीविभक्तेः एकवचनविवक्षायां ङेप्रत्यये यथाक्रमं युष्मद् ङे, अस्मद् ङे इति स्थिते ङेप्रथमयोरम् इति सूत्रेण ङेविभक्तेः स्थाने अम्-इति आदेशे युष्मद् अम्, अस्मद् अम् इति जाते अग्रिमं सूत्रम् आयाति -

## [ १७.१३] तुभ्यमह्यौ ङयि। (७.२.९५)

**सूत्रार्थः** – युष्मदस्मदोः मपर्यन्तस्य तुभ्यमह्यौ स्तः ङेविभक्तौ परतः।

**सूत्रव्याख्या** – अनेन सूत्रेण युष्मदस्मदोः मपर्यन्तस्य स्थाने यथाक्रमं तुभ्य, मह्य चेति आदेशौ विधीयेते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे तुभ्यमह्यौ, ङयि चेति पदद्वयं वर्तते। अत्र युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अत्र अनुवर्तते। मपर्यन्तस्य इति सम्पूर्णं सूत्रम् इह अधिक्रियते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति षष्ठ्येकवचनान्तं पदम्। तुभ्यमह्यौ इति प्रथमाद्विवचनान्तं पदम्। ङयि इति ङे-इत्यस्य सप्तम्येकवचने रूपम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। मं यावत् इति विग्रहे मयूरव्यंसकादिवत्समासे मपर्यन्तः इति रूपं, तस्य। तुभ्यश्च मह्यश्च इति विग्रहे इतरेतरद्वन्द्वसमासे तुभ्यमह्यौ इति रूपम्। सूत्रार्थः भवति ङेविभक्तौ परतः युष्मदस्मदोः मपर्यन्तस्य स्थाने यथाक्रमं तुभ्य, मह्य चेति आदेशौ भवतः इति।

**सूत्रार्थसमन्वयः** – युष्मद् अम्, अस्मद् अम् इति स्थितिः। अत्र स्थानिवद्भावेन अमं ङेविभक्तिरूपेण विभाव्य तस्मिन् परे युष्मदस्मदोः मपर्यन्तस्य स्थाने प्रस्तुतसूत्रेण यथाक्रमं तुभ्य, मह्य चेति आदेशे तुभ्य अद् अम्, मह्य अद् अम् इति भवति। ततः टिलोपपक्षे शेषे लोपः इति सूत्रेण टेः अद् इत्यस्य लोपे वर्णसम्मेलने तुभ्यम्, मह्यम् चेति रूपद्वयं सिद्ध्यति।

अन्त्यलोपपक्षे तुभ्य अद् अम्, मह्य अद् अम् इत्यत्र आदौ अतो गुणे इति सूत्रेण पररूपे तुभ्यद् अम्, मह्यद् अम् इति जाते शेषे लोपः इति सूत्रेण दकारस्य लोपे तुभ्य अम्, मह्य अम् इति जाते अमि पूर्वः इति सूत्रेण पूर्वरूपे एकादेशे तुभ्यम्, मह्यम् चेति रूपद्वयं निष्पन्नं भवति।

युष्मद्-शब्दात्, अस्मद्-शब्दात् च चतुर्थीविभक्तेः बहुवचनविवक्षायां भ्यस्प्रत्यये यथाक्रमं युष्मद् भ्यस्, अस्मद् भ्यस् इति स्थिते शेषे लोपः इति सूत्रेण टिलोपपक्षे टेः अद्-इत्यस्य लोपे युष्म् भ्यस्, अस्म् भ्यस् इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १७.१४] भ्यसोऽभ्यम्। (७.१.३०)

**सूत्रार्थः** – युष्मदस्मद्भ्यां परस्य भ्यसः अभ्यमादेशः स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण भ्यस्-प्रत्ययस्य स्थाने अभ्यम् इति आदेशः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे पदद्वयं वर्तते। भ्यसः, अभ्यम् इति सूत्रगतपदच्छेदः। युष्मदस्मद्भ्याम् ङसोऽश् इति सूत्रात् युष्मदस्मद्भ्याम् इति पदम् अनुवर्तते। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। भ्यसः इति षष्ठ्येकवचनान्तं पदम्। अभ्यम् इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, ताभ्यां युष्मदस्मद्भ्याम् इति। सूत्रार्थो भवति युष्मद्-शब्दात् अस्मद्-शब्दात् परस्य भ्यस्प्रत्ययस्य स्थाने अभ्यम् इति आदेशः भवति इति।

अनेन सूत्रेण विधीयमानः आदेशः अनेकाल्शित्सर्वस्य इति परिभाषाबलात् सम्पूर्णस्य भ्यस्विभक्तेः स्थाने भवति।

**सूत्रार्थसमन्वयः** – युष्म् भ्यम्, अस्म् भ्यम् इत्यवस्थायां प्रस्तुतसूत्रेण भ्यस्प्रत्ययस्य स्थाने अभ्यम् इति आदेशे युष्मभ्यम्, अस्मभ्यम् चेति रूपद्वयं सिद्धम्।

**अवधेयः विषयः** – शेषे लोपः इति सूत्रेण अन्त्यभागस्य लोपः भवति इति ये कथयन्ति तेषां मते सूत्रस्य स्वरूपं तावत् भ्यसो भ्यम् इति। तस्मिन् पक्षे युष्मद् भ्यस्, अस्मद् भ्यस् इति स्थिते शेषे लोपः इति सूत्रेण दकारस्य लोपे युष्म भ्यस्, अस्म भ्यस् इति जाते प्रस्तुतसूत्रेण भ्यस्प्रत्ययस्य स्थाने भ्यम् इत्यादेशे वर्णसम्मेलने युष्मभ्यम्, अस्मभ्यम् चेति रूपे भवतः।

## [ १७.१५] एकवचनस्य च। (७.१.३२)

**सूत्रार्थः** – युष्मदस्मद्भ्यां परस्य पञ्चम्याः एकवचनस्य अदादेशः स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण ङसिविभक्तेः स्थाने अत्-इत्यादेशः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे एकवचनस्य, च चेति पदद्वयम्। युष्मदस्मद्भ्याम् ङसोऽश् इति सूत्रात् युष्मदस्मद्भ्याम् इति पदम् अनुवर्तते। पञ्चम्या अत् इति सम्पूर्णं सूत्रमनुवर्तते। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। पञ्चम्याः, एकवचनस्य चेति षष्ठ्येकवचनान्तं पदम्। चेति अव्ययपदम्। अत् इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, ताभ्यां युष्मदस्मद्भ्याम् इति। एकस्य वचनम् एकवचनमिति षष्ठीतत्पुरुषः समासः। सूत्रार्थो भवति युष्मद्-शब्दात् अस्मद्-शब्दात् च परस्य पञ्चमीविभक्तेः एकवचनस्य ङसि-इत्यस्य स्थाने अत् इति आदेशः भवति। अयं च अत् इति आदेशः अनेकाल्शित्सर्वस्य इति परिभाषया सम्पूर्णस्य ङसि-इत्यस्य स्थाने भवति इति।

**सूत्रार्थसमन्वयः** – युष्मद्-शब्दात्, अस्मद्-शब्दात् च पञ्चमीविभक्तेः एकवचनविवक्षायां ङसिप्रत्यये यथाक्रमं युष्मद् ङसि, अस्मद् ङसि इति स्थिते प्रस्तुतसूत्रेण ङसि-इत्यस्य स्थाने अत्-इति आदेशे युष्मद् अत्, अस्मद् अत् इति जाते त्वमावेकवचने इति सूत्रेण युष्मदस्मदोः मपर्यन्तस्य स्थाने

यथाक्रमं त्व, म चेति आदेशे त्व अद् अत्, म अद् अत् इति जाते शेषे लोपः इति सूत्रेण टिलोपपक्षे टेः अद्भागस्य लोपे त्व अत्, म अत् इति जाते अतो गुणे इति सूत्रेण पररूपे त्वत्, मत् चेति रूपद्वयं सिद्धम्।

शेषे लोपः इति सूत्रेण अन्त्यलोपपक्षे आदौ अतो गुणे इति सूत्रेण पररूपे त्वद् अत्, मद् अत् इति जाते शेषे लोपः इति सूत्रेण दकारस्य लोपे त्व अत्, म अत् इति जाते, पुनः अतो गुणे इति सूत्रेण पररूपे त्वत्, मत् चेति रूपद्वयं सिद्धम्।

**अवधेयः विषयः** – अत् इत्यत्र तकारस्य हलन्त्यम् इति सूत्रेण लोपः न भवति, न विभक्तौ तुस्माः इति सूत्रेण निषेधात्।

युष्मद्-शब्दात्, अस्मद्-शब्दात् च पञ्चमीविभक्तेः बहुवचनविवक्षायां भ्यस्प्रत्यये यथाक्रमं युष्मद् भ्यस्, अस्मद् भ्यस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते -

## [ १७.१६] पञ्चम्या अत्। (७.१.३१)

**सूत्रार्थः** – युष्मदस्मद्भ्यां पञ्चम्याः भ्यसः अत् स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण भ्यस्-प्रत्ययस्य स्थाने अत्-इत्यादेशः विधीयते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् पञ्चम्याः, अत् चेति पदद्वयं वर्तते। युष्मदस्मद्भ्याम् ङसोऽश् इति सूत्रात् युष्मदस्मद्भ्याम् इति पदम् अनुवर्तते। भ्यसोऽभ्यम् इति सूत्रात् भ्यसः इति पदमनुवर्तते। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। भ्यसः, पञ्चम्याः चेति षष्ठ्येकवचनान्तं पदद्वयम्। अत् इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, ताभ्यां युष्मदस्मद्भ्याम् इति। सूत्रार्थो भवति युष्मद्-शब्दात् अस्मद्-शब्दात् च परस्य पञ्चमीविभक्तेः भ्यस्-प्रत्ययस्य स्थाने अत् इति आदेशः भवति इति।

सूत्रेणानेन विधीयमानः अत् इति आदेशः अनेकाल्शित्सर्वस्य इति परिभाषया सम्पूर्णस्य भ्यस्-इत्यस्य स्थाने भवति।

**सूत्रार्थसमन्वयः** –युष्मद् भ्यस् अस्मद् भ्यस् इत्यवस्थायां प्रस्तुतसूत्रेण भ्यस्-इत्यस्य स्थाने अत्-इति आदेशे युष्मद् अत्, अस्मद् अत् इति जाते शेषे लोपः इति सूत्रेण टिलोपपक्षे टेः अद्भागस्य लोपे युष्म् अत्, अस्म् अत् इति जाते वर्णमेलने युष्मत्, अस्मत् चेति रूपद्वयं सिद्धम्।

अन्त्यलोपपक्षे आदौ युष्मद् अत्, अस्मद् अत् इति जाते शेषे लोपः इति सूत्रेण दकारस्य लोपे युष्म अत्, अस्म अत् इति जाते अतो गुणे इति सूत्रेण पररूपे युष्मत्, अस्मत् चेति रूपद्वयं सिद्धम्।

युष्मद्-शब्दात्, अस्मद्-शब्दात् च षष्ठीविभक्तेः एकवचनविवक्षायां ङस्प्रत्यये यथाक्रमं युष्मद् ङस्, अस्मद् ङस् इति स्थिते सूत्रम् आगच्छति -

## [ १७.१७] तवममौ ङसि। (७.२.९६)

**सूत्रार्थः** – युष्मदस्मदोः मपर्यन्तस्य तवममौ स्तः ङसि।

**सूत्रव्याख्या** – अनेन सूत्रेण युष्मदस्मदोः स्थाने यथाक्रमं तव, मम चेति आदेशौ विधीयेते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे तवममौ, ङसि चेति पदद्वयं राजते। युष्मदस्मदोरनादेशे इति सूत्रात् युष्मदस्मदोः इति पदम् अनुवर्तते। मपर्यन्तस्य इति सूत्रम् अधिक्रियते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम्। मपर्यन्तस्य इति षष्ठ्येकवचनान्तं पदम्। तवममौ इति प्रथमाद्विवचनान्तं पदम्। ङसि इति ङस्प्रत्ययस्य सप्तम्येकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, तयोः युष्मदस्मदोः इति। मं यावत् इति विग्रहे मयूरव्यंसकादिवत्समासे मपर्यन्तः इति रूपं, तस्य। तव च मम च इति विग्रहे इतरेतरद्वन्द्वसमासे तवममौ इति रूपम्। सूत्रार्थो भवति युष्मद्-शब्दस्य अस्मद्-शब्दस्य च मपर्यन्तस्य स्थाने यथाक्रमं तव, मम चेति आदेशौ भवतः ङस्प्रत्यये परे सति इति।

**उदाहरणम्** –तव, मम चेति उदाहरणद्वयम् अत्र।

**सूत्रार्थसमन्वयः** –युष्मद् ङस्, अस्मद् ङस् इत्यवस्थायां ङसिप्रत्यये परे सति प्रस्तुतसूत्रेण युष्मदस्मदोः मपर्यन्तस्य स्थाने यथाक्रमं तव, मम चेति आदेशे तव अद् ङस्, मम अद् ङस् इति जाते अग्रिमं सूत्रं प्रवर्तते-

## [ १७.१८] युष्मदस्मद्भ्यां ङसोऽश्। (७.१.२७)

**सूत्रार्थः** – युष्मदस्मद्भ्यां परस्य ङसः अशादेशः स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण ङस्प्रत्ययस्य स्थाने अश्-इत्यादेशः विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। युष्मदस्मद्भ्याम्, ङसः, अश् इति सूत्रगतपदच्छेदः। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। ङसः इति षष्ठ्येकवचनान्तं पदम्, अश् इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, ताभ्यां युष्मदस्मद्भ्याम् इति। युष्मद्-शब्दात् अस्मद्-शब्दात् च परस्य ङस्प्रत्ययस्य स्थाने अश् इत्यादेशः भवति इति।

अनेन सूत्रेण विधीयमानः अश् इति आदेशः यद्यपि आदेः परस्य इति परिभाषया असः (ङसः) अकारस्य स्थाने प्राप्नोति, तथापि अनेकाल्शित्सर्वस्य इति परिभाषया सम्पूर्णस्य ङसः स्थाने प्राप्नोति। अशः अकारमात्रम् अवशिष्यते।

**सूत्रार्थसमन्वयः** – तव अद् ङस्, मम अद् ङस् इति जाते प्रस्तुतसूत्रेण ङसः स्थाने अश्-इत्यादेशे अनुबन्धलोपे तव अद् अ, मम अद् अ इति जाते शेषे लोपः इति सूत्रेण टिलोपपक्षे टेः अद्भागस्य लोपे तव अ, मम अ इति जाते अतो गुणे इति सूत्रेण पररूपैकादेशे तव मम चेति रूपद्वयं सिद्धम्।

शेषे लोपः इति सूत्रस्य अन्त्यलोपपक्षे आदौ अतो गुणे इति सूत्रेण पररूपे तवद् अ, ममद् अ इति जाते शेषे लोपः इति सूत्रेण अन्त्यस्य दकारस्य लोपे तव अ, मम अ इति जाते पुनः अतो गुणे इति सूत्रेण पररूपैकादेशे तव, मम चेति रूपद्वयं निष्पद्यते।

युष्मद् ओस् अस्मद् ओस् इति जाते युवावौ द्विवचने इति सूत्रेण युष्मदस्मदोः मपर्यन्तभागस्य स्थाने यथाक्रमं युव, आव चेति आदेशे युव अद् ओस्, आव अद् ओस् इति जाते योऽचि इति सूत्रेण

दकारस्य स्थाने यकारादेशे युव अय् ओस्, आव अय् ओस् इति जाते अतो गुणे इति सूत्रेण पररूपैकादेशे सस्य रुत्वे विसर्गे च कृते ततः वर्णसम्मेलने यथाक्रमं युवयोः आवयोः चेति रूपद्वयं साधु।

## [ १७.१९] साम आकम्। (७.१.३३)

**सूत्रार्थः** – युष्मदस्मद्भ्यां परस्य साम आकं स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण युष्मद्-शब्दात् अस्मद्-शब्दात् च परस्य सामः स्थाने आकम् इति आदेशो विधीयते। अतः विधिसूत्रम् इदम्। सामः, आकम् चेति पदद्वयं वर्तते अस्मिन् सूत्रे। युष्मदस्मद्भ्यां ङसोऽश् इति सूत्रात् युष्मदस्मद्भ्याम् इति पदम् अनुवर्तते। युष्मदस्मद्भ्याम् इति पञ्चमीद्विवचनान्तं पदम्। सामः इति षष्ठ्येकवचनान्तं पदम्। आकम् इति प्रथमैकवचनान्तं पदम्। युष्मद् च अस्मद् च इति विग्रहे इतरेतरद्वन्द्वसमासे युष्मदस्मदे इति पदम्, ताभ्यां युष्मदस्मद्भ्याम् इति। सूत्रार्थो भवति युष्मद्-शब्दात् अस्मद्-शब्दात् च परस्य साम्-इत्यस्य स्थाने आकम् इति आदेशो भवति इति।

अस्मिन् सूत्रे साम् इति सुट्-सहितस्य आमः ग्रहणम्। अयं च आकमादेशः अनेकाल्शित्सर्वस्य इति परिभाषया सम्पूर्णस्य सामः स्थाने भवति।

**विचारः** – युष्मद् आम् अस्मद् आम् इत् स्थिते युष्मद्-शब्दः अस्मद्-शब्दश्च अवर्णान्तः नास्ति। तस्मात् आमि सर्वनाम्नः सुट् इति सूत्रेण सुट् इति आगमः नैव प्राप्नोति। तेन सुट्सहितस्य आमः अभावात् सूत्रे सामः इति निर्देशः कथमिति प्रश्नः। अस्य समाधानं तावत् सूत्रे सामः इति ससुट्कनिर्देशः भाविकाले सम्भविष्यतः सुटः निवृत्त्यर्थं भवति। तथाहि यदि आम आकम् इति सूत्रं क्रियते तदा आमः आकमादेशे कृते शेषे लोपः इत्यनेन दकारस्य लोपे कृते युष्म आकम्, अस्म आकम् इति भवति। तदा युष्मद्-शब्दः अस्मद्-शब्दश्च अकारान्तः सम्पद्यते। तस्मात् आमि सर्वनाम्नः सुट् इति सूत्रेण सुडागमः प्राप्नोति। स यथा न स्यात् तदर्थं सूत्रे सामः इति ससुट्कनिर्देशः। तेन आकमादेशात् अनन्तरम् शेषे लोपः इति सूत्रेण अन्त्यलोपपक्षे यद्यपि युष्मच्छब्दः, अस्मच्छब्दः च अकारान्तः सम्पद्यते तथापि सुट् न प्राप्नोति। अन्यथा ससुट्कनिर्देशः व्यर्थः स्यात्।

अतः सूत्रेण अनेन कार्यद्वयं सिद्ध्यति। एकं भवति आमः स्थाने आकमादेशविधानम्। द्वितीयं च दकारस्य लोपे कृते प्राप्तस्य सुडागमस्य निषेधः।

**सूत्रार्थसमन्वयः** – युष्मद्-शब्दात्, अस्मद्-शब्दात् च षष्ठीविभक्तेः बहुवचनविवक्षायाम् आम्प्रत्यये युष्मद् आम् अस्मद् आम् इति स्थिते साम आकम् इति सूत्रेण आमः आकमादेशे युष्मद् आकम्, अस्मद् आकम् इति जाते अन्त्यलोपपक्षे शेषे लोपः इति सूत्रेण दकारस्य लोपे युष्म आकम्, अस्म आकम् इति जाते अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे युष्माकम्, अस्माकम् चेति रूपद्वयम्। शेषे लोपः इति सूत्रेण टिलोपपक्षे टेः अद्भागस्य लोपे युष्म् आकम्, अस्म् आकम् इति जाते वर्णमेलने युष्माकम् अस्माकम् चेति रूपद्वयम्।



## पाठगतप्रश्नाः-४

१८. ङेप्रत्यये परे सति युष्मदस्मदोः मपर्यन्तस्य स्थाने कः आदेशः भवति?

१९. भ्यस्प्रत्ययस्य स्थाने कः आदिश्यते?

२०. युष्मदस्मद्भ्यां परस्य ङसिप्रत्ययस्य स्थाने केन सूत्रेण कः आदिश्यते?

२१. ङस्प्रत्यये परे सति युष्मदस्मदोः मपर्यन्तस्य स्थाने किम् आदिश्यते?

२२. साम आकम् इति सूत्रस्य अर्थं लिखत।

२३. पञ्चम्या अत् इति सूत्रेण किं विधीयते?

२४. युष्मदस्मद्भ्यां परस्य ङसः स्थाने केन सूत्रेण किम् आदिश्यते?

---

द्वितीयाविभक्तौ, चतुर्थीविभक्तौ, षष्ठीविभक्तौ युष्मदस्मद्-शब्दविषये कश्चित् विशेषः अवलोक्यते। अस्मिन् भागे सः विषयः ससूत्रं पर्यालोच्यते।

## [ १७.२०] युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ॥ (८.१.२०)

**सूत्रार्थः** – पदात् परयोः अपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोः वाम्, नौ इत्यादेशौ स्तः।

**सूत्रव्याख्या** -सूत्रेणानेन युष्मदस्मदोः स्थाने यथाक्रमं वाम्, नौ चेति आदेशः विधीयते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। युष्मदस्मदोः, षष्ठीचतुर्थीद्वितीयास्थयोः वान्नावौ चेति त्रीणि पदानि सन्ति। अस्मिन् सूत्रे पदात् (८.१.१७) इति सूत्रम् अधिकृतम्। तच्च पञ्चम्येकवचनान्तम्। अनुदात्तं सर्वमपादादौ (८.१.१८) इति सूत्रमपि अत्र अधिक्रियते। अपादादौ इत्यत्र नञ्तत्पुरुषसमासः। नञ् चात्र प्रसज्यप्रतिषेधार्थकः। पदस्य (८.१.१६) इति सूत्रम् अधिकृतम्। तच्च द्विवचनान्ततया विपरिणम्यते। युष्मदस्मदोः इति षष्ठीद्विवचनान्तम्, इतरेतरद्वन्द्वसमासनिष्पन्नं पदम्। षष्ठीचतुर्थीद्वितीयास्थयोः इत्यपि षष्ठीद्विवचनान्तम् इतरेतरद्वन्द्वसमासनिष्पन्नं पदम्। वान्नावौ इति प्रथमाद्विवचनान्तम् आदेशबोधकं पदम्। तेन सूत्रस्य अन्वयः भवति पदात् अपादादौ षष्ठीचतुर्थीद्वितीयास्थयोः युष्मदस्मदोः पदयोः वान्नावौ इति। अतः सूत्रस्य सामान्यार्थः भवति – पदात् परं षष्ठीविभक्त्या, चतुर्थीविभक्त्या, द्वितीयाविभक्त्या च सह वर्तमानस्य युष्मद्-शब्दस्य अस्मद्-शब्दस्य च स्थाने यथाक्रमं वान्, नौ आदेशौ भवतः इति। परन्तु अयम् आदेशः पादस्य आदौ न भवति इति।

**उदाहरणम्** –

द्वितीयायाम् -शिक्षकः वां (युवाम्) पाठयति। शिक्षकः नौ (आवाम्) पाठयति।

चतुर्थ्याम् – राजा वां (युवाभ्याम्) धनं यच्छति। राजा नौ (आवाभ्याम्) धनं यच्छति।

षष्ठ्याम् – इदं पुस्तकम् वाम् (युवयोः) अस्ति। इदं पुस्तकं नौ (आवयोः) अस्ति।



**सूत्रार्थसमन्वयः** – अत्र सर्वत्र द्वितीयादिविभक्तिस्थः युष्मद्-शब्दः अस्मद्-शब्दश्च पादादौ न स्तः। किञ्च, तौ कस्माच्चित् पदात् परमेव प्रयुक्तौ। अतः अनेन सूत्रेण सम्पूर्णस्य द्वितीयादिविभक्तिस्थस्य युष्मद्-शब्दस्य, अस्मद्-शब्दस्य च स्थाने यथाक्रमं वाम्, नौ चेति आदेशौ भवतः।

एकस्मिन् श्लोके चत्वारः पादाः भवन्ति। अस्मिन् सूत्रे अपादादौ इति निषेधात् पादस्य आदौ एतौ आदेशौ न भवतः। तथाहि आवयोर्हरसि व्यथाम् इति अनुष्टुप्छन्दोबद्धे एकस्मिन् पादे आदौ विद्यमानस्य षष्ठीविभक्तिस्थस्य युष्मद्-शब्दस्य स्थाने अनेन सूत्रेण वाम् इति आदेशः न भवति।

इदं सूत्रं केवलं द्वितीयाविभक्तेः, चतुर्थीविभक्तेः, षष्ठीविभक्तेश्च द्विवचने प्रयुज्यते। अधुना एतस्य अपवादभूतानि सूत्राणि आलोच्यन्ते -

## [ १७.२१] बहुवचनस्य वस्नसौ। (८.१.२१)

**सूत्रार्थः** – पदात् परयोः अपादादौ स्थितयोः षष्ठ्यादिबहुवचनान्तयोः युष्मदस्मदोः वस्नसौ स्तः।

**सूत्रव्याख्या** – अनेन सूत्रेण वस्, नस् चेति आदेशौ विधीयेते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। बहुवचनस्य इति षष्ठ्येकवचनान्तं पदम्। तच्च षष्ठीद्विवचनान्ततया विपरिणम्यते। वस्नसौ इति प्रथमाद्विवचनान्तं पदम्। पूर्वसूत्रे अधिकृतानि सूत्राणि अत्रापि आगच्छन्ति। किञ्च, पूर्वस्मात् सूत्रात् युषमदस्मदोः, षष्ठीचतुर्थीद्वितीयास्थयोः चेति षष्ठीद्विवचनान्तं पदद्वयम् अनुवर्तते। अतः सूत्रस्य सामान्यार्थः भवति – पदात् परं षष्ठीबहुवचनान्तस्य, चतुर्थीबहुवचनान्तस्य तथा द्वितीयाबहुवचनान्तस्य युष्मद्-शब्दस्य अस्मद्-शब्दस्य च स्थाने यथाक्रमं वस्, नस् चेति आदेशौ भवतः इति। परन्तु अयम् आदेशः पादस्य आदौ न भवति इति।

**उदाहरणम्** –

द्वितीयायाम् -शिक्षकः वः (युष्मान्) पाठयति। शिक्षकः नः (अस्मान्) पाठयति।

चतुर्थ्याम् – राजा वः (युष्मभ्यम्) धनं यच्छति। राजा नः (अस्मभ्यम्) धनं यच्छति।

षष्ठ्याम् – इदं पुस्तकम् वः (युष्माकम्) अस्ति। इदं पुस्तकं नः (अस्माकम्) अस्ति।

**सूत्रार्थसमन्वयः** – अत्र उदाहरणेषु सर्वत्र युष्मदस्मच्छब्दौ पादादौ न स्तः। एतौ कस्मादपि पदात् परमेव वर्तेते। किञ्च, एतौ षष्ठ्यादिबहुवचनान्तौ अपि वर्तेते। अतः अनेन सूत्रेण अत्र वस्, नस् चेति आदेशौ भवतः।

सूत्रे अपादादौ इति कथनात् पादादौ षष्ठ्यादिबहुवचनान्तौ युष्मदस्मच्छब्दौ भवतः चेत् अनेन सूत्रेण वस्, नस् चेति आदेशौ न भविष्यतः।

## [ १७.२२] तेमयावेकवचनस्य। (८.१.२२)

**सूत्रार्थः** – पदात् परयोः अपादादौ स्थितयोः युष्मदस्मदोः षष्ठीचतुर्थ्येकवचनान्तयोः ते मे एतौ स्तः।



**सूत्रव्याख्या** – अनेन सूत्रेण ते, मे चेति आदेशौ विधीयेते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। तेमयौ इति प्रथमाद्विवचनान्तम् आदेशबोधकं पदम्। एकवचनस्य इति षष्ठ्येकवचनान्तं पदम्। तच्च षष्ठीद्विवचनान्ततया विपरिणम्यते। पूर्वस्मिन् सूत्रे अधिकृतानि सूत्राणि अत्रापि आगच्छन्ति। किञ्च, पूर्वस्मात् सूत्रात् युषमदस्मदोः, षष्ठीचतुर्थीद्वितीयास्थयोः चेति षष्ठीद्विवचनान्तं पदद्वयम् अनुवर्तते। परन्तु एतस्य सूत्रस्य अपवादभूतम् अग्रिमं सूत्रं भवति त्वामौ द्वितीयायाः इति। तच्च सूत्रं द्वितीयैकवचनान्तस्य युष्मच्छब्दस्य, अस्मच्छब्दस्य च स्थाने आदेशं विदधाति। अतः तेमयावेकवचनस्य इति सूत्रं षष्ठ्येकवचने, चतुर्थ्येकवचने च कार्यं साधयति। तेन सूत्रस्य सरलार्थः भवति – पदात् परं षष्ठ्येकवचनान्तस्य तथा चतुर्थ्येकवचनान्तस्य युष्मद्-शब्दस्य अस्मद्-शब्दस्य च स्थाने यथाक्रमं ते, मे चेति आदेशौ भवतः इति। परन्तु अयम् आदेशः पादस्य आदौ न भवति इति।

**उदाहरणम्** – चतुर्थ्याम् – राजा ते (तुभ्यम्) धनं यच्छति। राजा मे (मह्यम्) धनं यच्छति।

षष्ठ्याम् – विष्णुः ते (तव) स्वामी। त्वं मे (मम) दासः।

**सूत्रार्थसमन्वयः** – पूर्वोक्तोदाहरणेषु युष्मच्छब्दः, अस्मच्छब्दश्च चतुर्थ्येकवचनान्तः, षष्ठ्येकवचनान्तश्च भवति। एतौ पदात् परमेव वर्तेते। किञ्च, पादादौ अपि न भवतः। तेन प्रस्तुतसूत्रेण युष्मच्छब्दस्य स्थाने ते इति, अस्मच्छब्दस्य च स्थाने मे इति आदेशः भवति।

पूर्वसूत्रवत् अस्मिन् अपि सूत्रे अपादादौ इति कथनात् पादादौ चतुर्थ्येकवचनान्तः, षष्ठ्येकवचनान्तः युष्मच्छब्दः, अस्मच्छब्दः भवति चेत् अनेन सूत्रेण ते, मे चेति आदेशौ न भविष्यतः।

## [ १७.२३] त्वामौ द्वितीयायाः (८.१.२३)

**सूत्रार्थः** – पदात्परयोः अपादादौ स्थितयोः द्वितीयैकवचनान्तयोः युष्मदस्मदोः त्वा मा इत्यादेशौ स्तः।

**सूत्रव्याख्या** – अनेन सूत्रेण त्वा, मा चेति आदेशौ विधीयेते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे त्वामौ इति प्रथमाद्विवचनान्तं, द्वितीयायाः इति षष्ठ्येकवचनान्तं पदद्वयं वर्तते। पूर्वस्मिन् सूत्रे अधिकृतानि सूत्राणि अत्रापि आगच्छन्ति। युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ इति सूत्रात् युष्मदस्मदोः इति षष्ठीद्विवचनान्तं पदम् अनुवर्तते। किञ्च, तेमयावेकवचनस्य इति सूत्रात् एकवचनस्य इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। तच्च षष्ठीद्विवचनान्ततया विपरिणम्यते। तेन सूत्रस्य सरलार्थः भवति पदात् परं द्वितीयैकवचनान्तस्य युष्मद्-शब्दस्य अस्मद्-शब्दस्य च स्थाने यथाक्रमं त्वा, मा चेति आदेशौ भवतः इति। परन्तु अयम् आदेशः पादस्य आदौ न भवति इति।

**उदाहरणम्** – देवः त्वा (त्वाम्) अवतु। देवः मा (माम्) अवतु इति।

**सूत्रार्थसमन्वयः** – पूर्वोक्तोदाहरणे युष्मच्छब्दः, अस्मच्छब्दश्च द्वितीयैकवचनान्तः भवति। एतौ पदात् परमेव वर्तेते। किञ्च, पादादौ अपि न भवतः। तेन प्रस्तुतसूत्रेण युष्मच्छब्दस्य स्थाने त्वा इति, अस्मच्छब्दस्य च स्थाने मा इति आदेशः भवति।

पूर्वसूत्रवत् अस्मिन् अपि सूत्रे अपादादौ इति कथनात् पादादौ द्वितीयैकवचनान्तः युष्मच्छब्दः, अस्मच्छब्दः भवति चेत् अनेन सूत्रेण त्वा, मा चेति आदेशौ न भविष्यतः।

एतौ यौ आदेशौ युष्मच्छब्दस्य, अस्मच्छब्दस्य स्थाने विहितौ तौ समानवाक्ये एव भवतः। वाक्यं नाम यत्र एकं तिङन्तं पदं मुख्यं भवति। तेन ओदनं पच, तव भविष्यति इति वाक्यद्वयं सम्पद्यते। अतः तव इति पदात् परं न भवति। अतः तव इति पदस्य स्थाने ते इति आदेशः न भवति।

एवं युष्मदस्मदादेशविषये अन्ये अपि नियमाः सन्ति। अधिकजिज्ञासवः लघुसिद्धान्तकौमुदीं सिद्धान्तकौमुदीं वा परिशीलयन्तु।

## पाठसारः

पाठस्य अस्य आदावेव तद्-शब्दः आलोचितः। त्रिषु अपि लिङ्गेषु प्रयुक्तः अयं शब्दः परोक्षं वस्तु बोधयति। अत्र सुप्रत्यये परे सति दकारस्य स्थाने त्यदादीनामः इति सूत्रेण अकारः आदिश्यते। ततः अतो गुणे इति सूत्रेण पररूपैकादेशः, ततः तदोः सः सावनन्त्ययोः इति सूत्रेण अनन्त्यस्य तकारस्य स्थाने स् इति आदेशः भवति। अन्यत्र सर्वत्र सर्वशब्दवत् रूपाणि भवन्ति।

युष्मदस्मद्-शब्दयोः आलोचनाकाले केचन विषयाः अस्माभिः दृष्टाः। ते क्रमशः अधः प्रदीयन्ते।

- मपर्यन्तस्य आदेशविषये –
  - एकवचने सुप्रत्ययं, ङेप्रत्ययं, ङस्प्रत्ययं च परित्यज्य अन्यत्र सर्वत्र त्वमावेकवचने इति सूत्रं प्रवर्तते। सुप्रत्ययस्थले त्वाहौ सौ इति सूत्रं, ङेप्रत्ययस्थले तुभ्यमह्यौ ङयि इति सूत्रं तथा ङस्प्रत्ययस्थले तवममौ ङसि इति सूत्रं प्रवर्तते।
  - द्विवचने सर्वत्र मपर्यन्तस्य स्थाने युवावौ द्विवचने इति सूत्रेण युव, आव चेति आदेशौ भवतः।
  - बहुवचने जस्प्रत्ययं परित्यज्य कुत्रापि मपर्यन्तस्य स्थाने आदेशः भवति। जसि यूयवयौ जसि इति सूत्रेण यूय, वय चेति आदेशौ भवतः।
- विभक्तेः स्थाने आदेशविषये –

  शस्प्रत्ययं परित्यज्य प्रथमाद्वितीयाविभक्तीनां स्थाने, ङेप्रत्ययस्य च स्थाने ङेप्रथमयोरम् इति सूत्रेण अमादेशः भवति। शसः स्थाने शसो न इति सूत्रेण न इति आदेशः, सामः (आमः) स्थाने साम आकम् इति सूत्रेण आकम् इति आदेशः, पञ्चम्याः एकवचनस्य बहुवचनस्य च स्थाने युष्मदस्मद्भ्यां ङसोऽश् इति सूत्रेण अश् इति आदेशः, पञ्चम्याः एकवचनस्य बहुवचनस्य च स्थाने पञ्चम्या अत् इति सूत्रेण अत् इति आदेशः भवति। अन्यत्र विभक्तीनां स्थाने कोऽपि आदेशः न भवति।
- आत्वविषये –



प्रथमायाः द्विवचने औप्रत्यये परे सति प्रथमायाश्च द्विवचने भाषायाम् इति सूत्रेण, द्वितीयाविभक्तौ परे सति द्वितीयायाञ्च इति सूत्रेण, भ्याम्प्रत्यये, भिस्प्रत्यये, सुप्प्रत्यये च परे सति युष्मदस्मदोरनादेशे इति सूत्रेण युष्मदस्मदोः दकारस्य स्थाने आकाररूपः आदेशः भवति।

➢ यत्वविषये –

टाप्रत्यये, ओसि तथा ङिप्रत्यये परे सति योऽचि इति सूत्रेण यकाररूपः आदेशः भवति।

➢ शेषे लोपः इति सूत्रविषये –

प्रथमायाः, पञ्चम्याः, चतुर्थ्याः, षष्ठ्याश्च एकवचने बहुवचने च शेषे लोपः इति सूत्रं प्रवर्तते।

## योग्यतावर्धनम्

अस्मिन् भागे तद्-शब्दस्य, अस्मच्छब्दस्य युष्मच्छब्दस्य च रूपाणि प्रदीयन्ते। एतानि रूपाणि छात्राः कण्ठस्थीकुर्वन्तु।

१. पुंलिङ्गे तद्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | सः | तौ | ते |
| द्वितीयायाम् | तम् | तौ | तान् |
| तृतीयायाम् | तेन | ताभ्याम् | तैः |
| चतुर्थ्याम् | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चम्याम् | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठ्याम् | तस्य | तयोः | तेषाम् |
| सप्तम्याम् | तस्मिन् | तयोः | तेषु |

२. अस्मद्-शब्दरूपाणि-

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | अहम् | आवाम् | वयम् |
| द्वितीयायाम् | माम् | आवाम् | अस्मान् |
| तृतीयायाम् | मया | आवाभ्याम् | अस्माभिः |
| चतुर्थ्याम् | मह्यम् | आवाभ्याम् | अस्मभ्यम् |
| पञ्चम्याम् | मत् | आवाभ्याम् | अस्मत् |

| **षष्ठ्याम्** | मम | आवयोः | अस्माकम् |
|---|---|---|---|
| **सप्तम्याम्** | मयि | आवयोः | अस्मासु |

३. युष्मद्-शब्दरूपाणि-

| **विभक्तौ** | **एकवचने** | **द्विवचने** | **बहुवचने** |
|---|---|---|---|
| **प्रथमायाम्** | त्वम् | युवाम् | यूयम् |
| **द्वितीयायाम्** | त्वाम् | युवाम् | युष्मान् |
| **तृतीयायाम्** | त्वया | युवाभ्याम् | युष्माभिः |
| **चतुर्थ्याम्** | तुभ्यम् | युवाभ्याम् | युष्मभ्यम् |
| **पञ्चम्याम्** | त्वत् | युवाभ्याम् | युष्मत् |
| **षष्ठ्याम्** | तव | युवयोः | युष्माकम् |
| **सप्तम्याम्** | त्वयि | युवयोः | युष्मासु |

## पाठान्तप्रश्नाः

१. शेषे लोपः इति सूत्रं व्याख्यात।

२. युष्मदस्मदोः मपर्यन्तस्य स्थाने विहिता आदेशाः ससूत्रं लिखत।

३. युष्मदस्मद्भ्यां परं विभक्तेः स्थाने के के आदेशा भवन्ति इति सोदाहरणं ससूत्रञ्च लिखत।

४. युष्मदस्मदोरनादेशे इति सूत्रं व्याख्यात।

५. साम आकम् इति सूत्रं व्याख्यात।

६. शसो न इति सूत्रं सोदाहरणं व्याख्यात।

७. प्रदत्तानि रूपाणि ससूत्रं साधयत- सः युष्मान् अस्माकम् आवाम् त्वम् त्वाम् अहम् त्वया अस्मत्।

## पाठगतप्रश्नानामुत्तराणि

**उतत्राणि-१**

१. त्यदादीनां तकारदकारयोः अनन्त्ययोः सः स्यात् सौ परे इति सूत्रार्थः।

२. अनन्त्यस्य तकारस्य दकारस्य च स्थाने भवति।

३. अन्त्यं च अन्त्यं च अन्त्ये इति इतरेतरद्वन्द्वसमासः, न अन्त्ये अनन्त्ये इति नञ्तत्पुरुषसमासः, तयोः अनन्त्ययोः इति।

४. परोक्षं वस्तु बोधयितुं तद्-शब्दः उपयुज्यते।

**उतत्राणि-२**

५. ङे इत्येतस्य, प्रथमाद्वितीययोश्च अमादेशः भवति।

६. युष्मदस्मदोः मपर्यन्तस्य स्थाने त्वाहौ आदेशौ भवतः।

७. अन्त्यलोपपक्षः, टिलोपपक्षः चेति।

८. द्वयोः उक्तौ युष्मदस्मदोः मपर्यन्तस्य युवावौ स्तः विभक्तौ इति सूत्रार्थः।

९. यूयवयौ जसि इति सूत्रेण युष्मद्-शब्दस्य मपर्यन्तस्य स्थाने यूय इति आदेशः भवति।

१०. प्रथमाया द्विवचने औविभक्तौ परतः युष्मदस्मदोः अन्त्यस्य स्थाने आकाररूपः आदेशः भवति।

**उतत्राणि-३**

११. एकस्य उक्तौ युष्मदस्मदोः मपर्यन्तस्य त्वमौ आदेशौ स्तः विभक्तौ इति सूत्रार्थः।

१२. द्वितीयायाञ्च इति सूत्रेण।

१३. ङेप्रथमयोरम् इति सूत्रस्य अपवादभूतम्।

१४. आदेः परस्य इति परिभाषाबलात् शसः अकारस्य स्थाने भवति।

१५. युष्मदस्मदोः आत् स्यात् अनादेशे हलादौ विभक्तौ इति सूत्रार्थः।

१६. योऽचि इति सूत्रम्।

१७. संयोगान्तस्य लोपः इति सूत्रेण।

**उतत्राणि-४**

१८. तुभ्यमह्यौ ङयि इति सूत्रेण तुभ्यमह्यौ आदेशौ भवतः।

१९. भ्यसोऽभ्यम् इति सूत्रेण अभ्यम् इति आदेशः भवति।

२०. एकवचनस्य च इति सूत्रेण अत् इति आदेशः भवति।

२१. तवममौ आदेशौ भवतः।

२२. युष्मदस्मद्भ्यां परस्य साम आकं स्यात् इति सूत्रार्थः।

२३. पञ्चमीविभक्तेः भ्यस्प्रत्ययस्य स्थाने अत् इति आदेशः विधीयते।

२४. युष्मदस्मद्भ्यां ङसोऽश् इति सूत्रेण अश् इति आदेशः भवति।

**।।इति सप्तदशः पाठः।।**

# १८

# हलन्तप्रकरणे महत् इत्यादिशब्दानां रूपाणि

## प्रस्तावना

पूर्वस्मिन् पाठे तद्, युष्मद्, अस्मद् चेति त्रयाणां शब्दानां रूपाणां साधनाय नवदश सूत्राणि आलोचितानि। अस्मिन् पाठे महत्, विद्वस्, भवत्, अदस्, ददत्, तुदत्, पचत् चेति सप्त शब्दाः आलोच्यन्ते। साकल्येन द्वादश सूत्राणि अत्र व्याख्यातानि। संस्कृतसाहित्ये एते शब्दाः प्रसिद्धाः सन्ति। महच्छब्दः भवच्छब्दः यद्यपि तकारान्तः तथापि तयोः रूपे भेदः परिलक्ष्यते। एवमेव विद्वस्-शब्दस्य अदस्-शब्दस्य मध्येऽपि भवति। अतः तकारान्तसाम्यं सकारान्तसाम्यं वा वीक्ष्य रूपाणि अपि समानानि भविष्यन्ति इति न चिन्तनीयम्। अतः सूत्राणि परिशीलनीयानि। अस्मिन् पाठे विद्यमानानि सूत्राणि वैयाकरणकुले प्रसिद्धानि सन्ति। सरलया शैल्या अत्र व्याख्यातानि सूत्राणि छात्राणां कृते सुबोध्यानि भविष्यन्ति।

## उद्देश्यानि

इमं पाठम् अधीत्य भवान् –

- महच्छब्दस्य उपधायाः दीर्घः कदा भवति इति ज्ञातुं शक्ष्यति।
- भवच्छब्दस्य भेदद्वयं ज्ञास्यति।
- विद्वस्-शब्दस्य रूपाणां सिद्ध्ये अपेक्षितानां सूत्राणां परिचयं प्राप्स्यति।
- अदस्-शब्दस्य दकारस्य, तदुत्तरं स्थितस्य अकारस्य, ततः सकारस्य स्थाने के के आदेशाः भवन्ति इति ज्ञास्यति।
- अदस्-शब्दविषये पूर्वत्रासिद्धम् इति सूत्रेण प्राप्तस्य असिद्धत्वस्य निषेधः कथं भवति इति बोद्धुं समर्थः भविष्यति।
- अभ्यस्तसंज्ञाविषये परिचयं प्राप्स्यति।
- शतृप्रत्ययान्तशब्देषु नुमागमविधिं ज्ञास्यति।



## महच्छब्दः-

महत् – इति शब्दः तकारान्तः। मह्यते पूज्यते इति महान्। अत्र वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च इति उणादिसूत्रेण (उणा० २४१) मह्-धातोः कर्मणि अर्थे अतिप्रत्ययः, शतृवत् च अतिदेशः भवति। अतः महच्छब्दः शतृप्रत्ययान्तः भवति। शतृप्रत्यये ऋकारः इत्संज्ञकः भवति। तेन अयं शब्दः उगित् भवति।

महच्छब्दात् सुप्रत्यये अनुबन्धलोपे महत् स् इति स्थिते यतः महच्छब्दः उगित् तस्मात् तस्य सर्वनामस्थानसंज्ञके प्रत्यये परे उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे अनुबन्धलोपे महन् त् स् इति जाते अग्रिमं सूत्रं प्रवर्तते –

## [ १८.१] सान्त महतः संयोगस्य। (६.४.१०)

**सूत्रार्थः** – सान्तसंयोगस्य महतः च यः नकारः तस्य उपधायाः दीर्घः असम्बुद्धौ सर्वनामस्थाने।

**सूत्रव्याख्या** - अनेन सूत्रेण उपधायाः दीर्घः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे सान्त, महतः, संयोगस्य चेति त्रीणि पदानि सन्ति। सान्त इति लुप्तषष्ठीविभक्तिकं पदम्। तेन सान्तस्य इति लभ्यते। महतः, संयोगस्य चेति पदद्वयं षष्ठ्येकवचनान्तम्। सान्त इति लुप्तषष्ठीकं पदं संयोगपदे अभेदेन अन्वेति। तेन सान्तः यः संयोगः इत्यर्थः लभ्यते।

नोपधायाः इति सूत्रात् न इति लुप्तषष्ठीकं पदम्, उपधायाः इति च षष्ठ्येकवचनान्तं पदम् अनुवर्तते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। सर्वनामस्थाने चासम्बुद्धौ इति सूत्रात् सर्वनामस्थाने, असम्बुद्धौ चेति सप्तम्येकवचनान्तं पदद्वयम् अनुवर्तनीयम्। महतः इत्यत्र या षष्ठी सा अवयवार्थे वर्तते। एतदपि पदं न इत्यत्र अन्वेति। सूत्रार्थो भवति सान्तसंयोगस्य महच्छब्दस्य च यः नकारः, तस्य उपधायाः दीर्घः भवति सम्बुद्धिभिन्ने सर्वनामस्थाने परे इति।

**सूत्रार्थसमन्वयः** – महन् त् स् इति स्थितिः। अत्र सुप्रत्ययः (स्) सम्बुद्धिसंज्ञाभिन्नः वर्तते। तस्मिन् परे सति महत्- इति शब्दस्य अवयवभूतः यः नकारः, तस्य यः उपधा हकारोत्तरः अकारः तस्य दीर्घः प्रस्तुतेन सूत्रेण विधीयते। तेन महान् त् स् इति जाते अपृक्त एकाल्प्रत्ययः इति सूत्रेण स् इत्यस्य अपृक्तसंज्ञायां हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारस्य लोपे महान् त् इति भवति। ततः संयोगान्तस्य लोपः इति सूत्रेण च संयोगान्ते वर्तमानस्य तकारस्य लोपे महान् इति रूपं सिद्धम्। अत्र संयोगान्तलोपस्य असिद्धत्वात् न लोपः प्रातिपदिकान्तस्य इति सूत्रेण महान् इत्यत्र नकारस्य लोपः न भवति।

महच्छब्दात् औप्रत्यये उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे अनुबन्धलोपे महन् त् औ इति जाते, सान्त महतः संयोगस्य इति सूत्रेण उपधायाः दीर्घे महान् त् औ इति स्थितिः आगच्छति।

ततः नश्चापदान्तस्य झलि इति सूत्रेण नकारस्य तकाररूपे झलि परे अनुस्वारे, अनुस्वारस्य ययि परसवर्णः इति सूत्रेण अनुस्वारस्य परसवर्णे नकारे महान्तौ इति रूपम्।

महच्छब्दात् जस्प्रत्यये अनुबन्धलोपे महत् अस् इति जाते, सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण नुमागमे अनुबन्धलोपे, सान्त महतः संयोगस्य इत्यनेन उपधादीर्घे, नकारस्य अनुस्वारे, अनुस्वारस्य च परसवर्णे वर्णमेलने महान्तस् इति जाते सकारस्य रुत्वे विसर्गे च कृते महान्तः इति रूपम्।

महच्छब्दात् भ्याम्प्रत्यये महत् भ्याम् इति जाते झलां जशोऽन्ते इति सूत्रेण तकारस्य दकारे महद्भ्याम् इति रूपम्।

महच्छब्दात् सम्बोधनैकवचने सुप्रत्यये अनुबन्धलोपे, नुमागमे अनुबन्धलोपे, सु इत्यस्य यतः एकवचनं सम्बुद्धिः इति सूत्रेण सम्बुद्धिसंज्ञा, तस्मात् तस्मिन् परे सान्त महतः संयोगस्य इति सूत्रस्य अप्राप्तौ महन् त् स् इति जाते सकारस्य हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण लोपे तकारस्य संयोगान्तस्य लोपः इति सूत्रेण च लोपे महन् इति रूपम्।

## विद्वस्-शब्दः

विद ज्ञाने इति अदादिगणीयात् विद्-धातोः शतृप्रत्यये, विद शतुर्वसुः इति सूत्रेण शतृप्रत्ययस्य स्थाने वसु-इति आदेशे विद्वस्-शब्दः निष्पद्यते। वसु-इत्यत्र उकारस्य इत्संज्ञा भवति। तेन अयं विद्वस्-शब्दः उगित् भवति।

विद्वस्-शब्दात् सुप्रत्यये अनुबन्धलोपे विद्वस् स् इति स्थितौ विद्वस्-शब्दः यतः उगित् तस्मात् उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे अनुबन्धलोपे विद्वन् स् स् इति जाते, सान्त महतः संयोगस्य इति सूत्रेण सान्तसंयोगस्य नकारस्य उपधायाः वकारोत्तरस्य अकारस्य दीर्घे विद्वान् स् स् इति जाते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इति सूत्रेण स्-इत्यस्य लोपे, संयोगान्तस्य लोपः इति सूत्रेण संयोगान्ते विद्यमानस्य सकारस्य लोपे च विद्वान् इति रूपं निष्पद्यते।

विद्वस्-शब्दात् औप्रत्यये नुमागमे विद्वन् स् औ इति स्थिते, सान्त महतः संयोगस्य इत्यनेन उपधादीर्घे विद्वान् स् औ इति जाते, नश्चापदान्तस्य झलि इति सूत्रेण नकारस्य अनुस्वारे वर्णमेलने विद्वांसौ इति रूपम्।

विद्वस्-शब्दात् जसि अनुबन्धलोपे विद्वस् अस् इति स्थिते पूर्ववत् नुमागमे, उपधादीर्घे, नकारस्य अनुस्वारे विद्वांस् अस् इति जाते सकारस्य रुत्वे विसर्गे च कृते ततः वर्णसम्मेलने विद्वांसः इति रूपम्।

एवम् अमि, औटि अपि बोध्यम्।

विद्वस्-शब्दात् शस्प्रत्यये अनुबन्धलोपे विद्वस् अस् इति स्थिते अग्रिमं सूत्रं प्रवर्तते –

## [ १८.२] वसोः सम्प्रसारणम्। (६.४.१३१)

**सूत्रार्थः** – वस्वन्तस्य भस्य सम्प्रसारणं स्यात्।

**सूत्रव्याख्या** - अनेन सूत्रेण सम्प्रसारणं विधीयते। अतः विधिसूत्रम् इदम्। अस्मिन् सूत्रे वसोः, सम्प्रसारणं चेति पदद्वयं राजते। अत्र वसोः इति षष्ठ्येकवचनान्तं पदम्। सम्प्रसारणम् इति प्रथमैकवचनान्तं विधेयबोधकं पदम्। भस्य, अङ्गस्य चेति सूत्रद्वयम् अत्र अधिकृतम्। वसोः इति पदम् भस्य विशेषणम्। विशेषणत्वात् तदन्तविधौ (वसु+अन्तस्य) वस्वन्तस्य इति लभ्यते। अङ्गस्य इत्यत्र षष्ठी स्थानेयोगा इति परिभाषाबलात् अङ्गस्य स्थाने इत्यर्थः लभ्यते। सूत्रार्थो भवति वसुप्रत्ययान्तस्य भस्य अङ्गस्य स्थाने सम्प्रसारणं भवति इति।

**सूत्रार्थसमन्वयः** - विद्वस् अस् इति स्थितिः। अत्र विद्वस्-शब्दः वसुप्रत्ययान्तः, यचि भम् इत्यनेन भसंज्ञकः, यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति सूत्रेण अङ्गसंज्ञकश्च वर्तते। अतः अन्त्यस्य यणः वकारस्य सम्प्रसारणे उकारे विदु अस् अस् इति जाते सम्प्रसारणाच्च इति सूत्रेण उकार-अकारयोः स्थाने पूर्वरूपे एकादेशे विदुस् अस् इति जाते आदेशप्रत्यययोः इति सूत्रेण वसुप्रत्ययावयवस्य सकारस्य षकारे वर्णमेलने विदुषस् इति जाते सकारस्य रुत्वे विसर्गे च कृते विदुषः इति रूपम्।

विद्वस् भ्याम् इति स्थिते वसुस्रंसुध्वंस्वनडुहां दः इति सूत्रेण सकारस्य दकारे विद्वद्भ्याम् इति रूपम्।

विद्वस्-शब्दात् सम्बोधनैकवचने सुप्रत्यये अनुबन्धलोपे विद्वस् स् इति जाते उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे अनुबन्धलोपे, अपृक्तसंज्ञकस्य स्-इत्यस्य लोपे च विद्वन् स् इति जाते संयोगान्तस्य लोपः इति सूत्रेण संयोगान्ते विद्यमानस्य सकारस्य लोपे विद्वन् इति रूपम्।

## भवत्-शब्दः

अदादिगणीयात् दीप्त्यर्थकात् भाधातोः भातेर्डवतु इति औणादिकसूत्रेण डवतुप्रत्यये अनुबन्धलोपे भा अवत् इति भवति। अत्र भा इत्यस्य यद्यपि भसंज्ञा नास्ति, तथापि डवतुप्रत्ययः डित् अस्ति इति कारणात् भसंज्ञारहितस्यापि टेः आकारस्य लोपः भवति। तेन वर्णमेलने भवत् इति शब्दः निष्पद्यते। **यचि भम् इति सूत्रेण चतुर्थपञ्चमाध्यायविहितेषु प्रत्ययेषु परेषु एव पूर्वस्य भसंज्ञा विधीयते। अत्र डवतुप्रत्ययस्य उणादिगणे पाठः वर्तते। औणादिकप्रत्ययाश्च तृतीयाध्याये पठ्यन्ते। अतः तस्मिन् परे भसंज्ञा न भवति इति आशयः।**

भवत्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये अनुबन्धलोपे भवत् स् इति स्थिते अग्रिमं सूत्रं प्रवर्तते –

## [१८.३] अत्वसन्तस्य चाधातोः। (६.४.१४)

**सूत्रार्थः** – अत्वन्तस्य उपधायाः दीर्घः धातुभिन्नासन्तस्य च असम्बुद्धौ सौ परे।

**सूत्रव्याख्या** - अनेन सूत्रेण उपधाया दीर्घः विधीयते। अतः विधिसूत्रम् इदम्। सूत्रे अस्मिन् चत्वारि पदानि वर्तन्ते। अतु, असन्तस्य, च, अधातोः इति पदच्छेदः। अतु इति लुप्तषष्ठीकं पदम्। असन्तस्य, अधातोः चेति षष्ठ्येकवचनान्ते पदे। च इति अव्ययपदम्। अङ्गस्य इति पदम् अधिकृतम्। नोपधायाः इति सूत्रात् उपधायाः इति षष्ठ्येकवचनान्तं, सर्वनामस्थाने चासम्बुद्धौ इत्यतः असम्बुद्धौ इति सप्तम्येकवचनान्तं, सौ च इति सूत्रात् सौ इति सप्तम्येकवचनान्तं, ढ्रलोपे पूर्वस्य दीर्घोऽणः इति



सूत्रात् दीर्घः इति च प्रथमान्तं पदम् अनुवर्तते। अस् अन्ते यस्य सः असन्तः इति बहुव्रीहिसमासः, तस्य असन्तस्य इति। न धातुः अधातुरिति नञ्तत्पुरुषसमासः, तस्य अधातोः। असम्बुद्धौ इत्यत्रापि नञ्तत्पुरुषसमासः।

अतु इति अङ्गस्य इत्यस्य विशेषणम्। तेन तदन्तविधौ अत्वन्तस्य इति लभ्यते। अत्र सूत्रे अधातोः इति पदम् असन्तस्य इत्यनेन सहैव अन्वेति। तेन धातुभिन्नस्य असन्तस्य इति अर्थः आयाति। सूत्रार्थो भवति अत्वन्तस्य अङ्गस्य, धातुभिन्नस्य असन्तस्य च उपधायाः दीर्घः असम्बुद्धौ सुप्रत्यये परे इति।

सूत्रे अतु-इत्यनेन मतुप्, वतुप्, डवतु चेत्यादीनाम् अतु-अन्तानां ग्रहणं भवति।

**सूत्रार्थसमन्वयः** – भवत् स् इति स्थितिः। अत्र भवत् इति शब्दः अत्वन्तः वर्तते। ततः परं स्थितः सुप्रत्ययः सम्बुद्धिसंज्ञाभिन्नः वर्तते। अतः तस्मिन् परे सति अत्वन्तस्य भवत्-शब्दस्य उपधायाः वकारोत्तरस्य अकारस्य दीर्घे भवात् स् इति भवति। ततः उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे अनुबन्धलोपे भवा न् त् स् इति स्थितिः आगच्छति। ततः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण अपृक्तसंज्ञकस्य सुप्रत्ययस्य लोपे भवा न् त् इति भवति। ततः संयोगान्तस्य लोपः इति सूत्रेण संयोगान्ते विद्यमानस्य सकारस्य लोपे भवान् इति रूपं निष्पद्यते।

भवत् औ इत्यत्र सम्बुद्धिसंज्ञाभिन्नसुप्रत्ययः परं नास्ति। तेन पूर्वसूत्रेण उपधायाः दीर्घः न भवति। अत्र केवलं नुमागमे पूर्ववत् प्रक्रियाकार्ये भवन्तौ इति रूपम्।

एवं सर्वनामस्थानसंज्ञके (सु, औ, जस्, अम्, औट्) प्रत्यये परे सति नुमागमः भवति। सम्बोधनैकवचने तु सुप्रत्ययस्य सम्बुद्धिसंज्ञकत्वात् अत्वसन्तस्य चाधातोः इति सूत्रेण उपधायाः दीर्घः न भवति। तेन तत्र भवन् इत्येव रूपम्। यद्यपि भवत्-शब्दस्य सम्बोधने रूपं न दृश्यते, तथापि तस्य उल्लेखः सम्भावनामात्रम्।

अयं भवत्-शब्दः सर्वादिगणे पठितः। तेन तस्य सर्वनामसंज्ञा भवति। सर्वनामसंज्ञायाः फलम् अत्र अकच्प्रत्ययविधानम्।

प्रसङ्गतः इदमपि ज्ञातव्यं यत् सत्तार्थकभूधातोः शतृप्रत्यये प्रक्रियाकार्ये अपि भवत् इति शब्दः निष्पद्यते। परन्तु तत्र अत्वसन्तस्य चाधातोः इति सूत्रं न प्रवर्तते, यतो हि शतृप्रत्ययः न अत्वन्तः। तेन उपधादीर्घाभावात् भवन् इत्येव रूपम् भवति। अन्यानि सर्वाण्यपि रूपाणि डवतुप्रत्ययान्त-भवत्-शब्दवत् भवन्ति।



## पाठगतप्रश्नाः-१

१. सान्तमहतः संयोगस्य इति सूत्रस्य अर्थं लिखत।

२. वसोः सम्प्रसारणम् इति सूत्रस्य अर्थं लिखत।

३. महत्-शब्दस्य सम्बोधनैकवचने उपधाया दीर्घः भवति न वा? कथम्?

४. महन् त् स् इत्यत्र नुमागमः केन सूत्रेण भवति?

५. वसोः सम्प्रसारणम् इति सूत्रस्य उदाहरणमेकं लिखत।

६. अत्वसन्तस्य चाधातोः इति सूत्रस्य अर्थं लिखत।

७. भवात् स् इति स्थिते उपधादीर्घः केन सूत्रेण भवति?

८. अत्वसन्तस्य चाधातोः इति सूत्रे अतु-इत्यनेन केषां ग्रहणम्?

## अदस्-शब्दः

अदस्-शब्दः सर्वादिगणे पठितः सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञकः। विप्रकृष्टं वस्तुनं बोधयितुम् अदस्-शब्दः प्रयुज्यते। त्रिषु अपि लिङ्गेषु अस्य शब्दस्य प्रयोगः भवति।

## पुंलिङ्गे अदस्-शब्दः

पुंलिङ्गे वर्तमानस्य अदस्-शब्दस्य प्रथमाविभक्तेः एकवचनविवक्षायां सुप्रत्यये त्यदादीनामः इति सूत्रं प्राप्नोति। परन्तु तत् प्रबाध्य सूत्रम् आगच्छति –

### [१८.४] अदस औ सुलोपश्च। (७.२.१०७)

**सूत्रार्थः –** अदसः औकारः अन्तादेशः स्यात् सौ परे सुलोपः च।

**सूत्रव्याख्या –** अनेन सूत्रेण औकारादेशः, लोपश्च विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अदसः, औ, सुलोपः, च इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे तदोः सः सावनन्त्ययोः इति सूत्रात् सौ इति पदमनुवर्तते। अदस इति षष्ठ्येकवचनान्तं पदम्। औ इति प्रथमैकवचनान्तं पदम्। सुलोपः इत्यपि प्रथमैकवचनान्तं पदम्। च इति अव्ययं पदम्। सोर्लोपः सुलोपः इति षष्ठीतत्पुरुषसमासः।

अदसः इत्यत्र षष्ठीविभक्तिः। अतः अलोऽन्त्यस्य इति परिभाषाबलात् अदसः अन्त्यस्य अलः सकारस्य स्थाने कार्यं भवति। तच्च कार्यं भवति औ इति अन्तादेशः। अतः अनेन सूत्रेण एकस्मिन् काले कार्यद्वयं विधीयते – औ इति अन्तादेशः, सुविभक्तेः लोपश्च। तदर्थमेव सूत्रे च इति पदोपादानम्। सूत्रे सौ इति अनुवर्तनात्, सौ इत्यत्र च सप्तमीविभक्तेः दर्शनात् तस्मिन् सुविभक्तौ परे सति पूर्वस्य अदसः अन्त्यस्य सकारस्य स्थाने औ इति आदेशो भवति। एतादृशस्य कार्यद्वयस्य सूचनाय सूत्रे च इति पदं दत्तम्। अत एव सूत्रस्यार्थो भवति सुविभक्तौ परतः अदसः सकारस्य औकारादेशः, सुप्रत्ययस्य च लोपो भवति इति।

**बाध्यबाधकभावः –** सूत्रमिदं त्यदादीनामः इति सूत्रस्य अपवादः भवति।

**उदाहरणम्** -असौ इति उदाहरणम् अत्र।

**सूत्रार्थसमन्वयः –** अदस् सु इति स्थितिः। अत्र सुप्रत्ययः परम् अस्ति। अतः प्रस्तुतसूत्रेण अदसः सकारस्य स्थाने औकारादेशः, सुविभक्तेः लोपश्च युगपत् भवति। तेन अद औ इति जाते



वृद्धिरेचि इति सूत्रेण अकार-औकारयोः स्थाने वृद्धौ औकाररूपैकादेशे अदौ इति जाते तदोः सः सावनन्त्ययोः इति सूत्रेण दकारस्य स्थाने सकारे कृते असौ इति रूपं सिद्धम्।

अदस्-शब्दस्य प्रथमाद्विवचने औप्रत्यये त्यदादीनामः इति सूत्रेण सकारस्य स्थाने अकारे, अतो गुणे इति सूत्रेण पररूपे अद औ इति स्थिते वृद्धिरेचि इति सूत्रेण अकार-औकारयोः स्थाने वृद्धौ औकाररूपे एकादेशे अदौ इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १८.५] अदसोऽसेर्दादु दो मः। (८.२.८०)

**सूत्रार्थः** – अदसः असान्तस्य दात्परस्य उदूतौ स्तः दस्य मः च।

**सूत्रव्याख्या** – सूत्रेणानेन उकारः, मकारश्च आदिश्यते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे षट् पदानि सन्ति। अदसः, असेः, दाद्, उ, दः, मः इति सूत्रस्थपदच्छेदः। अदसः इति षष्ठ्येकवचनान्तं पदम्। असेः इत्यपि षष्ठ्येकवचनान्तं पदम्। तच्च अदसः इत्यस्य विशेषणम्। दात् इति पञ्चम्येकवचनान्तं पदम्। उ इति प्रथमैकवचनान्तं पदम्। दः इति षष्ठ्येकवचनान्तं पदम्। मः इति प्रथमैकवचनान्तं पदम्। नास्ति सिः सकारः यस्मिन् सः असिरिति नञ्बहुव्रीहिसमासः। असिः इत्यत्र इकारः उच्चारणार्थः। उ इत्यत्र समाहारद्वन्द्वः। उश्च ऊश्च इत्यत्र विग्रहः।

दात् इत्यत्र दिग्योगा पञ्चमी। ततः परस्य इति पदमध्याहार्यम्। दः इत्यत्र षष्ठीविभक्तिः। अत्र अनुयोगिपदस्य अश्रवणात् षष्ठी स्थानेयोगा इति परिभाषया स्थाने इति पदमागच्छति। असेः इति अदसः इति शब्दस्य विशेषणम्। तस्मात् तदन्तविधौ असन्तस्य इति अर्थः आगच्छति। तेनात्र तादृशः अदस्-शब्दः विवक्षितः यस्य अन्तिमः वर्णः सकारो न भवति। तादृशसकारान्तभिन्नस्य अदस्-शब्दस्य अवयवः यः दकारः ततः परं स्थितः स्थितस्य वर्णस्य स्थाने उः इति ऊः इति वा आदेशो भवति। दकारस्य च स्थाने म इति आदेशः अपि भवति। अतः सूत्रस्य अर्थः भवति सकारान्तभिन्नस्य अदसः दात्परस्य उवर्णादेशः भवति, दकारस्य च मकार इति।

अदस्-शब्दावयवः यः दकारः ततः परं स्थितः वर्णः कदाचित् ह्रस्वो भवति कदाचित् वा दीर्घः। तस्मादत्र स्थानेऽन्तरतमः इति परिभाषया ह्रस्वस्य स्थाने ह्रस्वः उकारः, दीर्घस्य वा स्थाने दीर्घः उकारः आदेशो भवति।

**उदाहरणम्** – अमू।

**सूत्रार्थसमन्वयः** – अदौ इति स्थितिः। अत्र अदस्-शब्दः सकारान्तभिन्नः अस्ति। तस्मात् अनेन सूत्रेण दकारात् परस्य दीर्घस्य औकारस्य स्थाने ऊ इत्यादेशे दकारस्य च स्थाने म् इत्यादेशे सर्ववर्णसम्मेलने अमू इति रूपं सिद्ध्यति।

अदस्-शब्दस्य प्रथमाबहुवचनविवक्षायां जस्प्रत्यये अनुबन्धलोपे अदस् अस् इति जाते त्यदादीनामः इति सूत्रेण अदसः सकारस्य स्थाने अकारे अद अ अस् इति स्थितिः भवति। ततः अतो गुणे इति सूत्रेण अकारद्वयस्य स्थाने गुणे पररूपे अद अस् इति भवति। ततः जसः शी इति जाते सम्पूर्णस्य जसः स्थाने शी-इत्यादेशे अनुबन्धलोपे अद ई इति जाते आद्गुणः इति सूत्रेण अकार-

ईकारयोः स्थाने गुणे एकारे अदे इति स्थितिः सम्पद्यते। ततः अदसोऽसेर्दादु दो मः इति सूत्रेण एकारस्य ऊकारादेशे, दकारस्य च मकारादेशे प्राप्ते तत्प्रबाध्य अग्रिमं सूत्रं प्रवर्तते -

## [१८.६] एत ईद्बहुवचने (८.२.८१)

सूत्रार्थः – अदसः दात्परस्य एत ईत् दस्य च मः बह्वर्थोक्तौ।

**सूत्रव्याख्या** – अनेन सूत्रेण ईकारः, मकारश्च आदिश्येते। अतः सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। एतः, ईद्, बहुवचने इति सूत्रगतपदच्छेदः। अस्मिन् सूत्रे अदसोऽसेर्दादु दो मः इति सूत्रात् अदसः, दात्, दः, मः चेति चत्वारि पदानि अनुवर्तन्ते। अदसः इति षष्ठ्येकवचनान्तं पदम्। षष्ठी चात्र अवयवे वर्तते। दात् इति पञ्चम्येकवचनान्तं पदम्। एत इति षष्ठ्येकवचनान्तं पदम्। ईत् इति प्रथमैकवचनान्तं पदम्। दः इति षष्ठ्येकवचनान्तं पदम्। मः इति प्रथमैकवचनान्तं पदम्। बहूनां वचनं बहुवचनमिति षष्ठीतत्पुरुषसमासः, तस्मिन् बहुवचने इति। सूत्रार्थो भवति अदसः दकारादुत्तरस्य एकारस्य ईकारादेशो भवति, दकारस्य च मकारः बहुवचने इति।

**बाध्यबाधकभावः** - अदसोऽसेर्दादु दो मः इति सूत्रस्य अपवादसूत्रं भवति इदं सूत्रम्।

**उदाहरणम्** – अमी इति अत्र उदाहरणम्।

**सूत्रार्थसमन्वयः** – अदे इति स्थितिः। अत्र जस्प्रत्ययः अस्ति। अतः बहुवचनम्। तस्मात् प्रस्तुतसूत्रेण दकारात् परस्य एकारस्य स्थाने ईकारादेशे दकारस्य च स्थाने म्-इत्यादेशे अमी इति रूपं सिद्धम्।

**अमुम्** – अदस्-शब्दस्य द्वितीयैकवचनविवक्षायाम् अमि अदस् अम् इति स्थिते, त्यदादीनामः इति सूत्रेण अदसः सकारस्य अकारे, अतो गुणे इति सूत्रेण पररूपे अद अम् इति अवस्थायां कार्यद्वयं प्राप्नोति। अमि पूर्वः इति सूत्रेण दकारोत्तराकारस्य अम्प्रत्ययावयवे अकारे परे पूर्वपरयोः स्थाने पूर्वरूपं प्राप्नोति। अदसोऽसेर्दादु दो मः इति सूत्रेण अकारस्य स्थाने उ-इत्यादेशः, दकारस्य च स्थाने म्-इत्यादेशः प्राप्नोति। एवं सूत्रद्वयस्य मध्ये किं सूत्रम् आदौ स्यात् इति जिज्ञासायाम् उच्यते पूर्वत्रासिद्धम् इति सूत्रबलात् अमि पूर्वः इति सूत्रमेव आदौ प्रवर्तते। ततः अदसोऽसेर्दादु दो मः इति। तथाहि अष्टाध्याय्याम् अमि पूर्वः इति सूत्रस्य संख्या ६.१.१०४, अदसोऽसेर्दादु दो मः इति सूत्रस्य च संख्या ८.२.८० इति। अतः सपादसप्ताध्यायीस्थस्य अमि पूर्वः इति सूत्रस्य दृष्ट्या अदसोऽसेर्दादु दो मः इति सूत्रम् असिद्धम् भवति। अतः आदौ अमि पूर्वः इति सूत्रमेव प्रवर्तते। तेन अद अम् इति स्थिते अमि पूर्वः इत्यनेन पूर्वरूपे अदम् इति जाते, ततः अदसोऽसेर्दादु दो मः इति सूत्रेण दकारात् उत्तरस्य अकारस्य स्थाने उत्वे, दकारस्य च स्थाने म्-इत्यादेशे अमुम् इति रूपं सिद्धम्।

**अमून्** – अदस्-शब्दस्य द्वितीयाबहुवचनविवक्षायां शसि अनुबन्धलोपे त्यदादीनामः इति सूत्रेण अकारे, अतो गुणे इति सूत्रेण पररूपे च अद अस् इति स्थिते अत्रापि शास्त्रद्वयं प्राप्नोति - अदसोऽसेर्दादु दो मः (८.२.८०), प्रथमयोः पूर्वसवर्णः (६.१.१०२) चेति। अदसोऽसेर्दादु दो मः इति सूत्रं त्रिपाद्यां वर्तते। प्रथमयोः पूर्वसवर्णः इति सूत्रं च सपादसप्ताध्याय्यां वर्तते। अतः पूर्वत्रासिद्धम् इति सूत्रबलात् प्रथमयोः पूर्वसवर्णः इति सूत्रस्य दृष्ट्या अदसोऽसेर्दादु दो मः इति सूत्रम् असिद्धं भवति। तेन अद अस्

इति अवस्थायां प्रथमयोः पूर्वसवर्णः इति सूत्रेण पूर्वसवर्णदीर्घे अदास् इति जाते, तस्माच्छसो नः पुंसि इति सूत्रेण सकारस्य स्थाने न् इत्यादेशे अदान् इति स्थितिः भवति। ततः अदसोऽसेर्दादु दो मः इति सूत्रेण दकारात् परस्य आ-इत्यस्य स्थाने ऊ-इत्यादेशे, दकारस्य च स्थाने म्-इत्यादेशे वर्णमेलने अमून् इति रूपं सिद्धम्।

**अमुना** – अदस्-शब्दस्य तृतीयैकवचनविवक्षायां टा-इत्यादेशे अनुबन्धलोपे अदस् आ इति स्थिते त्यदादीनामः इति सूत्रेण सकारस्य स्थाने अकारे, अतो गुणे इति सूत्रेण पररूपे च अद आ इति भवति। ततः अदसोऽसेर्दादु दो मः इति सूत्रेण उत्वे मत्वे च कृते अमु आ इति भवति। परन्तु अदसोऽसेर्दादु दो मः (८.२.८०) इति सूत्रं यतः पूर्वत्रासिद्धम् इति सूत्रबलात् शेषो घ्यसखि (१.४.७) इति सूत्रस्य दृष्ट्या असिद्धं भवति, अतः शेषो घ्यसखि इति सूत्रम् अदसोऽसेर्दादु दो मः इति सूत्रविहितं कार्यं न पश्यति। तेन घिसंज्ञा न प्राप्नोति। घिसंज्ञाभावात् आङो नाऽस्त्रियाम् इति सूत्रेण टास्थाने ना-इत्यादेशः अपि न प्राप्नोति। परन्तु ना-इत्यादेशः अत्र अभीष्टः एव। अतः मुभावः सिद्धः यथा स्यात् तदर्थं सूत्रं प्रारभते -

## [ १८.७]    न मु ने। (८.२.३)

**सूत्रार्थः** –नाभावे कर्तव्ये कृते च मुभावः न असिद्धः।

**सूत्रव्याख्या** – अनेन सूत्रेण असिद्धत्वस्य निषेधः भवति। अतः इदं निषेधसूत्रम्। सूत्रे अस्मिन् न, मु, ने चेति त्रीणि पदानि सन्ति। अस्मिन् सूत्रे पूर्वत्रासिद्धम् इति सूत्रात् असिद्धम् इति पदम् अनुवर्तते। ना-इत्यस्य सप्तम्येकवचने ने इति रूपम्। सप्तमी चात्र भावे, विषये वा वर्तते। मु इति प्रथमैकवचनान्तं पदम्। न इति अव्ययम्। असिद्धम् इति प्रथमैकवचनान्तं पदम्। म् च उश्च विग्रहे समाहारद्वन्द्वे निष्पन्नं मु- इति पदम्। नाभावे कर्तव्ये कृते च मुभावः असिद्धः न भवति इति।

**बाध्यबाधकभावः** – पूर्वत्रासिद्धम् इति सूत्रस्य अपवादभूतं सूत्रमिदम्।

**उदाहरणम्** – अमुना इति उदाहरणमत्र।

**सूत्रार्थसमन्वयः** - अमु आ इति स्थिते आङो नाऽस्त्रियाम् इति सूत्रेण टास्थाने ना-इत्यादेशे कर्तव्ये अदसोऽसेर्दादु दो मः इति सूत्रेण विहितः मुभावः असिद्धः न भवति। तेन शेषो घ्यसखि इति सूत्रेण अमु इत्यस्य घिसंज्ञा सिद्ध्यति। तेन आङो नाऽस्त्रियाम् इति सूत्रेण टा-स्थाने ना-इत्यादेशे अमुना इति रूपं सिद्धम्।

**विशेषः** – सूत्रार्थे नाभावे कर्तव्ये कृते च मुभावः असिद्धः न भवति इति उक्तम्। नाभावे कृते मुभावः असिद्धः न भवति इत्यर्थः न स्वीक्रियते चेत् अमुना इत्यत्र नाभावे कृते सति मुभावः असिद्धः भवति। तेन सुपि च इति सूत्रेण अद इति अदन्तस्य अङ्गस्य दीर्घः प्राप्नोति। परन्तु तादृशार्थस्वीकारेण न मु ने इति सूत्रेण मु-इत्यादेशः सिद्धो भवति। तेन सुपि च इति सूत्रं न प्रवर्तते। तस्मात् ने इत्यत्र सप्तमीविभक्तेः अर्थद्वयं स्वीकृतं – नाभावे कर्तव्ये, नाभावे परे चेति।

**अमूभ्याम्** – अदस् भ्याम् इति स्थिते त्यदाद्यत्वे पररूपे च कृते, अद भ्याम् इति जाते सुपि च इति सूत्रेण दीर्घे अदाभ्याम् इति स्थितिः आगच्छति। ततः अदसोऽसेर्दादु दो मः इति सूत्रेण दकारादुत्तरस्य आकारस्य स्थाने ऊ-इत्यादेशे, दकारस्य च स्थाने म्-इत्यादेशे अमूभ्याम् इति रूपं सिद्धम्।

**अमीभिः** – अदस् भिस् इति स्थिते त्यदाद्यत्वे पररूपे च कृते अद भिस् इति भवति। ततः अतो भिस ऐस् इति सूत्रं प्राप्नोति। परन्तु नेदमदसोरकोः इति सूत्रेण तत् निषिद्ध्यते। ततः बहुवचने झल्येत् इति सूत्रेण झलादौ बहुवचने सुपि पूर्वस्य अकारस्य एकारे अदेभिस् इति स्थितिः आगच्छति। ततः एत ईद् बहुवचने इति सूत्रेण एकारस्य ईकारे, दकारस्य च स्थाने मकारे कृते अमीभिस् इति जाते, ततः सकारस्य रुत्वे विसर्गे च कृते अमीभिः इति रूपं सिद्धम्।

**अमुष्मै** – अदस्-शब्दात् ङेविभक्तौ, अनुबन्धलोपे अदस् ए इति स्थिते त्यदादीनामः इति सूत्रेण सकारस्य स्थाने अकारे, अतो गुणे इति सूत्रेण पररूपे च कृते अद ए इति जाते सर्वनाम्नः स्मै इति सूत्रेण ङेस्थाने स्मै-इत्यादेशे अद स्मै इति स्थितिः भवति। ततः अदसोऽसेर्दादु दो मः इति सूत्रेण अकारस्य उकारे, दकारस्य च स्थाने मकारे अमु स्मै इति स्थिते आदेशप्रत्यययोः इति सूत्रेण सकारस्य स्थाने षकारे अमुष्मै इति रूपं सिद्धम्।

**अमीभ्यः** – अदस् भ्यस् इति स्थिते त्यदाद्यत्वे पररूपे बहुवचने झल्येत् इति सूत्रेण एत्वे अदे भ्यस् इति जाते, एत ईद् बहुवचने इति सूत्रेण एकारस्य स्थाने ईकारे, दकारस्य च स्थाने मकारे अमी भ्यस् इति जाते, सकारस्य रुत्वे विसर्गे च कृते ततः वर्णसम्मेलने अमीभ्यः इति रूपं सिद्धम्।

**अमुष्मात्** - अदस्-शब्दात् ङसिप्रत्यये अनुबन्धलोपे त्यदाद्यत्वे पररूपे अद अस् इति स्थिते ङसिङ्योः स्मात्स्मिनौ इति सूत्रेण ङसिप्रत्ययस्य स्थाने स्मात्-इत्यादेशे अद स्मात् इति स्थिते, ततः अदसोऽसेर्दादु दो मः इति सूत्रेण दकारोत्तरस्य अकारस्य स्थाने उकारे, दकारस्य च स्थाने मकारे अमु स्मात् इति जाते, आदेशप्रत्यययोः इति सूत्रेण सकारस्य स्थाने मूर्धन्यादेशे षकारे अमुष्मात् इति रूपं सिद्धम्।

**अमुष्य** – अदस्-शब्दात् ङस्प्रत्यये अनुबन्धलोपे त्यदाद्यत्वे पररूपे टाङसिङसामिनात्स्याः इति सूत्रेण स्य-इत्यादेशे उत्वे, मत्वे, सकारस्य षत्वे च कृते अमुष्य इति रूपं सिद्धम्।

**अमुयोः** – अदस्-शब्दात् ओस्प्रत्यये त्यदाद्यत्वे, पररूपे अद ओस् इति स्थिते ओसि च इति दकारोत्तरस्य अकारस्य एकारे अदे ओस् इति जाते एचोऽयवायावः इति सूत्रेण ओकाररूपे अचि परे एकारस्य स्थाने अयादेशे अदयोस् इति स्थिते ततः अदसोऽसेर्दादु दो मः इति सूत्रेण दकारोत्तरस्य अकारस्य स्थाने उकारे, दकारस्य च स्थाने मकारे अमुयोस् इति जाते, सकारस्य रुत्वे विसर्गे च कृते अमुयोः इति रूपं सिद्धम्।

**अमीषाम्** -अदस्-शब्दात् आमि त्यदाद्यत्वे, पररूपे अद आम् इति स्थिते, आमि सर्वनाम्नः सुट् इति सूत्रेण आमः सुडागमे अनुबन्धलोपे अद साम् इति भवति। ततः बहुवचने झल्येत् इति सूत्रेण दकारोत्तरस्य अकारस्य एकारे अदे साम् इति भवति। ततः एत ईद् बहुवचने इति सूत्रेण दकारोत्तरस्य

एकारस्य ईकारे, दकारस्य च मकारे अमी साम् इति जाते, आदेशप्रत्यययोः इति सूत्रेण सकारस्य षत्वे अमीषाम् इति रूपं सिद्धम्।

**अमुष्मिन्** - अदस्-शब्दात् ङिविभक्तौ अनुबन्धलोपे त्यदाद्यत्वे पररूपे ङसिङ्योः स्मात्स्मिनौ इति सूत्रेण ङि-इत्यस्य स्थाने स्मिन्-इत्यादेशे, उत्वे, मत्वे, सकारस्य षत्वे च वर्णमेलने अमुष्मिन् इति रूपं सिद्धम्।

**अमीषु** - अदस्-शब्दात् सुपि, अनुबन्धलोपे त्यदाद्यत्वे, पररूपे, बहुवचने झल्येत् इति एत्वे, ईत्वमत्वे च कृते, ततः सस्य षकारे अमीषु इति रूपं सिद्धम्।

## स्त्रीलिङ्गे अदस्-शब्दः

स्त्रीलिङ्गे अदस्-शब्दस्य प्रथमैकवचनविवक्षायां पुंलिङ्गवदेव रूपम्।

प्रथमायाः द्विवचने औप्रत्यये अदस् औ इति जाते, त्यदाद्यत्वे, पररूपे अद औ इति जाते, स्त्रीत्वविवक्षायां टापि अनुबन्धलोपे सवर्णदीर्घे अदा औ इति जाते औङ आपः इति सूत्रेण औकारस्य स्थाने शी-इत्यादेशे अनुबन्धलोपे अदा ई इति जाते, आद्गुणः इति सूत्रेण गुणे अदे इति जाते अदसोऽसेर्दादु दो मः इति सूत्रेण एकारस्य ऊकारे, दकारस्य च मकारे अमू इति रूपम्।

अदस् अस् (जस्) इति स्थिते त्यदाद्यत्वे, पररूपे, टापि, सवर्णदीर्घे अदा अस् इति जाते प्रथमयोः पूर्वसवर्णः इति सूत्रेण प्राप्तस्य सवर्णदीर्घस्य दीर्घाज्जसि च इति सूत्रेण निषेधः भवति। ततः सवर्णदीर्घे अदास् इति जाते पूर्ववत् अदसोऽसेर्दादु दो मः इति सूत्रेण दकारस्य मकारे, आकारस्य ऊकारे अमूः इति रूपम्।

अदस् अम् इति स्थिते पूर्ववत् प्रक्रियाकार्ये अदा अम् इति जाते अमि पूर्वः इति सूत्रेण पूर्वरूपैकादेशे अदाम् इति जाते ततः अदसोऽसेर्दादु दो मः इति सूत्रेण दकारस्य मकारे, आकारस्य ऊकारे च अमूम् इति रूपम्।

अदस् अस् (शस्) इत्यत्र पूर्ववत् प्रक्रियाकार्ये अदा अस् इति जाते प्रथमयोः पूर्वसवर्णः इति सूत्रेण पूर्वसवर्णदीर्घे अदास् इति जाते पूर्ववत् ऊत्वे मत्वे, सकारस्य रुत्वे विसर्गे च कृते अमूः इति रूपम्।

अदस् आ (टा) इति स्थिते पूर्ववत् प्रक्रियाकार्ये अदा आ इति जाते आङि चापः इति सूत्रेण आपः एकारे अदे आ इति जाते, एचोऽयावायावः इति सूत्रेण एकारस्य स्थानने अयादेशे, अदय् आ इति जाते, पूर्ववत् दकारस्य मकारे, दकारोत्तरस्य अकारस्य उकारे वर्णमेलने च अमुया इति रूपम्।

अदस् भ्याम् इत्यत्र प्रक्रियाकार्ये अदा भ्याम् इति जाते पूर्ववत् ऊत्वे मकारे च अमूभ्याम् इति रूपम्।

एवमेव अमूभिः, अमूभ्यः चेत्यत्रापि बोद्धव्यम्।

अदस् ए (ङे) इत्यवस्थायां प्रक्रियाकार्ये अदा ए इति जाते सर्वादीनि सर्वनामानि इति सूत्रेण तस्य सर्वनामसंज्ञायां सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रेण स्याट् इति आगमे अनुबन्धलोपे आपः ह्रस्वे च



कृते, वृद्धिरेचि इति सूत्रेण आकार-एकारयोः वृद्धौ ऐकारे अद स्यै इति जाते, पूर्ववत् उत्वे मत्वे च अमुस्यै इति जाते, आदेशप्रत्यययोः इति सूत्रेण सकारस्य षकारे अमुष्यै इति रूपम्।

अदस् अस् (ङसि/ङस्) इति स्थिते पूर्ववत् प्रक्रियाकार्ये अदा अस् इति जाते सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रेण स्याडागमे आपः ह्रस्वे, अद स्या अस् इति जाते, अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घे अद स्यास् इति जाते, पूर्ववत् उत्वे मत्वे, सकारस्य षकारे च कृते अमुष्यास् इति जाते ततः सकारस्य रुत्वे विसर्गे च अमुष्याः इति रूपम्।

अदस् ओस् इत्यवस्थायां पूर्ववत् प्रक्रियाकार्ये अदा ओस् इति जाते आङि चापः इति सूत्रेण आपः एकारे, अयादेशे अदय् ओस् इति जाते, पूर्ववत् उत्वे मत्वे च अमुयोस् इति जाते, सकारस्य रुत्वे विसर्गे च अमुयोः इति रूपम्।

अदस् आम् इति स्थिते पूर्ववत् प्रक्रियाकार्ये अदा आम् इति जाते, आमि सर्वनाम्नः सुट् इति सूत्रेण सुडागमे अदा साम् इति जाते, पूर्ववत् ऊत्वे मत्वे, सकारस्य षत्वे अमूषाम् इति रूपम्।

अदस् इ (ङि) इति स्थिते पूर्ववत् प्रक्रियाकार्ये अदा इ इति जाते ङेराम्नद्याम्नीभ्यः इति सूत्रेण ङेः स्थाने आमादेशे अदा आम् इति जाते, सर्वनाम्नः स्याड्ढ्रस्वश्च इति सूत्रेण आमः स्याडागमे, आपः ह्रस्वे च अद स्या आम् इति जाते सवर्णदीर्घे, पूर्ववत् उत्वे मत्वे, सकारस्य षत्वे च कृते वर्णमेलने अमुष्याम् इति रूपम्।

अदस् सु (सुप्) इत्यत्र पूर्ववत् प्रक्रियाकार्ये अदा सु इति जाते पूर्ववत् ऊत्वे मत्वे च अमू सु इति जाते आदेशप्रत्यययोः इति सूत्रेण सकारस्य षत्वे अमूषु इति रूपम्।

स्त्रीलिङ्गे अदस्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| **प्रथमायाम्** | असौ | अमू | अमूः |
| **द्वितीयायाम्** | अमूम् | अमू | अमूः |
| **तृतीयायाम्** | अमुया | अमूभ्याम् | अमूभिः |
| **चतुर्थ्याम्** | अमुष्यै | अमूभ्याम् | अमूभ्यः |
| **पञ्चम्याम्** | अमुष्याः | अमूभ्याम् | अमूभ्यः |
| **षष्ठ्याम्** | अमुष्याः | अमुयोः | अमूषाम् |
| **सप्तम्याम्** | अमुष्याम् | अमुयोः | अमूषु |

## क्लीबलिङ्गे अदस्-शब्दः

अदस् सु इति स्थिते स्वमोर्नपुंसकात् इति सूत्रेण सुप्रत्ययस्य लोपे, पदान्ते विद्यमानस्य सकारस्य रुत्वे विसर्गे च अदः इति रूपम्।



अदस् औ इति स्थिते नपुंसकाच्च इति सूत्रेण औप्रत्ययस्य स्थाने शी-इत्यादेशे अनुबन्धलोपे अदस् ई इति जाते त्यदादीनामः इति सूत्रेण त्यदाद्यत्वे, अतो गुणे इति सूत्रेण पररूपे च कृते अद ई इति जाते आद्गुणः इति गुणे अदे इति जाते अदसोऽसेर्दादु दो मः इत्यनेन ऊत्वे मत्वे च कृते अमू इति रूपम्।

अदस् अस् (जस्) इति स्थिते जश्शसोः शिः इत्यनेन जसः स्थाने शि-इत्यादेशे अनुबन्धलोपे अदस् इ इति जाते त्यदाद्यत्वे पररूपे च कृते अद इ इति जाते नपुंसकस्य झलचः इत्यनेन नुमागमे अद न् इ इति जाते सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण उपधायाः दीर्घे वर्णमेलने अदानि इति रूपम्।

द्वितीयाविभक्तौ अपि एवमेव रूपाणि भवन्ति। अन्यत्र पुंलिङ्गे अदस्-शब्दस्य यथा रूपाणि तथैव वेदितव्यानि।

क्लीबलिङ्गे अदस्-शब्दरूपाणि-

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | अदः | अमू | अमूनि |
| द्वितीयायाम् | अदः | अमू | अमूनि |
| अन्यानि रूपाणि पुंलिङ्गवत् | | | |

## पाठगतप्रश्नाः-२

९. अदस औ सुलोपश्च इति सूत्रस्य अर्थं लिखत।
१०. अदस औ सुलोपश्च इति सूत्रेण कति कार्याणि भवन्ति?
११. अदस औ सुलोपश्च इति सूत्रं कस्यापवादः?
१२. अदसोऽसेर्दादु दो मः इति सूत्रस्य अर्थं लिखत।
१३. एत ईद्बहुवचने इति सूत्रेण किं भवति?
१४. न मु ने इति सूत्रस्य अर्थं लिखत।
१५. अदसोऽसेर्दादु दो मः इत्यस्य अपवादभूतं सूत्रं किम्?

## ददत्-शब्दः

जुहोत्यादिगणे पठितात् दाधातोः लटि, तस्य स्थाने शतृप्रत्यये, शप्प्रत्यये, शपः जुहोत्यादिभ्यः श्लुः इति सूत्रेण श्लौ (लोपे), श्लौ इति षष्ठाध्यायस्थेन द्वित्वविधायकेन सूत्रेण दाधातोः द्वित्वं भवति। तेन दा दा अत् इति जाते पूर्वोऽभ्यासः इति सूत्रेण पूर्वस्य दा इत्येतस्य अभ्याससंज्ञायां ह्रस्वः इति सूत्रेण अभ्यासस्य ह्रस्वे, श्नाभ्यस्तयोरातः इति सूत्रेण ददा इत्यत्र आकारस्य लोपे दद् अत् इति जाते वर्णसम्मेलने ददत् इति शब्दः निष्पद्यते। वस्तुतः इयं प्रक्रिया भवद्भिः तिङन्तप्रकरणे ज्ञातुं शक्यते। अत्र



तु प्रसङ्गवशात् उल्लिखितम्। त्रिषु अपि लिङ्गेषु ददत्-शब्दस्य प्रयोगः भवति। परन्तु पुंलिङ्गे क्लीबलिङ्गे च नुमागमविषये कश्चिद् विशेषः अवलोक्यते।

## पुंलिङ्गे ददत्-शब्दः

ददत्-शब्दात् सुप्रत्यये अनुबन्धलोपे ददत् स् इति स्थितिः भवति। अयं ददत्-शब्दः यतः शतृप्रत्ययान्तः तस्मात् उगित् भवति। तेन उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमे प्राप्ते अग्रिमं सूत्रम् आगच्छति-

### [ १८.८] उभे अभ्यस्तम्। (६.१.५)

**सूत्रार्थः** –षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः।

**सूत्रव्याख्या** – अनेन सूत्रेण अभ्यस्तसंज्ञा विधीयते। अतः इदं संज्ञासूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते – उभे इति प्रथमाद्विवचनान्तं पदम्। अभ्यस्तम् इति प्रथमैकवचनान्तं पदम्। एकाचो द्वे प्रथमस्य इति सूत्रात् द्वे इति प्रथमाद्विवचनान्तं पदम् अनुवर्तते। द्वे उभे अभ्यस्तम् इति अन्वयः।

द्वित्वविधायकानि सूत्राणि अष्टाध्याय्याम् अध्यायद्वये दृश्यते। तथाहि षष्ठाध्यायस्य प्रथमपादे प्रथमसूत्रम् आरभ्य द्वादश सूत्रं यावत् कानिचन सूत्राणि तथा अष्टमाध्यायस्य प्रथमपादे प्रथमसूत्रम् आरभ्य पञ्चदश सूत्रं यावत् कानिचन सूत्राणि। अस्मिन् सूत्रे यत् द्वित्वविधानम् उक्तं तत् षष्ठाध्यायस्थसूत्रविषये एव। नियमः अस्ति अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति। अस्य तात्पर्यं तावत् समीपस्थितस्यैव विधिः प्रतिषेधो वा भवति न दूरस्थस्य इति। उभे अभ्यस्तम् इति सूत्रं षष्ठाध्याये पठितम्। अतः अभ्यस्तसंज्ञा षष्ठाध्यायस्थैः द्वित्वविधायकसूत्रैः सम्पादितस्य समुदायस्य एव भवति। अतः सूत्रार्थे षाष्ठद्वित्वप्रकरणे इति उक्तम्। सूत्रे उभे इति कथनात् अभ्यस्तसंज्ञा समुदितस्यैव भवति। तेन सूत्रार्थो भवति षष्ठाध्यायस्थसूत्रैः ये द्वे विहिते ते उभे अपि समुदिते अभ्यस्तसंज्ञे भवतः इति।

**सूत्रार्थसमन्वयः** – षाष्ठद्वित्वप्रकरणस्थेन श्लौ इति सूत्रेण द्वित्वविधानात् दद् इति समुदायस्य उभे अभ्यस्तम् इति सूत्रेण अभ्यस्तसंज्ञा भवति। ततः अग्रिमं सूत्रं प्रवर्तते -

### [ १८.९] नाभ्यस्ताच्छतुः। (७.१.७८)

**सूत्रार्थः** – अभ्यस्तात् परस्य शतुः नुम् न स्यात्।

**सूत्रव्याख्या** – अनेन सूत्रेण नुमागमः निषिद्ध्यते। अतः इदं निषेधसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। न अभ्यस्तात् शतुः इति सूत्रगतपदच्छेदः। न इति अव्ययपदम्। अभ्यस्तात् इति पञ्चम्येकवचनान्तं पदम्। शतुः इति षष्ठ्येकवचनान्तं पदम्। अस्मिन् सूत्रे इदितो नुम् धातोः इति सूत्रात् नुम् इति प्रथमान्तं पदम् अनुवर्तते। अभ्यस्तात् शतुः नुम् न इति अन्वयः। सूत्रार्थो भवति अभ्यस्तात् परस्य शतृप्रत्ययस्य नुमागमः न भवति इति।

**सूत्रार्थसमन्वयः** –ददत् स् इति स्थितिः। अत्र उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुम् इति आगमे प्राप्ते दद् इति अभ्यस्तसंज्ञकात् परस्य अत्(शतृ)भागस्य नुमागमः अनेन सूत्रेण निषिद्ध्यते।

तेन ददत् स् इति जाते हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण सकारस्य लोपे ददत् इति भवति। ततः झलां जशोऽन्ते इति सूत्रेण तकारस्य दकारे ददद् इति रूपं निष्पद्यते। दकारस्य पुनः वाऽवसाने इति सूत्रेण विकल्पेन चर्त्वे ददत्, ददद् चेति रूपद्वयम्।

हलादिविभक्तिषु परेषु ददत्-शब्दस्य तकारस्य झलां जशोऽन्ते इति सूत्रेण दकारः भवति।

## क्लीबलिङ्गे ददत्-शब्दः

नपुंसकलिङ्गे ददत्-शब्दात् सुप्रत्यये, स्वमोर्नपुंसकात् इति सूत्रेण सुप्रत्ययस्य लुकि ददत् इति भवति। ततः झलां जशोऽन्ते इति सूत्रेण तकारस्य जश्त्वे दकारे, वाऽवसाने इति सूत्रेण दकारस्य विकल्पेन चर्त्वे ददत्, ददद् चेति रूपद्वयम्।

ददत्-शब्दात् औप्रत्यये ददत् औ इति स्थिते नपुंसकाच्च इति सूत्रेण औप्रत्ययस्य स्थाने शी-इत्यादेशे अनुबन्धलोपे ददत् ई इति जाते वर्णसम्मेलने ददती इति रूपम्।

ददत्-शब्दात् जसि अनुबन्धलोपे ददत् अस् इति स्थिते जश्शसोः शिः इति सूत्रेण जस्प्रत्ययस्य स्थाने शि-इत्यादेशे अनुबन्धलोपे ददत् इ इति जाते, शि सर्वनामस्थानम् इति सूत्रेण शि इत्येतस्य सर्वनामस्थानसंज्ञा भवति। ततः उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण, नपुंसकस्य झलचः इति सूत्रेण वा ददत्-शब्दस्य नुमागमः प्राप्नोति। परन्तु दद् इति भागस्य उभे अभ्यस्तम् इति सूत्रेण अभ्यस्तसंज्ञायां, तस्मात् परस्य अत् (शतृ)-भागस्य स्थाने प्राप्तः नुमागमः नाभ्यस्ताच्छतुः इति सूत्रेण निषिद्ध्यते। ततः अग्रिमं सूत्रम् आगच्छति -

## [ १८.१० ] वा नपुंसकस्य। (७.१.७९)

**सूत्रार्थः** – अभ्यस्तात् परः यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने।

**सूत्रव्याख्या** – अनेन सूत्रेण विकल्पेन नुमागमः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते – वा इति अव्ययम्, नपुंसकस्य इति षष्ठ्येकवचनान्तं पदम्। नाभ्यस्ताच्छतुः इति सूत्रात् अभ्यस्तात् इति पञ्चम्येकवचनान्तं, शतुः इति षष्ठ्येकवचनान्तं पदं च अनुवर्तते। अङ्गस्य इति सूत्रम् अधिकृतम्। इदितो नुम् धातोः इति सूत्रात् नुम् इति प्रथमान्तं पदम् अनुवर्तते। उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रात् सर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम् अनुवर्तते। अभ्यस्तात् शतुः नपुंसकस्य अङ्गस्य वा नुम् सर्वनामस्थाने इति अन्वयः। सूत्रार्थो भवति अभ्यस्तात् परं विद्यमानः यः शतृप्रत्ययः, तदन्तस्य क्लीबस्य विकल्पेन नुमागमः भवति सर्वनामस्थाने परे इति।

अयं नुमागमः मित् भवति। तेन मिदचोऽन्त्यात्परः इति परिभाषया अन्त्यात् अचः परमेव भवति।

**सूत्रार्थसमन्वयः** – ददत् इ (शि) इति स्थितिः। अत्र शि इति शि सर्वनामस्थानम् इत्यनेन सर्वनामस्थानसंज्ञकः। दद् इति भागः उभे अभ्यस्तम् इति सूत्रेण अभ्यस्तसंज्ञकः। ततः परम् अत् इति शतृप्रत्ययः। तदन्तः ददत्-शब्दः क्लीबलिङ्गे वर्तते। अतः प्रस्तुतसूत्रेण ददत्-शब्दस्य विकल्पेन नुमागमः भवति। तेन यस्मिन् पक्षे नुमागमः भवति तत्र दद् अ न् त् इ इति जाते वर्णसम्मेलने ददन्ति इति रूपम्। यस्मिन् च पक्षे नुमागमः न भवति तत्र ददति इति रूपम्।

## तुदत्-शब्दः

तुदादिगणीयात् व्यथनार्थकात् तुद्-धातोः लटि, तस्य स्थाने शतृप्रत्यये, शब्विकरणे प्रक्रियाकार्ये तुद् अ अत् इति स्थितिः। अत्र तुद (तुद् अ) इति भागः यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति सूत्रेण अङ्गसंज्ञकः। ततः अतो गुणे इति सूत्रेण तुद अत् इत्यत्र पररूपैकादेशे तुदत् इति शब्दः निष्पद्यते। अस्य शब्दस्य क्लीबलिङ्गे नुमागमविषये कश्चित् विशेषः परिलक्ष्यते।

तुदत्-शब्दात् प्रथमैकवचनविवक्षायां सुप्रत्यये ददत्-शब्दवत् रूपम्।

तुदत्-शब्दात् औप्रत्यये तुदत् औ इति स्थिते नपुंसकाच्च इति सूत्रेण औप्रत्ययस्य स्थाने शी इत्यादेशे अनुबन्धलोपे तुदत् ई इति जाते अग्रिमं सूत्रं प्रवर्तते -

## [ १८.११] आच्छीनद्योर्नुम्। (७.१.८०)

सूत्रार्थः - अवर्णान्तात् अङ्गात् परः यः शतुः अवयवः तदन्तस्य नुम् वा शीनद्योः।

**सूत्रव्याख्या** - अनेन सूत्रेण विकल्पेन नुमागमः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। आत्, शीनद्योः नुम् इति सूत्रगतपदच्छेदः। आत् इति पञ्चम्येकवचनान्तं पदम्, शीनद्योः इति सप्तमीद्विवचनान्तं पदम्। नुम् इति प्रथमैकवचनान्तं पदम्। अङ्गस्य इति सूत्रम् अधिकृतं पञ्चम्येकवचनान्ततया विपरिणम्यते। अङ्गस्य इति सूत्रं पुनः अधिकृतम्। नाभ्यस्ताच्छतुः इति सूत्रात् शतुः इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। वा नपुंसकस्य इति सूत्रात् वा इति अव्ययपदम् अनुवर्तते। आत् अङ्गात् शतुः अङ्गस्य वा नुम् इत्यन्वयः। अत्र आत् इति अङ्गात् इत्यस्य विशेषणम्। तेन तदन्तविधौ अदन्तात् इति लभ्यते। सूत्रार्थो भवति – अदन्तात् अङ्गात् परः शतृप्रत्ययस्य यः अवयवः, तदन्तस्य अङ्गस्य नुमागमः विकल्पेन भवति शीपरे, नदीपरे च इति सूत्रार्थः।

**सूत्रार्थसमन्वयः** – तुदत् इत्यत्र तुद इति अङ्गसंज्ञकः। तस्मात् परं त् इति शतृप्रत्ययस्य अवयवः। तदन्तः अङ्गः तुदत् इति। तस्मात् परं शी इति वर्तते। अतः तस्मिन् परे सति विकल्पेन नुमागमः भवति। यस्मिन् पक्षे नुमागमः भवति तत्र तुद न् त् ई इति जाते वर्णसम्मेलने तुदन्ती इति रूपम्। यस्मिन् च पक्षे नुमागमः न भवति तत्र तुदत् ई इति जाते वर्णसम्मेलने तुदती इति रूपम्।

तुदच्छब्दात् जसि जश्शसोः शिः इति सूत्रेण जसः स्थाने शि-इत्यादेशे अनुबन्धलोपे तुदत् इ इति भवति। शि इत्येतस्य शि सर्वनामस्थानम् इति सूत्रेण सर्वनामस्थानसंज्ञा भवति। अतः तस्मिन् परे तुदत् इति झलन्तः वर्तते। अतः नपुंसकस्य झलचः इति सूत्रेण तुदत् इत्यत्र अन्त्यात् अचः परं नुमागमे अनुबन्धलोपे तुद् अ न् त् इ इति जाते वर्णसम्मेलने तुदन्ति इति रूपम्।

## पचत्-शब्दः

पाकार्थकात् भ्वादिगणीयात् पच्-धातोः लटि, लटः स्थाने शतृप्रत्यये, शब्विकरणे प्रक्रियाकार्ये पच् अ अत् इति स्थितिः। अत्र पच (पच् + अ) यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति सूत्रेण अङ्गसंज्ञकः। ततः अतो गुणे इति सूत्रेण पच अत् इत्यत्र पररूपैकादेशे पचत् इति शब्दः निष्पद्यते।

पचत्-शब्दात् क्लीबलिङ्गे सुप्रत्यये अनुबन्धलोपे ददत्-शब्दवत् रूपम्।



पचत् औ इति स्थिते नपुंसकाच्च इति सूत्रेण औ-प्रत्ययस्य स्थाने शी-इत्यादेशे अनुबन्धलोपे पचत् ई इति भवति। ततः अग्रिमं सूत्रं प्रवर्तते -

## [ १८.१२] शप्श्यनोर्नित्यम्। (७.१.८१)

**सूत्रार्थः** – शप्श्यनोः आत्परो यः शतुः अवयवः तदन्तस्य नित्यं नुम् स्यात् शीनद्योः।

**सूत्रव्याख्या** – सूत्रेण अनेन नुमागमः विधीयते। अतः इदं विधिसूत्रम्। अस्मिन् सूत्रे पदद्वयं वर्तते। शप्श्यनोः इति षष्ठीद्विवचनान्तं पदम्। नित्यम् इति प्रथमैकवचनान्तं पदम्। आच्छीनद्योर्नुम् इति सूत्रात् आत् इति पञ्चम्येकवचनान्तं, नुम् इति प्रथमैकवचनान्तं च पदम् अनुवर्तते। नाभ्यस्ताच्छतुः इति सूत्रात् शतुः इति षष्ठ्येकवचनान्तं पदम् अनुवर्तते। अङ्गस्य इति षष्ठ्येकवचनान्तं सूत्रम् अधिकृतम्। शप्श्यनोः आत् शतुः नित्यं नुम् शीनद्योः इति अन्वयः। सूत्रस्य सरलार्थो भवति शप् इत्यत्र यः अकारः, श्यन् इत्यत्र च यः अकारः, तस्मात् परं शतृप्रत्ययस्य यः अवयवः तदन्तस्य शब्दस्य शीपरे नदीपरे च नित्यं नुमागमः भवति इति।

भ्वादिगणे तथा चुरादिगणे शब्विकरणः, दिवादिगणे च श्यन्विकरणः तिष्ठति। अतः भ्वादिगणीयात् चुरादिगणीयात् दिवादिगणीयात् च धातोः विहितः यः शतृप्रत्ययः तदन्तात् प्रस्तुतेन सूत्रेण नित्यं नुमागमः भवति।

**सूत्रार्थसमन्वयः** – पचत् ई इति स्थितिः। अत्र अन्तादिवच्च इति परिभाषया पच इति अङ्गसंज्ञकः। तस्मात् परं त् इति शतृप्रत्ययस्य अवयवः। तदन्तः शब्दः पचत् इति। तस्मात् परं शी इति वर्तते। अतः प्रस्तुतेन सूत्रेण नित्यं नुमागमे अनुबन्धलोपे पच न् त् ई इति जाते, नकारस्य नश्चापदान्तस्य झलि इति सूत्रेण अनुस्वारे, अनुस्वारस्य च अनुस्वारस्य ययि परसवर्णः इति सूत्रेण परसवर्णे नकारे पचन्ती इति रूपम्।

पचत् जस् इति स्थिते जश्शसोः शिः इत्यनेन जसः स्थाने शि इति आदेशः भवति। तेन पचत् इ इति स्थितिः सम्पद्यते। शि इत्येतस्य शि सर्वनामस्थानम् इत्यनेन सर्वनामस्थानसंज्ञा भवति। पचत् इति शब्दः झलन्तः अस्ति। तस्मात् नपुंसकस्य झलचः इति सूत्रेण नुमागमे अनुबन्धलोपे, नकारस्य अनुस्वारे, अनुस्वारस्य च परसवर्णे पचन्ति इति रूपम्।

एवं दीव्यत्-शब्दविषये अपि ज्ञातव्यम्।



## पाठगतप्रश्नाः-३

१६. अभ्यस्तसंज्ञाविधायकं सूत्रं किम्?

१७. वा नपुंसकस्य इति सूत्रस्य अर्थं लिखत।

१८. आच्छीनद्योर्नुम् इति सूत्रस्य अर्थं लिखत।

१९. शप्श्यनोर्नित्यम् इति सूत्रस्य अर्थं लिखत।

२०. अभ्यस्तात् परः यः शतृप्रत्ययः, तदन्तस्य क्लीबस्य नुमागमः केन सूत्रेण विधीयते?

२१. तुदन्ती, तुदती इति रूपद्वये किं कारणम्?

२२. पचन्ति इत्यत्र नुमागमः केन सूत्रेण?

२३. पचन्ती इत्यत्र नुमागमः केन सूत्रेण?

२४. उभे अभ्यस्तम् इति सूत्रस्य अर्थं लिखत।

२५. तुदत्-शब्दस्य प्रथमैकवचने कति रूपाणि? कानि च तानि?

## पाठसारः

महत्-शब्दः उगित् अस्ति। अतः सर्वनामस्थानसंज्ञके प्रत्यये परे उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण नुमागमः भवति। किञ्च, तादृशे प्रत्यये परे उपधायाः दीर्घः सान्त महतः संयोगस्य इति सूत्रेण विधीयते। सम्बोधनैकवचने तु सुप्रत्ययस्य सम्बुद्धिसंज्ञा वर्तते। तस्मात् उपधादीर्घविधायकं सूत्रं तत्र न प्रवर्तते। अन्यत्र भ्यामादिप्रत्ययेषु परेषु झलां जशोऽन्ते इति सूत्रेण तकारस्य दकारः भवति। सुप्प्रत्यये परे तु तकारस्य च झलां जशोऽन्ते इति सूत्रेण दकारः, दकारस्य च खरि च इति सूत्रेण चर्त्वे तकारे पुनः तकारः भवति।

विद्वस्-शब्दः वसुप्रत्ययान्तः। तेन वसुप्रत्ययान्तस्य भस्य अङ्गस्य स्थाने सम्प्रसारणं भवति इति विशेषः।

भवत्-शब्दः द्विविधः – एकः भाधातोः डवतुप्रत्ययेन निष्पन्नः, अन्यश्च भूधातोः शतृप्रत्यययोगेन निष्पन्नः। प्रथमे भवच्छब्दे अत्वसन्तस्य चाधातोः इति सूत्रेण उपधादीर्घः भवति। द्वितीये भवच्छब्दे तु तथा न भवति।

विप्रकृष्टार्थं बोधयति अदस्-शब्दः। तस्य सुप्रत्यये परे सकाररूपः अन्तादेशः, सुप्रत्ययस्य लोपः चेति द्विविधं कार्यम् अदस औ सुलोपश्च इति सूत्रं विधत्ते। औप्रत्यये परे तु प्रक्रियाकार्ये अदौ इति जाते अदसोऽसेर्दादु दो मः इति सूत्रेण औकारस्य स्थाने ऊकारः, दकारस्य च स्थाने मकारः चेति द्विविधं कार्यं विधीयेते। बहुवचने तु जसः स्थाने शी इत्यादेशे प्रक्रियाकार्ये अदे इति जाते एकारस्य स्थाने ईकारं, दकारस्य च स्थाने मकारं चेति कार्यद्वयं साधयति एत ईद्बहुवचने इति सूत्रम्। तृतीयैकवचने तु अदसोऽसेर्दादु दो मः इति सूत्रेण विहितः मुभावः पूर्वत्रासिद्धम् इति सूत्रबलात् आङो नाऽस्त्रियाम् इति सूत्रदृष्ट्या असिद्धः भवति। परन्तु तस्य निषेधः न मु ने इति सूत्रेण भवति।

ततः शतृप्रत्ययान्ताः त्रयः शब्दाः आलोचिताः। अत्र प्रथमतः अभ्यस्तसंज्ञाविषये परिचयः कृतः। ततः पुंलिङ्गे ददत्-शब्दस्य प्राप्तस्य नुमागमस्य नाभ्यस्ताच्छतुः इति सूत्रेण निषेधः विहितः। क्लीबलिङ्गे अपि जस्प्रत्यये (शि-आदेशे) परे नपुंसकस्य झलचः इति सूत्रेण प्राप्तः नुमागमः नाभ्यस्ताच्छतुः इति सूत्रेण निषिद्धः भवति। परन्तु वा नपुंसकस्य इति सूत्रेण अभ्यस्तात् परं विद्यमानः

यः शतृप्रत्ययः, तदन्तस्य क्लीबस्य सर्वनामस्थाने परे विकल्पेन नुमागमः विहितः। तेन जसि ददन्ति, ददति चेति रूपद्वयं सिद्धं भवति।

शीपरे नदीपरे तु अवर्णान्तात् अङ्गात् परः यः शतृप्रत्ययस्य अवयवः तदन्तात् आच्छीनद्योर्नुम् इति सूत्रेण विकल्पेन नुमागमः भवति। तेन औप्रत्यये परे (शी-आदेशे) विकल्पेन नुमागमे तुदन्ती, तुदती चेति रूपद्वयं भवति। परन्तु तस्मिन् एव शीपरे नदीपरे च शप् इत्यत्र यः अकारः, श्यन् इत्यत्र च यः अकारः, तस्मात् परः शतृप्रत्ययस्य यः अवयवः तदन्तस्य शब्दस्य स्थाने शप्श्यनोर्नित्यम् इति सूत्रेण नित्यं नुमागमः भवति।

## योग्यतावर्धनम्

पूर्वेषु पाठेषु चतुर्, पञ्चन्, अष्टन् चेति संख्यावाचकाः शब्दाः आलोचिताः। अस्मिन् अंशे षष्-शब्द आलोच्यते। षष्-शब्दस्य रूपाणां सिद्धिः पूर्वसूत्रैरेव सम्भवति। अतः योग्यतावर्धनांशे अस्य आलोचना विहिता।

षो अन्तकर्मणि इति सूत्रात् पृषोदरादीनि यथोपदिष्टम् इति सूत्रेण षष् इति शब्दः निष्पद्यते। षष्-शब्दः नित्यबहुवचनान्तः। त्रिषु अपि लिङ्गेषु अस्य समानमेव रूपम्।

षष्-शब्दात् जसि शसि वा अनुबन्धलोपे षष् अस् इति स्थितिः भवति। ष्णान्ता षट् इति सूत्रेण षष्-इत्यस्य षट्संज्ञा भवति। ततः षड्भ्यो लुक् इति सूत्रेण जस्प्रत्ययस्य शस्प्रत्ययस्य वा लुक् भवति। ततः झलां जशोऽन्ते इति सूत्रेण षकारस्य जश्त्वे डकारे वाऽवसाने इति सूत्रेण डकारस्य वैकल्पिकचर्त्वे षट्, षड् चेति रूपद्वयं सिद्ध्यति।

षष्-शब्दात् भिस्प्रत्यये, भ्यम्प्रत्यये वा परे सति झलां जशोऽन्ते इति सूत्रेण षकारस्य जश्त्वे डकारे षड्भ्याम् इति रूपम्।

षष्-शब्दात् षष्ठीबहुवचने आम्प्रत्यये षष् आम् इति स्थिते षट्चतुर्भ्यश्च इति सूत्रेण आमः नुडागमे अनुबन्धलोपे षष् नाम् इति जाते स्वादिष्वसर्वनामस्थाने इति सूत्रेण तस्य पदसंज्ञायां झलां जशोऽन्ते इति सूत्रेण षकारस्य जश्त्वे डकारे, प्रत्यये भाषायां नित्यम् (वा० ११) इति वार्तिकेन डकारस्य णकारे, ष्टुना ष्टुः इति सूत्रेण नकारस्य णकारे, षण्णाम् इति रूपम्।

षष्-शब्दात् सप्तमीबहुवचनविवक्षायां सुप्प्रत्यये अनुबन्धलोपे षष् सु इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण षष् इत्यस्य पदसंज्ञायां झलां जशोऽन्ते इति सूत्रेण षकारस्य जश्त्वे डकारे षड् सु इति जाते डः सि धुट् इति सूत्रेण सकारस्य विकल्पेन धुट् इति आगमः भवति। अयं च आगमः टित्त्वात् सकारस्य आद्यावयवः भवति। तेन एकस्मिन् पक्षे धुट् इति आगमे अनुबन्धलोपे षड् ध्



सु इति जाते खरि च इति सूत्रेण धकारस्य चर्त्वे तकारे, डकारस्य च चर्त्वे टकारे षट्त्सु इति रूपम्। धुडागमाभावपक्षे षड् सु इति जाते खरि च इति सूत्रेण डकारस्य चर्त्वे टकारे षट्सु इति रूपम्।

छात्राणामुपकाराय अस्मिन् पाठे आलोचितानां शब्दानां रूपाणि अधः प्रदीयन्ते।

१. महच्छब्दरूपाणि (पुंलिङ्गे) –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | महान् | महान्तौ | महान्तः |
| द्वितीयायाम् | महान्तम् | महान्तौ | महतः |
| तृतीयायाम् | महता | महद्भ्याम् | महद्भिः |
| चतुर्थ्याम् | महते | महद्भ्याम् | महद्भ्यः |
| पञ्चम्याम् | महतः | महद्भ्याम् | महद्भ्यः |
| षष्ठ्याम् | महतः | महतोः | महताम् |
| सप्तम्याम् | महति | महतोः | महत्सु |

२. षष्-शब्दरूपाणि -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | - | - | षट्, षड् |
| द्वितीयायाम् | - | - | षट्, षड् |
| तृतीयायाम् | - | - | षड्भिः |
| चतुर्थ्याम् | - | - | षड्भ्यः |
| पञ्चम्याम् | - | - | षड्भ्यः |
| षष्ठ्याम् | - | - | षण्णाम् |
| सप्तम्याम् | - | - | षट्त्सु, षट्सु |

३. विद्वस्-शब्दरूपाणि (पुंलिङ्गे) -

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | विद्वान् | विद्वांसौ | विद्वांसः |
| द्वितीयायाम् | विद्वांसम् | विद्वांसौ | विदुषः |
| तृतीयायाम् | विदुषा | विद्वद्भ्याम् | विद्वद्भिः |
| चतुर्थ्याम् | विदुषे | विद्वद्भ्याम् | विद्वद्भ्यः |
| पञ्चम्याम् | विदुषः | विद्वद्भ्याम् | विद्वद्भ्यः |
| षष्ठ्याम् | विदुषः | विदुषोः | विदुषाम् |
| सप्तम्याम् | विदुषि | विदुषोः | विद्वत्सु |
| सम्बोधने | विद्वन् | विद्वांसौ | विद्वांसः |

४. भवत् (डवतुप्रत्ययान्तः)-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | भवान् | भवन्तौ | भवन्तः |
| द्वितीयायाम् | भवन्तम् | भवन्तौ | भवतः |
| तृतीयायाम् | भवता | भवद्भ्याम् | भवद्भिः |
| चतुर्थ्याम् | भवते | भवद्भ्याम् | भवद्भ्यः |
| पञ्चम्याम् | भवतः | भवद्भ्याम् | भवद्भ्यः |
| षष्ठ्याम् | भवतः | भवतोः | भवताम् |
| सप्तम्याम् | भवति | भवति | भवत्सु |
| सम्बोधने | भवन् | भवन्तौ | भवन्तः |

५. पुंलिङ्गे अदस्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | असौ | अमू | अमी |
| द्वितीयायाम् | अमुम् | अमू | अमून् |
| तृतीयायाम् | अमुना | अमूभ्याम् | अमीभिः |
| चतुर्थ्याम् | अमुष्मै | अमूभ्याम् | अमीभ्यः |
| पञ्चम्याम् | अमुष्मात् | अमूभ्याम् | अमीभ्यः |
| षष्ठ्याम् | अमुष्य | अमुयोः | अमीषाम् |
| सप्तम्याम् | अमुष्मिन् | अमुयोः | अमीषु |

६. पुंलिङ्गे ददत्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | ददत्, ददद् | ददतौ | ददतः |
| द्वितीयायाम् | ददतम् | ददतौ | ददतः |
| तृतीयायाम् | ददता | ददद्भ्याम् | ददद्भिः |
| चतुर्थ्याम् | ददते | ददद्भ्याम् | ददद्भ्यः |
| पञ्चम्याम् | ददतः | ददद्भ्याम् | ददद्भ्यः |
| षष्ठ्याम् | ददतः | ददतोः | ददताम् |
| सप्तम्याम् | ददति | ददतोः | ददत्सु |
| सम्बोधने | प्रथमाविभक्तिवत् रूपाणि | | |

७. क्लीबलिङ्गे ददत्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | ददत्, ददद् | ददती | ददन्ति, ददति |
| द्वितीयायाम् | ददत्, ददद् | ददती | ददन्ति, ददति |
| अन्यत्र पुंलिङ्गवत् रूपाणि | | | |

तुदत्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | तुदत्, तुदद् | तुदन्ती, तुदती | तुदन्ति |
| द्वितीयायाम् | तुदत्, तुदद् | तुदन्ती, तुदती | तुदन्ति |
| तृतीयायाम् | तुदता | तुदद्भ्याम् | तुदद्भिः |
| चतुर्थ्याम् | तुदते | तुदद्भ्याम् | तुदद्भ्यः |
| पञ्चम्याम् | तुदतः | तुदद्भ्याम् | तुदद्भ्यः |
| षष्ठ्याम् | तुदतः | तुदतोः | तुदताम् |
| सप्तम्याम् | तुदति | तुदतोः | तुदत्सु |
| सम्बोधने | प्रथमाविभक्तिवत् रूपाणि | | |

८. पचत्-शब्दरूपाणि –

| विभक्तौ | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम् | पचत्, पचद् | पचन्ती | पचन्ति |
| द्वितीयायाम् | पचत्, पचद् | पचन्ती | पचन्ति |
| तृतीयायाम् | पचता | पचद्भ्याम् | पचद्भिः |
| चतुर्थ्याम् | पचते | पचद्भ्याम् | पचद्भ्यः |
| पञ्चम्याम् | पचतः | पचद्भ्याम् | पचद्भ्यः |
| षष्ठ्याम् | पचतः | पचतोः | पचताम् |
| सप्तम्याम् | पचति | पचतोः | पचत्सु |
| सम्बोधने | प्रथमाविभक्तिवत् रूपाणि | | |

## पाठान्तप्रश्नाः

१. सान्तमहतः संयोगस्य इति सूत्रं व्याख्यात।

२. अत्वसन्तस्य चाधातोः इति सूत्रं व्याख्यात।

३. भवत् इति शब्दविषये टिप्पणी लेख्या।

४. अदसोऽसेर्दादु दो मः इति सूत्रं सोदाहरणं व्याख्यात।



५. अदस औ सुलोपश्च इति सूत्रं सोदाहरणं व्याख्यात।

६. एत ईद्बहुवचने इति सूत्रं सोदाहरणं व्याख्यात।

७. न मु ने इति सूत्रं व्याख्यात।

८. प्रदत्तानि रूपाणि ससूत्रं साधयत - महान् विदुषः असौ अमू अमी अमुना

९. ददच्छब्दस्य क्लीबलिङ्गे प्रथमाबहुवचने रूपाणि साधयत।

१०. तुदच्छब्दस्य क्लीबलिङ्गे प्रथमाद्विवचने रूपाणि साधयत।

११. शप्श्यनोर्नित्यम् इति सूत्रं व्याख्यात।

१२. वा नपुंसकस्य इति सूत्रं व्याख्यात।

१३. आच्छीनद्योर्नुम् इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. सान्तसंयोगस्य महतः च यः नकारः तस्य उपधायाः दीर्घः असम्बुद्धौ सर्वनामस्थाने इति सूत्रार्थः।

२. वस्वन्तस्य भस्य सम्प्रसारणं स्यात् इति सूत्रार्थः।

३. महत्-शब्दस्य सम्बोधनैकवचने उपधायाः दीर्घः न भवति। सम्बोधनैकवचने सु इत्यस्य एकवचनं सम्बुद्धिः इति सूत्रेण सम्बुद्धिसंज्ञाविधानात् सान्त महतः संयोगस्य इति सूत्रे असम्बुद्धौ सर्वनामस्थाने इति कथनात्।

४. उगिदचां सर्वनामस्थानेऽधातोः इति सूत्रेण।

५. विदुषः इति उदाहरणम् अत्र।

६. अत्वन्तस्य उपधायाः दीर्घः धातुभिन्नासन्तस्य च असम्बुद्धौ सौ परे इति सूत्रार्थः।

७. अत्वसन्तस्य चाधातोः इति सूत्रेण।

८. मतुप्, वतुप्, डवतु चेत्यादीनाम् अतु-अन्तानां ग्रहणं भवति।

### उत्तराणि-२

९. अदसः औकारः अन्तादेशः स्यात् सौ परे सुलोपश्च इति सूत्रार्थः।

१०. कार्यद्वयं भवति – औकाररूप-अन्तादेशविधानम्, सुप्रत्ययस्य लोपश्च।

११. त्यदादीनामः इति सूत्रस्य अपवादः।

१२. अदसः असान्तस्य दात्परस्य उदूतौ स्तः दस्य मश्च इति सूत्रार्थः।

१३. अदसः दात्परस्य एत ईद् दस्य च मो बह्वर्थोक्तौ इति सूत्रार्थः।

१४. नाभावे कर्तव्ये कृते च मुभावो न असिद्धः इति सूत्रार्थः।

१५. एत ईद्बहुवचने इति सूत्रम्।

**उत्तराणि-३**

१६. उभे अभ्यस्तम् इति।

१७. अभ्यस्तात् परः यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने इति सूत्रार्थः।

१८. अवर्णान्तात् अङ्गात् परः यः शतुः अवयवः तदन्तस्य नुम् वा शीनद्योः इति सूत्रार्थः।

१९. शप्श्यनोरात् परः यः शतुः अवयवः तदन्तस्य नित्यं नुम् शीनद्योः इति सूत्रार्थः।

२०. वा नपुंसकस्य इति सूत्रेण।

२१. आच्छीनद्योर्नुम् इति सूत्रम्।

२२. नपुंसकस्य झलचः इति सूत्रेण।

२३. शप्श्यनोर्नित्यम् इति सूत्रम्।

२४. षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः इति सूत्रार्थः।

२५. रूपद्वयम् – तुदद्, तुदत् चेति।

## ।।इति अष्टादशः पाठः।।

- सन्दर्भग्रन्थसूची- लघुसिद्धान्तकौमुदी – वरदराजाचार्यः।
- सहायकग्रन्था:- वैयाकरणसिद्धान्तकौमुदी (बालमनोरमा-तत्त्वबोधिनीसहिता)
  लघुसिद्धान्तकौमुदी (भैमीव्याख्या)
- वैयाकरणसिद्धान्तकौमुदी (लक्ष्मीटीकोपेता)
- लघुशब्देन्दुशेखरः –मुक्तस्वाध्यायपीठम् – राष्ट्रियसंस्कृतसंस्थानम् अष्टाध्यायी।

# सुबन्तप्रकरणस्य सूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्ययीक्रमः**

[१२.१७] अचि श्नुधातुभ्रुवां०॥ (६.४.७७)
[१२.१४] अचो ञ्णिति॥ (७.१.९०)
[१२.१२] अच्च घेः॥ (७.३.११९)
[१०.२०] अट्कुप्वाङ्नुम्व्यवायेऽपि॥ (८.४.२)
[१६.३] अतो गुणे॥ (६.१.९७)
[१०.१४] अतो गुणे॥ (६.१.९७)
[११.३] अतो भिस ऐस्॥ (७.१.९)
[१४.१] अतोऽम्॥ (७.१.२४)
[१८.३] अत्वसन्तस्य चाधातोः॥ (६.४.१४)
[१८.४] अदस औ सुलोपश्च॥ (७.२.१०७)
[१८.५] अदसोऽसेर्दादु दो मः॥ (८.२.८०)
[१६.५] अनाप्यकः॥ (७.२.११२)
[१०.१७] अमि पूर्वः॥ (६.१.१०३)
[१५.९] अम् सम्बुद्धौ (७.१.९९)
[१३.१३] अम्बार्थनद्योर्ह्रस्वः (७.३.१०७)
[१०.१] अर्थवदधातुरप्रत्ययः०॥ (१.२.४५)
[१२.१६] अलोऽन्त्यात्पूर्व उपधा॥ (१.१.६५)
[१४.१५] अल्लोपोऽनः॥ (६.४.१३४)
[१६.२२] अष्टन आ विभक्तौ॥ (७.२.८४)
[१६.२३] अष्टाभ्य औश् (७.१.२१)
[१४.१४] अस्थिदधिसक्थ्य ०॥ (७.१.७५)
[१२.५] आकडारादेका संज्ञा॥ (१.४.१)
[१३.५] आङि चापः॥ (७.३.१०५)
[१२.९] आङो नाऽस्त्रियाम्॥ (७.३.११९)
[१८.११] आच्छीनद्योर्नुम्॥ (७.१.८०)
[१३.११] आटश्च(६.१.९०)
[१३.१०] आण्नद्याः॥ (७.३.११२)
[१२.६] आतो धातोः॥ (६.४.१४०)
[११.११] आदेशप्रत्यययोः॥ (८.३.५९)
[१६.७] आद्यन्तवदेकस्मिन्॥ (१.१.२०)
[११.१६] आमि सर्वनाम्नः सुट्॥ (७.१.५२)
[१४.१३] इकोऽचि विभक्तौ॥ (७.१.७३)
[१५.४] इग्यणः सम्प्रसारणम्॥ (१.१.४५)
[१६.१७] इतोऽत् सर्वनामस्थाने (७.१.८६)
[१६.१] इदमो मः॥ (७.२.१०८)
[१३.१२] इदुद्भ्याम्॥ (७.३.११७)
[१६.२] इदोऽय् पुंसि॥ (७.२.१११)
[१६.१३] उगिदचां सर्वनाम ०॥ (७.१.७०)
[१८.८] उभे अभ्यस्तम्॥ (६.१.५)
[१०.१५] एकवचनं सम्बुद्धिः॥ (२.३.४९)
[१७.१५] एकवचनस्य च॥ (७.१.३२)
[१५.३] एकाचो बशो भष्०॥ (८.२.३७)
[१४.९] एकाजुत्तरपदे णः॥ (८.४.१२)
[१०.१६] एङ्ह्रस्वात्सम्बुद्धेः॥ (६.१.६७)
[१८.६] एत ईद्बहुवचने (८.२.८१)
[१२.१८] एरनेकाचोऽसंयोगपूर्वस्य॥ (६.४.८२)
[११.८] ओसि च॥ (७.३.१०४)
[१३.३] औङ आपः॥ (७.१.१८)
[१२.१५] औतोऽम्शसोः॥ (६.१.९३)
[१५.१७] किमः कः॥ (७.२.१०३)
[१०.२] कृत्तद्धितसमासाश्च॥ (१.२.४६)
[१२.१३] गोतो णित्॥ (७.१.९०)
[१२.१०] घेर्ङिति॥ (७.३.१११)
[१२.११] ङसिङसोश्च॥ (६.१.११६)
[११.१५] ङसिङ्योः स्मात्स्मिनौ॥ (७.१.१५)
[१३.९] ङिति ह्रस्वश्च॥ (१.४.६)
[१७.२] ङे प्रथमयोरम्॥ (७.१.२८)
[१३.७] ङेराम्नद्याम्नीभ्यः॥ (७.३.११६)
[११.४] ङेर्यः॥ (७.१.१३)
[१०.५] ङ्याप्प्रातिपदिकात्॥ (४.१.१)
[१५.७] चतुरनडुहोरामुदात्तः (७.१.९८)
[१०.११] चुटू॥ (१.३.७)